ॐ अर्हं

॥ श्रीजिनलाभसूरिविरचित ॥

# ॥ श्रीआत्मप्रबोधः ॥

3971



प्रकाशक—

श्री जैनधर्मप्रसारकसभा–भावनगर

*
* *

वीर संवत् २४६३ ]       [ विक्रम संवत् १९९३

किंमत रु. १–८–०

मुद्रकः—शा. गुलाबचंद लल्लुभाइ, श्री महोदय प्रिन्टींग प्रेस, दाणापीठ–भावनगर.

## निवेदन.

आ आत्मप्रबोध ग्रंथ श्रीजिनलाभसूरिविरचित घणो ज उपयोगी अने असरकारक छे. तेना चार प्रकाश छे. तेमां शुं शुं आपेल छे ते आ साथे आपेली प्रस्तावना तथा अनुक्रमणिकाथी जाणी शकाशे. एकंदर आ ग्रंथ श्रावकवर्ग तेम ज मुनिवर्ग बंनेने उपयोगी छे.

आ ग्रंथनी ५०० नकलो मुनिराजश्री मंगळविजयजी महाराजना उपदेशथी श्री शीहोर तथा भावनगरना संघ तरफथी मळेली सहायथी छपाववामां आवी छे. तेमनी संमति मेळवीने वेचाणथी लाभ लेवा इच्छनार माटे अमे ५०० नकलो वधारे कढावी छे.

आ ग्रंथना पृष्ठ १५९/१ उपर अहिंसाना ६० नाम लखतां प्रथमना ४ अने छेला १४ कुल १८ नामो लख्या छे परंतु ते संपूर्ण साठ नामो श्रीप्रश्नव्याकरणसूत्रमांथी मळी आवतां अहीं लख्या छे.

१ निर्वाण, २ निर्वृत्ति, ३ समाधि, ४ शांति, ५ कीर्त्ति, ६ कांति, ७ रति, ८ विरति, ९ श्रुतांग, १० तृप्ति, ११ दया, १२ विमुक्ति, १३ क्षांति, १४ सम्यक्त्वाराधना, १५ महती(अहिंसा), १६ बोधि, १७ बुद्धि, १८ धृति, १९ समृद्धि, २० ऋद्धि, २१ वृद्धि, २२ स्थिति, २३ पुष्टि, २४ नंदा, २५ भद्रा, २६ विशुद्धि, २७ लब्धि, २८ विशिष्टदृष्टि, २९ कल्याण, ३० मंगळ, ३१ प्रमोद, ३२ विभूति, ३३ रक्षा, ३४ सिद्धावास, ३५ अनाश्रव, ३६ केवलीस्थान, ३७ शिव, ३८ समिति, ३९ शील, ४० संयम, ४१ शीलपरिग्रह, ४२ संवर, ४३ गुप्ति, ४४ व्यवसाय, ४५ उच्छ्रय, ४६ यज्ञ, ४७ आयतन, ४८ यजन, ४९ अप्रमाद, ५० आश्वास, ५१ विश्वास, ५२ अभय, ५३ अमारि, ५४ मोक्ष, ५५ पवित्र, ५६ शुचि, ५७ पूता, ५८ विमल, ५९ प्रभास, ६० निर्मलतर.

आ ग्रंथ शास्त्री जेठालाल हरिभाइ पासे सारी रीते शुद्ध करावेल छे छतां रही गयेल अशुद्धि माटे क्षमायाचना छे.

भाद्रपद शुक्ला अष्टमी सं० १९९३

श्री जैन धर्म प्रसारक सभा भावनगर.

# प्रस्तावना

ॐ अर्हं । चिदांकुर्वन्तु नीतिपथपथिका धर्मरसामृतपिपासवो मुमुक्षवोऽदूरभव्याः-जन्म-जरा-व्याधि-मरणादिदुःखपूरितेऽस्मिन्ननाद्यनन्ते भवारण्ये पर्यटतां प्राणिनां विना शिवपुरप्राप्तिं नास्त्येव निर्वृतिः, तत्प्राप्तिश्च ज्ञानदर्शनचारित्ररूपसन्मार्गं विहाय न कस्यापि भूता भवति भविष्यति च, तल्लाभश्च सद्गुरुसार्थवाहादृते न जायत एव, सद्गुरवश्चाप्तप्ररूपितागमज्ञानचक्षुष एव सन्मार्गोपदेशका भवन्ति, तदुपदेशश्च चरणकरणानुयोगेन द्रव्यानुयोगेन गणितानुयोगेन कथानुयोगेन चेति चतुर्धा कथितस्तीर्थंकरादिभिरित्ययमुपदेशः श्रीजिनलाभसूरिवरैः श्रीआत्मप्रबोधेत्यन्वर्थनाम्ना चरणकरणानुयोगेन कथानुयोगाद्यन्तर्गतेन दर्शितो भव्योपकारचिकीर्षुभिर्महात्मभिः ॥

ग्रन्थकर्तारश्चेमे सूरयः कदा कस्मिन्नगरे कुले च किंनामानः कौ चैषां पितरौ कदा च दीक्षा के च दीक्षागुरवः कदा च सूरिपदप्राप्तिः केषां चान्येषां ग्रन्थानां कर्तार एते का च कीदृशी च शिष्यप्रशिष्यादिसन्ततिरेषामित्यादिजिज्ञासायां किमपि न ज्ञायते, केवलं प्रशस्तित इदं ज्ञायते-खरतरगच्छीयश्रीजिनभक्तिसूरिशिष्या एते ग्रन्थकर्तारः श्रीजिनलाभसूरयः श्रीमनराख्यविदरे ग्रन्थमिमं हुताशमध्यावसुचन्द्र ( १८३३ ) वत्सरे समापयन्निति ॥

अथात्मबोध इत्यस्य कः शब्दार्थः ? इति जिज्ञासायां ग्रन्थकर्तॄणामेवायमुल्लेखः-" बोधनं-वस्तुनो यथास्थितस्वरूपेण ज्ञानं बोधः, आत्मनोऽनन्तरोक्तलक्षणस्य चेतनस्य तदभिन्नसम्यक्त्वादिधर्मस्य च बोध आत्मबोधः, एतत्प्रतिपादको ग्रन्थोऽपि उपचारादात्मबोध इत्युच्यते " इति । तथा चात्मबोधस्य माहात्म्यमपि तैरेवोक्तम्-" यस्य प्राणिन आत्मबोधो जातः, स प्राणी परमानन्दमग्नत्वात्

सांसारिकसुखाभिलाषी कदापि न भवति, तस्याल्पत्वादस्थिरत्वाच्च" इत्यादि। "तथाऽऽत्मबोधाभावे प्राणी पशुतुल्य एव, तस्य सिद्धिगतिर्दूर एव वर्तते नरकादिपातश्च सुलभ एव, आत्मबोधे च सति सिद्धिगतिः सुलभा भवतीत्यादि" सविस्तरमत्र दर्शितं पीठिकायां ॥

प्रकाशः १—अथास्यात्मबोधस्योत्पत्तौ मुख्यं कारणं सम्यक्त्वमेवेति सम्यक्त्वस्वरूपप्रतिपादनाय प्रथमः प्रकाशः प्रकाशितः । तत्र च प्रथमं सम्यक्त्वोत्पत्तिरीतिमभिधायादौ सम्यक्त्वस्यैकविध-द्विविध-त्रिविधादिभेदान्निरूप्य तेषां कालनियमादि धर्मकार्येषु प्राधान्यत्वं च प्रोक्तं, ततः सम्यक्त्वस्य सप्तषष्टिं भेदान् नामतः कथयित्वा एकैकस्य भेदस्य सविस्तरमर्थं निरूप्य तस्य सम्यग्ज्ञानार्थं क्वचित्संक्षिप्ताः क्वचिच्च विस्तृता दृष्टान्ताः प्रोक्ताः । तत्र दशधाविनयप्ररूपणायां तीर्थंकरविनयविषये जिनबिम्बभेदाः, शाश्वतजिनचैत्यबिम्बानां सर्वजिनचैत्यबिम्बानां च संख्या, जिनबिम्बानां परिकरादि, प्रतिमापूजाविधिः, पंचाष्टविधत्वादिपूजाभेदाः, देवद्रव्यदीपकाद्युपयोगनिषेध इत्यादिविषयाः सविस्तरं सशास्त्रं निरूपिताः । इति ॥

प्रकाशः २—सम्यक्त्वमूलकात्मबोधलाभे सति केषांचिदासन्नभव्यानां चारित्रमोहनीयकर्मक्षयोपशमतो देशविरत्यादिलाभः संपद्यते इति द्वितीयो देशविरतिप्रकाशः प्रकटितः। देशविरतिश्चाप्रत्याख्यानक्रोधमानमायालोभलक्षणेषु चतुर्षु कषायेषु क्षीणोपशान्तेषु सत्सु सम्यक्त्वयुक्तेन मनुष्येण तिरश्चा वा लभ्यते, न तु देवनारकाभ्यां, एतयोरेतत्प्राप्त्यसंभवात् । किं च सम्यक्त्वप्राप्तिसमयभाविनी या कर्मस्थितिस्तन्मध्यात्पल्योपमपृथक्त्वलक्षणस्थितिक्षये सति देशविरतिः प्राप्यते । स च देशविरतिमान् श्रावक एकविंशतिगुणधारको भवतीति तस्यैकविंशतिर्गुणाः प्रथममभिधीयन्ते । ततो देशविरतियोग्यान् प्रदर्श्याणुव्रतगुणव्रतशिक्षाव्रतरूपद्वादशव्रतनामानि कथितानि । तत्र तावदहिंसाव्रते संपूर्णविंशतिविशोपकप्रमिताहिंसावतो मुनेरपेक्षया श्रावकस्य सपादविशोपकमात्रैवाहिंसा संभव-

तीति तत्स्वरूपमभिहितम् । द्वितीये स्थूलमृषावादविरतिव्रते कन्यालीकादिविरतिरुक्ता । एवं पञ्चाप्यणुव्रतान्युक्त्वा त्रीणि गुणव्रतानि चत्वारि च शिक्षाव्रतानि कथितानि । तत्र सप्तमे भोगोपभोगव्रते भोगतो द्वाविंशतिरभक्ष्याणि उपभोगतश्च पञ्चदश कर्मादानान्युक्तानि । द्वादशेऽतिथिसंविभागव्रते दानस्य दूषणपञ्चकं भूषणपञ्चकं च निरूपितम् । दानप्रसंगाच्च तीर्थंकरदानविधिस्तत्प्रसंगाच्चाभव्यकुलकं दर्शितम् । ततो द्वादशानां व्रतानां भङ्गषट्कं तद्भेदाश्च दर्शिताः । तत्र आनन्दादिदशश्रावकाणां संक्षिप्ता वृत्तान्ताः कथिताः । ततः श्रावकाणामेकादशप्रतिमास्वरूपं, रात्रिभोजनत्यागः, श्रावकनिवासयोग्यस्थानं, धर्मे दृढता, अहोरात्रकृत्यानि, प्रमादत्याग इत्याद्युपयुक्तविषयाः सविस्तरा दर्शिता इति ॥

प्रकाशः ३—अत्र प्रकाशे क्रमायातं सर्वविरतिस्वरूपं निरूपितम् । तत्र प्रत्याख्यानावरणकषायचतुष्कक्षयोपशमात् मनुष्यः सर्वविरतियोग्यो भवति। तत्र प्रथमं सर्वविरतिप्रतिपत्तौ पुंस्त्रीनपुंसकानां बालवृद्धाद्यष्टादशानां विंशतेः । दशानां च दीक्षाऽनर्हत्वं शेषाणां च दीक्षाऽर्हत्वं प्रतिपादितं। ततः क्षान्त्यादिदशविधयतिधर्मस्वरूपं प्रोक्तं। ततोऽनशनादिषड्विधं बाह्यतपः प्रायश्चित्तादिषट्प्रकारमाभ्यन्तरतपो दर्शितं, तत्रालोचनादिदशप्रकारं प्रायश्चित्तं, एवं विनयादीनामपि भेदाः प्रोक्ताः, तत्रापि स्वाध्याये लिङ्गत्रयादीनि षोडश वचनानि अवश्यादरणीयानि कथितानि । ततः सप्तदशविधं संयमस्वरूपं सविस्तरं निरूपितं । ततो मुनिधर्मे सर्वथा प्रमादत्याग उक्तः, स्तोकस्यापि च प्रमादस्य महान् दोषः प्ररूपितः । ततोऽनित्यादिद्वादशभावनास्वरूपं मनोनिग्रहायावश्यमादरणीयतया प्रोक्तं । तत्रापि षष्ठ्यामशुचिभावनायां गर्भाधानादौ विशेषतोऽशुचित्वं बहुहिंसानिबन्धनत्वं च दर्शितं, तत्प्रसंगतश्च स्त्रीपुरुषशरीरमध्यवर्तिमांसशोणितादिसप्तधातुस्नायुपंक्तिकादिसर्वावयवस्वरूपं सूक्ष्मबुद्धिगम्यं महाऽशुचिस्थानं प्रदर्शितं, यद्वाचनेन वाचकस्यावश्यं देहादौ विरक्तत्वं भवति।

द्वादश्यां भावनायां भगवद्वाणीमाहात्म्यं दर्शितमस्ति यच्छ्रवणेन तद्वचसि सर्वेषां सुश्रद्धा जायते। ततः साधोर्द्वादश प्रतिमाः, पञ्चविध तुलना, अहोरात्रकृत्यं, मुनिगुणाः, धर्मरत्नस्य दुर्लभता, इत्याद्यनेकविषया विषयीकृताः सविस्तरा इति॥

प्रकाशः ४—अत्र प्रकाशे परमात्मस्वरूपं निरूपितं, स च द्विधा—भवस्थपरमात्मा सिद्धपरमात्मा च, तत्र भवस्थपरमात्मानो द्विधा—जिना अजिनाश्च, तत्राजिनाः सामान्यकेवलिनः, जिनाश्च तीर्थंकराः। ते च नामस्थापनाद्रव्यभावैश्चतुर्धा, तत्स्वरूपं प्रथमं दर्शितं। तत्रापि स्थापनाजिनममन्यमाना जैनाभासा यत्किंचित्कुयुक्तियुक्तमुत्सूत्रं च भाषन्ते तत्प्रथमं प्रदर्श्य पश्चात्तन्निरासार्थं सुयुक्तिपूर्वकमागमपाठसहितं च सविस्तरं सदृष्टान्तं विवेकिजनाङ्गीकरणीयं दर्शितं, तत्र चोपयुक्तत्वाज्जिनपूजासिद्ध्यर्थं प्रश्नव्याकरणसूत्रे प्रोक्तानि अहिंसायाः षष्टिर्नामानि दर्शितानि, तथा च सूत्रकृताङ्गादिप्रमाणान्यपि संदर्श्य जिनपूजायाः सिद्धिः कृताऽस्ति, नागभूतयक्षादिपूजायाश्च हिंसात्वमुक्तमस्ति, इत्यादि बहुविस्तरेण स्थापनानिक्षेपजिनप्रतिमापूजाविषयौ साधितौ। तथा च मूलसूत्रस्यैव प्रामाण्यं निर्युक्तिभाष्यचूर्णिवृत्त्यादीनां चाप्रामाण्यं मन्यमानास्ते जैनाभासा युक्त्यादिना निराकृता इति। ततः केवलिनामाहारविषयः प्रदर्शितः। ततः सिद्धस्वरूपप्रतिपादने प्रथममीषत्प्राग्भारपृथिव्याः स्वरूपं लोकान्तस्वरूपं च कथयित्वा सिद्धानां स्थानं दर्शितं, तत्र सिद्धानामूर्ध्वगमनमुत्कृष्टादित्रिभेदमवगाहनास्वरूपं शरीरादिराहित्यं च निरूपितम्। ततः केवलज्ञानदर्शनयोरविशेषः सिद्धानामनन्तसौख्यं तेषामेकत्रिंशद्गुणवत्त्वं च दर्शितमिति।

अस्मिन् प्रकाशचतुष्टये प्रतिविषयं प्रायः संक्षिप्ततरदृष्टान्ताः शास्त्रप्रसिद्धास्तत्तद्विषयज्ञानश्रद्धानादिदार्ढ्यार्थं कथिताः, सर्वे विषयाश्च शास्त्रयुक्तिविवेचनसहिता निरूपिता इत्यलं विस्तरेण॥

ततः प्रकाशचतुष्टयानन्तरं प्रशस्तौ सुधर्मगणधरान्वयपरंपरायां चान्द्रकुले उद्योतन–वर्धमान–जिनेश्वर–जिनचन्द्रा–भयदेवादिसूरिनामानि विलिख्यान्ते जिनभक्तिसूरिशिष्येण श्रीजिनलाभसूरिणाऽयमात्मबोधनामा ग्रन्थः संवत् १८३३ संवत्सरे कार्तिकशुक्लपञ्चमीदिने श्रीमनराख्यबिंदरे ग्रथित इत्यादि लिखितमस्तीति ॥

ग्रन्थोऽयं शाश्वतमोक्षसुखाभिलाषिणां सर्वेषां प्राणिनां महानुपकारक इति वाचकश्रोतृवर्ग एव तत्प्रतीतिं करोत्विति प्रार्थयामहे । अयं च ग्रन्थः पुरा श्रीजामनगरनिवासिना शा. हीरालाल–हंसराजेन स्वमुद्रणालये मुद्रितः, ततोऽधुनाऽस्य बहूपयोगित्वात् परमोपकारिश्रीमुक्तिविजयगणिशिष्यचारित्रपरायणमुनिराजश्रीगुलाबविजयान्तेवासिमुनिश्रीमंगलविजयसदुपदेशेन श्रीद्वीपभावनगरग्रामस्थश्रावकदत्तद्रव्यसाहाय्येन मुद्रापितोऽस्माभिः । अस्य च मुद्रितग्रन्थस्य शुद्धिकरणे मुनिश्रीमंगलविजयेन हस्तलिखितप्रतिद्वयं दत्तं, तदनुसारेण ससच्छास्त्रिणा जेठालालशर्मणा स्वक्षयोपशमानुसारेण प्रयत्नः कृतः, मयाऽप्यस्य ग्रन्थस्य शास्त्रविषयत्वाद्यथाशक्ति शुद्धादिविषये प्रूफवाचनेऽपि च साहाय्यं दत्तमस्ति, तथापि छद्मस्थत्वादिकारणेन मुद्रणकृत्स्खलितेन वा यत्र कुत्रापि अशुद्ध्यादि प्रतिभाति विदुषां, तत्र तत्र कृपया शोधयित्वा वयं ज्ञापनीयाः, येन पुनर्मुद्रापणसमये दत्तावधाना भवाम इति प्रार्थयते मुद्रापकः । इति शम् ॥

भाद्रपद शुक्ल ५ संं० १९९२

शा. कुंवरजी आणंदजी.
भावनगर.

# अनुक्रमणिका

॥ इति प्रथमः प्रकाशः ॥

। अथ द्वितीयः प्रकाशः ।

॥ इति द्वितीयः प्रकाशः ॥

। अथ तृतीयः प्रकाशः ।

॥ ॐ अर्हम् ॥

श्रीजिनलाभसूरिविरचितः

# ॥ श्रीआत्मप्रबोधः ॥

अनंतविज्ञानविशुद्धरूपं, निरस्तमोहादिपरस्वरूपं ।
नरामरेंद्रैः कृतचारुभक्तिं, नमामि तीर्थेशमनंतशक्तिं ॥ १ ॥
अनादिसंबद्धसमस्तकर्म-मलीमसत्वं निजकं निरस्य ।
उपात्तशुद्धात्मगुणाय सद्यो, नमोऽस्तु देवार्यमहेश्वराय ॥ २ ॥
जगत्त्रयाधीशमुखोद्भवाया, वाग्देवतायाः स्मरणं विधाय ।
विभाव्यतेऽसौ स्वपरोपकृत्यै, विशुद्धिहेतुः शुचिरात्मबोधः ॥ ३ ॥

अथ तावद् ग्रंथादौ संक्षिप्तरुचिनाऽपि प्रायः शिष्टसमयसमाचरणाय समाप्तिप्रतिबंधकीभूतप्रभूतप्रत्यूहव्यूहव्यपोहाय चात्यंताव्यभिचारि समुचितेष्टदेवस्तवादिस्वरूपं भावमंगलमवश्यं कर्त्तव्यमिति विभाव्येहापि शास्त्रादौ समस्ततीर्थेशप्रणतिपूर्वका-

सन्नोपकारकशासनाधीश्वरश्रीवीरपरमेश्वरनमस्कारकरणवाग्देवतास्मरणस्वरूपं भावमंगलमाश्रीयते, तथा श्रोतृजनप्रवृत्त्यर्थं प्रयोजनाभिधेयसंबंधत्रितयमपि नियमाद्वाच्यं, आत्मज्ञानस्य निःश्रेयसप्रापकत्वेन सर्वेषामप्युपकारकत्वात्। अत्र 'स्वपरोपकृत्यै' इत्येतत्पदेन स्वपरोपकाररूपं प्रयोजनं निर्दिश्यते, तथा 'आत्मबोध' इत्यनेनातिविशुद्धात्मज्ञानमार्गोऽभिधेयतया निरूप्यते, तथा संबंधस्तु वाच्यवाचकभावादिः, स च 'आत्मबोधो विभाव्यते' इत्यनेन संसूच्यते। तत्रात्मबोधस्वरूपं वाच्यं, ग्रंथोऽयं वाचक इत्याद्यत्र बहु वक्तव्यमस्ति, तत्सुधीभिः स्वयमेव ग्रंथांतरेभ्योऽवसेयं, ग्रंथगौरवभिया इहानुक्तत्वादिति।

अथ प्राक् सामान्यत उपदर्शितमभिधेयमेव विविच्य दर्श्यते—

प्रकाशमाद्यं वरदर्शनस्य, ततश्च देशाद्विरतेर्द्वितीयं।
तृतीयमस्मिन् सुमुनिव्रतानां, वक्ष्ये चतुर्थं परमात्मतायाः ॥ १ ॥

वरदर्शनस्येति सम्यग्दर्शनस्येत्यर्थः, अस्मिन्निति ग्रंथे इति शेषः, एतेन परस्परसुसंबद्धसम्यक्त्वादिस्वरूपप्रतिपादकप्रकाशचतुष्टयोपनिबद्धोऽसावात्मप्रबोधग्रंथ इति सूचितं। अथास्याधिकारिणः प्रदर्श्यंते—

न सत्यभव्या न हि जातिभव्या, न दूरभव्या बहुसंसृतित्वात्।
मुमुक्षवोऽभूरिभवभ्रमं हि, आसन्नभव्यास्त्वधिकारिणोऽत्र ॥ २ ॥

इदमत्र तात्पर्य-इह तावदुरंतानंतचतुर्गतिस्वरूपअसारसंसारे प्रशस्तसमस्तजगज्जंतुचित्तचमत्कारकारिपुरंदरादिसुंदरसुरासुरनिकरविरचितप्रकृष्टाष्टमहाप्रातिहार्यादिनिःशेषातिशयसमन्वितेन जगद्गुरुणा श्रीवीरजिनेंद्रेण निखिलघनघातिकर्मदलपटलव्यपगमसमुद्भूतसकललोकालोकलक्षणलक्ष्यावलोकनकुशलविमलकेवलज्ञानबलेन त्रिविधा जीवा विनिर्दिष्टाः। तथाहि—भव्या १, अभव्या २, जातिभव्याश्च ३, तत्र ये जीवाः कालादिसमवायसामग्रीं संप्राप्य, स्वशक्त्या सकलकर्माणि क्षपयित्वा मुक्तिं ययुर्यांति यास्यंति च, ते सर्वेऽपि कालत्रयापेक्षया भव्या इति व्यपदिश्यंते १। ये पुनर्जीवाः सत्यामपि आर्यक्षेत्रादिसामग्र्यां तथाविधजातिस्वभावत एव सर्वदा तत्त्वश्रद्धानवैकल्यात् कदापि मुक्तिं न गता न गच्छंति न गमिष्यंति च ते अभव्या इत्युच्यंते ॥

## ॥ अथ प्रथमः प्रकाशः ॥

मुक्तिगमने हि मूलकारणं सम्यक्त्वमेवास्ति। यदुक्तं—

दंसणभट्ठो भट्ठो, दंसणभट्ठस्स नत्थि निव्वाणं। सिज्झंति चरणरहिया, दंसणरहिया न सिज्झंति ॥ १ ॥

चरणरहिय त्ति द्रव्यचारित्ररहिता इत्यर्थः २। तथा पुनर्ये जीवा अनादिकालाश्रितसूक्ष्मभावपरित्यागेन बादरभावं नैवागच्छंति, तर्हि अवश्यमेव सिद्ध्यंति, परं सकलसंस्कारकारकाविषयीभूतखन्यंतर्गतसंस्कारयोग्यपाषाणवत् सूक्ष्मभावं परित्यज्य कदापि अव्यवहारराशिखनितो बहिर्निर्गता नागच्छंति नागमिष्यंति च ते जातिभव्या इत्यभिधीयंते, इमे हि कथनमात्रेणैव भव्याः, न तु सिद्धसाधकत्वेनेति भावः। यदुक्तमागमे—

सामग्गिअभावाओ, ववहारियरासिअप्पवेसाओ । भव्वा वि ते अणंता, जे सिद्धिसुहं न पावंति ॥ १ ॥

तत्र अभव्या जातिभव्याश्च विशुद्धश्रद्धानविकलत्वेन नेहाधिकारिणस्ततोऽवशिष्टा भव्या एव, ते पुनर्द्विविधाः–दूरभव्या आसन्नभव्याश्च, तत्रार्द्धपुद्गलपरावर्त्तादधिकसंसारवर्तिनो ये जीवास्ते दूरभव्या इत्युच्यंते । तेषां च प्रबलतरमिथ्यात्वोदयेन कियत्कालं सम्यग्दर्शनादिप्राप्तेरभावादस्मिन्नपारसंसारकांतारे चिरं पर्यटतामात्मबोधसद्धर्ममार्गो दुर्लभ एव । ये तु किंचिदूनार्द्धपुद्गलपरावर्त्तमध्यवर्त्तिनो जीवास्ते आसन्नभव्या उच्यंते । तेषां च लघुकर्मत्वेन तत्त्वश्रद्धानं सुलभमतस्ते आसन्नभव्या एवात्राधिकारिण इति स्थितं । अथासन्नभव्योपकाराय किंचिदात्मबोधस्वरूपं निरूप्यते–तत्र अतति सातत्येन गच्छति तांस्तान् भावानित्यात्मा । स च त्रिविधः–बहिरात्मा, अंतरात्मा, परमात्मा च । तत्र यो मिथ्यात्वोदयवशतस्तनुधनपरिवारमंदिरनगरदेशमित्रशत्रवादीष्टानिष्टवस्तुषु रागद्वेषबुद्धिं दधाति, पुनः सर्वाण्यप्यसारवस्तूनि सारतया जानाति, स प्रथमगुणस्थानवर्ती जीवो बाह्यदृष्टितया बहिरात्मा इत्युच्यते ॥ १ ॥

अथ यस्तत्त्वश्रद्धानसमन्वितः सन् कर्मबंधनिबंधनादिस्वरूपं सम्यग् जानाति, यतोऽयं जीवोऽस्मिन् संसारे मिथ्यात्वाविरतिकषाययोगैः कर्मबंधहेतुभिरनुसमयं कर्माणि बध्नाति, तानि च यदा उदयमागच्छंति, तदाऽसौ स्वयमेव भुंक्ते, न कोऽप्यन्यो जनः सहायतां यातीत्यादि, तथा किंचिद्द्रव्यादिवस्तुनि गते सति एवं चिंतयति–'ममानेन परवस्तुना सह संबंधो नष्टः, मदीयं द्रव्यं तु आत्मप्रदेशसमवेतं ज्ञानादिलक्षणं, तत्तु कुत्रापि न गच्छतीति ।' तथा किंचिद्द्रव्यादिवस्तुलाभे सति एवं जानाति 'ममायं पौद्गलिकवस्तुनः संबंधो जात एतस्योपरि कः प्रमोद' इति । पुनर्वेदनीयकर्मोदयात्कष्टादिप्राप्तौ सत्यां समभावं

दधाति आत्मानं च परभावेभ्यो भिन्नं मत्वा तेषां त्यजनोपायं करोति, चेतसि पुनः परमात्मानं ध्यायति, आवश्यकादिधर्मकृत्येषु विशेषत उद्यमवान् भवति, स चतुर्थादिद्वादशपर्यंतगुणस्थानवर्ती जीवो अंतर्दृष्टितया अंतरात्मा इत्युच्यते ॥ २ ॥

अथ पुनर्यः शुद्धात्मस्वभावप्रतिबंधकान् कर्मशत्रून् हत्वा निरुपमोत्तमकेवलज्ञानादिस्वसंपदं प्राप्य करतलामलकवत् समस्तवस्तुस्तोमं निःशेषेण जानाति, पश्यति च, परमानंदसंदोहसंपन्नश्च भवति, स त्रयोदशचतुर्दशगुणस्थानवर्ती जीवः सिद्धात्मा च शुद्धस्वरूपत्वेन परमात्मा इत्युच्यते ॥ ३ ॥

बोधनं वस्तुनो यथास्थितस्वरूपेण ज्ञानं बोधः, आत्मनो अनंतरोक्तलक्षणस्य चेतनस्य तदभिन्नमव्यक्तत्वादिधर्मस्य च बोध आत्मबोधः, एतत्प्रतिपादको ग्रंथोऽप्युपचारादात्मबोध इत्युच्यते, इत्यात्मबोधशब्दार्थः । अथात्मबोधस्य माहात्म्यं वर्ण्यते—यस्य प्राणिन आत्मबोधो जातः, स प्राणी परमानंदमग्नत्वात् सांसारिकसुखाभिलाषी कदापि न भवति, तस्याल्पत्वादस्थिरत्वाच्च, यथा कोऽपि जनो निखिलाभीष्टप्रतिपादनसमर्थं कल्पवृक्षं प्राप्य रूक्षाशनप्रार्थको न भवति तद्वदिति । तथा ये प्राणिन आत्मज्ञाने निरताः संति ते नरकादिदुःखं कदापि न लभंते, यथा सुवहमार्गानुगामी चक्षुष्मान् पुमान् कूपपातं न प्राप्नोति तद्वत् । पुनर्येनात्मबोधः प्राप्तस्तस्य बाह्यवस्तुसंसर्गेच्छा न जायते, यथा लब्धामृतस्वादस्य पुंसः क्षारोदकपानरुचिर्न भवति तद्वदिति ।

अथ यस्यात्मबोधो न जातः, स प्राणी मनुष्यदेहत्वात् नृगपुच्छाद्ययुक्तोऽपि पशुरेव बोध्यः, आहारनिद्राभयमैथुनयुक्तत्वेन पशुना समानधर्मत्वात् । तथा येन प्राणिना वस्तुगत्या आत्मा न ज्ञातस्तस्य सिद्धिगतिर्दूरे वर्त्तते, पुनस्तस्य परमात्मसं

पदो अनुपलक्षकत्वात् सांसारिकधनधान्यादिऋद्धिरेवौत्सुक्यकारणमस्ति। पुनस्तदाशानदी सदैवापूर्णा तिष्ठति। तथा पुनर्यावत्प्राणिनामात्मबोधो न जातस्तावद्भवसमुद्रो दुस्तरोऽस्ति, तावदेव हि मोहमहाभटो दुर्जयो विद्यते, तावदेव च कषाया अतिविषमाः सन्तीत्यतः सर्वोत्तम आत्मबोध इति स्थितं। अथ कारणं विना कार्योत्पत्तिर्न भवतीति न्यायादात्मबोधप्रादुर्भावे सद्भूतं किमपि कारणं वक्तव्यं, तच्च वस्तुतः सम्यक्त्वमेव संभवति, नान्यत्, सम्यक्त्वमंतरेणागमे तस्योत्पत्तेरश्रुतत्वात्, ततश्च सिद्धः सम्यक्त्वमूलक आत्मबोध इति। अथ सम्यक्त्वस्वरूपप्रतिपादनाय तावत्तदुत्पत्तिरीतिरभिधीयते–कश्चिदनादिमिथ्यादृष्टिर्जीवो मिथ्यात्वप्रत्ययमनंतान् पुद्गलपरावर्त्तान् यावदस्मिन्नपारसंसारगहने भ्रांत्वा भव्यत्वपरिपाकवशतो गिरिसरिद्वारिवेगोह्यमानपाषाणघोलनाकल्पेन कथमप्यनाभोगनिर्वर्त्तितयथाप्रवृत्तिकरणेन परिणामविशेषरूपेण प्रभूतं कर्म निर्जरयन्नल्पं च बध्नन् संज्ञित्वमायाधायुर्वर्जसप्तकर्माणि पल्योपमासंख्येयभागन्यूनैकसागरोपमकोटीकोटीस्थितिकानि करोति। अत्रांतरे जन्तोर्दुष्कर्मजनितो घनरागद्वेषपरिणामः कर्कशनिबिडचिरप्ररूढगुपिलवक्रग्रन्थिवद्दुर्भेदो अभिन्नपूर्वो ग्रन्थिर्भवति। इमं च ग्रन्थिं यावदभव्या अपि यथाप्रवृत्तिकरणेन कर्म क्षपयित्वा अनंतशः समागच्छन्ति, ग्रन्थिदेशे च वर्तमानोऽभव्यो भव्यो वा संख्येयमसंख्येयं वा कालं तिष्ठति, तत्र चाभव्यः कश्चिच्चक्रवर्त्तिप्रमुख्यनेकभूपतिक्रियमाणप्रवरपूजासत्कारसन्मानदानोत्तमसाधुनिरीक्षणाज्जिनऋद्धिदर्शनाद्वा स्वर्गसुखार्थित्वाद्वा दीक्षाग्रहणेन द्रव्यसाधुत्वं संप्राप्य, स्वमहत्वाद्यभिलाषेण भावसाधुवत्प्रत्युपेक्षणादिक्रियाकलापं समाचरति। क्रियाबलादेव चोत्कर्षतो नवमग्रैवेयकपर्यन्तमपि गच्छति। कश्चित्पुनरुत्कृष्टतो नवमपूर्वपर्यन्तं सूत्रपाठमात्रं, न त्वर्थतः, अभव्यानां पूर्वधरलब्धेरभावात्, द्रव्यश्रुतमपि लभते। भव्यो मिथ्यात्वी तु कश्चिद्ग्रन्थिदेशे स्थितो द्रव्य-

श्रुतं किंचिदूनानि दश पूर्वाणि यावल्लभते, अत एव किंचिदूनदशपूर्वांतं श्रुतं मिथ्याश्रुतमपि स्यात् मिथ्यात्विगृहीतत्वात् । यस्य च पूर्णानि दश पूर्वाणि श्रुतं स्याचस्मिन् नियमात्सम्यक्त्वं भवति । शेषे किंचिदूनदशपूर्वधरादौ सम्यक्त्वस्य भजना । यदुक्तं कल्पभाष्ये–' चउदस दस य अभिन्ने, नियमा सम्मं तु सेसए भयणा ' इति ।

एतदनंतरं कश्चिदेव महात्मा आसन्नपरमनिर्वृतिसुखः समुल्लसितप्रचुरदुर्निवारवीर्यप्रसरो निशितकुठारधारयेव अपूर्वकरणेन परमविशुद्ध्यध्यवसायविशेषरूपेण यथोक्तस्वरूपस्य ग्रन्थेर्भेदं विधायानिवृत्तिकरणं प्रविशति । तत्र च प्रतिसमयं विशुद्ध्यमानस्तान्येव कर्माणि नितरां क्षपयन्नुदीर्णं च मिथ्यात्वं वेदयन्ननुदीर्णस्य तु तस्योपशमलक्षणमंतर्मुहूर्त्तकालमानमंतरकरणं प्रविशति । तस्य चायं विधिर्यदुक्त–

अंतरकरणस्थितेर्मध्याद्दलिकं गृहीत्वा प्रथमस्थितौ प्रक्षिपति, एवं च प्रतिसमयं तावत् प्रक्षिपति यावदंतरकरणदलिकं सकलमपि क्षीयते, अंतर्मुहूर्त्तेन च कालेन सकलदलिकक्षयः, ततस्तस्मिन्ननिवृत्तिकरणे अवसिते उदीर्णे च मिथ्यात्वे अनुभवतः क्षीणे अनुदीर्णे च परिणामविशुद्धिविशेषेण निरुद्धोदये सति ऊषरदेशकल्पं मिथ्यात्वविवरमासाद्य, संग्रामे सुभटेंद्रो वैरिजयादत्यंताह्लादमिव परमानंदमयमपौद्गलिकमौपशमिकं सम्यक्त्वमधिगच्छति । तदा च ग्रीष्मतप्तस्य गोशीर्षचंदनरसेनेव तेन सम्यक्त्वेन तस्यात्मनि अत्यन्तशैत्यं प्रादुर्भवति, ततस्तत्र स्थितः सन् सत्तायां वर्त्तमानं मिथ्यात्वं विशोध्य पुंजत्रयरूपेणावश्यं व्यवस्थापयति ।

यथा हि कश्चिन्मदनकोद्रवानौषधविशेषेण शोधयति, ते च शोध्यमानाः केचिच्छुध्यंति केचिदर्धशुद्धा एव भवन्ति,

सम्यग्दृष्टिः सम्यक्त्वे मिथ्यादृष्टिश्च मिथ्यात्वे संक्रमयति। सम्यक्त्वपुद्गलांस्तु मिथ्यादृष्टिर्मिथ्यात्व एव संक्रमयति, न तु मिश्र इति। अपि च मिथ्यात्वेऽक्षीणे सम्यग्दृष्टयो नियमात्त्रिपुंजिनः, मिथ्यात्वे क्षीणे द्विपुंजिनः, मिश्रे क्षीणे एकपुंजिनः, सम्यक्त्वे तु क्षीणे क्षपका भवंतीति। अन्यच्च कार्मग्रन्थिकाभिप्रायेण प्रथमं संप्राप्तसम्यक्त्वो जीवः सम्यक्त्वपरित्यागान्मिथ्यात्वं गतः सन् पुनरपि सर्वा उत्कृष्टस्थितीः कर्मप्रकृतीर्बध्नाति, सैद्धांतिकाभिप्रायतस्तु भिन्नग्रन्थेः सम्यक्त्विनो मिथ्यात्वं गतस्यापि उत्कृष्टः स्थितिबंधो न स्यादेवेति। अत्र सम्यक्त्वविचारे बहुतरं वाचिक्यमस्ति, तद् ग्रन्थगौरवभयादिहानुक्तत्वाद् ग्रन्थान्तरेभ्योऽवसेयं ॥ अथ कतिविधं सम्यक्त्वं भवतीत्याशंक्य तद्भेदाः प्रदर्श्यन्ते—

एगविह १ दुविह २ तिविहं ३, चउविहं ४ पंचविहं ५ दसविहं १० सम्मं।
होइ जिणणायगेहिं, इइ भणियं णंतनाणीहिं ॥ १ ॥

व्याख्या—एकविधं द्विविधं त्रिविधं चतुर्विधं पंचविधं दशविधं च सम्यक्त्वं भवति, इति भणितं अनंतज्ञानिभिर्जिननायकैरिति। तत्रैकविधं तु तत्त्वरुचिरूपं सम्यक्त्वं प्रोक्तं श्रीजिनोपदिष्टजीवाजीवादिपदार्थेषु सम्यक्श्रद्धानरूपमित्यर्थः। द्विविधं पुनर्द्रव्यतो भावतश्च, तत्र ये विशोधिविशेषेण विशुद्धिकृता मिथ्यात्वपुद्गलास्तद् द्रव्यसम्यक्त्वं, यस्तु तदुपष्टंभोपजनितो जीवस्य जिनोक्ततत्त्वरुचिपरिणामस्तद्भावसम्यक्त्वं। यद्वा परमार्थमजानतो भव्यस्य यज्जिनवचनतत्त्वश्रद्धानं तद् द्रव्यसम्यक्त्वं, यत्पुनः परमार्थं विजानत एतद्भवति तद्भावसम्यक्त्वं। तथा नैश्चयिकव्यावहारिकभेदतोऽपि द्विविधं सम्यक्त्वं, तत्र ज्ञानदर्शनचारित्ररूपो य आत्मनः शुभपरिणामस्तन्नैश्चयिकं, ज्ञानादिपरिणामतोऽभिन्नत्वादात्मा एव वा नैश्चयिकं सम्यक्त्वं। यदुक्तं—

केचित्त्वपि सर्वथैव न शुध्यंति, एवं जीवोऽप्यध्यवसायविशेषतो जिनवचनरुचिप्रतिबंधकदुष्टरसोच्छेदकरणेन मिथ्यात्वं शोधयति, तदपि शोध्यमानं शुद्धमर्धशुद्धमशुद्धं च त्रिधा जायते, तत्स्थापना यथा–○◐● तत्र शुद्धः पुंजः सर्वज्ञधर्मे सम्यक्प्रतिपत्त्यप्रतिबंधकत्वात्सम्यक् पुंजः उच्यते, द्वितीयस्तु अर्द्धशुद्ध इति मिश्रपुंज उच्यते, तदुदये तु जिनधर्मे औदासीन्यमेव भवति। अशुद्धस्तु अर्हदादिषु मिथ्याप्रतिपत्तिजनकत्वान्मिथ्यात्वपुंजोऽभिधीयते। तदेवमंतरकरणेन अंतर्मुहूर्त्तकालमौपशमिकसम्यक्त्वेऽनुभूते तदनंतरं नियमादसौ शुद्धपुंजोदये क्षायोपशमिकसम्यग्दृष्टिः १, अर्द्धशुद्धपुंजोदये मिश्रः २, अशुद्धपुंजोदये सास्वादनस्पर्शनपूर्वकं मिथ्यादृष्टिर्भवति ३। किं च प्रथमं सम्यक्त्वे लभ्यमाने कश्चित्सम्यक्त्वेन सह देशविरतिं सर्वविरतिं वा प्रतिपद्यते। उक्तं च शतकबृहच्चूर्णौ—

"उवसमसम्मद्दिट्ठी अंतरकरणट्ठिओ कोइ देसविरइं पि लहइ, कोइ पमत्तभावं पि, सासायणो पुण न किंपि लहेइ त्ति"

एष कार्मग्रन्थिकाभिप्रायः, सैद्धांतिकाभिप्रायः पुनरयं–अनादिमिथ्यादृष्टिः कोऽपि ग्रन्थिभेदं विधाय, तथाविधतीव्रपरिणामोपेतत्वेनापूर्वकरणमारूढः सन् मिथ्यात्वं त्रिपुंजीकरोति। ततोऽनिवृत्तिकरणसामर्थ्यात् शुद्धपुञ्जपुद्गलान् वेदयन्नौपशमिकं सम्यक्त्वमलब्ध्वैव प्रथमत एव क्षायोपशमिकसम्यग्दृष्टिर्भवति। अन्यस्तु कश्चिज्जीवो यथाप्रवृत्त्यादिकरणत्रयक्रमेणांतरकरणाद्यसमये औपशमिकं सम्यक्त्वं लभते, पुंजत्रयं चासौ न करोत्येव, ततश्च औपशमिकसम्यक्त्वाच्च्युतोऽवश्यं मिथ्यात्वमेव गच्छतीति, इह तत्त्वं पुनस्तत्त्वज्ञा विदंति। अथ कल्पभाष्योक्तः पुंजत्रयसंक्रमविधिर्दर्श्यते—

मिथ्यात्वदलिकात् पुद्गलानाकृष्य सम्यग्दृष्टिः प्रवर्द्धमानपरिणामः सन् सम्यक्त्वे मिश्रे च संक्रमयति। मिश्रपुद्गलांश्च

सम्यग्दृष्टिः सम्यक्त्वे मिथ्यादृष्टिश्च मिथ्यात्वे संक्रमयति । सम्यक्त्वपुद्गलांस्तु मिथ्यादृष्टिर्मिथ्यात्व एव संक्रमयति, न तु मिश्र इति । अपि च मिथ्यात्वेऽक्षीणे सम्यग्दृष्टयो नियमात्रिपुंजिनः, मिथ्यात्वे क्षीणे द्विपुंजिनः, मिश्रे क्षीणे एकपुंजिनः, सम्यक्त्वे तु क्षीणे क्षपका भवंतीति । अन्यच्च कार्मग्रन्थिकाभिप्रायेण प्रथमं संप्राप्तसम्यक्त्वो जीवः सम्यक्त्वपरित्यागान्मिथ्यात्वं गतः सन् पुनरपि सर्वा उत्कृष्टस्थितीः कर्मप्रकृतीर्बध्नाति, सैद्धांतिकाभिप्रायतस्तु भिन्नग्रन्थेः सम्यक्त्विनो मिथ्यात्वं गतस्यापि उत्कृष्टः स्थितिबंधो न स्यादेवेति । अत्र सम्यक्त्वविचारे बहुतरं चार्चिक्यमस्ति, तद् ग्रन्थगौरवभयादिहानुक्तत्वाद् ग्रन्थान्तरेभ्योऽवसेयं ॥ अथ कतिविधं सम्यक्त्वं भवतीत्याशंक्य तद्भेदाः प्रदर्श्यन्ते—

एगविह १ दुविह २ तिविहं ३, चउविहं ४ पंचविहं ५ दसविहं १० सम्मं ।

होइ जिणणायगेहिं, इइ भणियं णंतनाणीहिं ॥ १ ॥

व्याख्या—एकविधं द्विविधं त्रिविधं चतुर्विधं पंचविधं दशविधं च सम्यक्त्वं भवति, इति भणितं अनंतज्ञानिभिर्जिननायकैरिति । तत्रैकविधं तु तत्त्वरुचिरूपं सम्यक्त्वं प्रोक्तं श्रीजिनोपदिष्टजीवाजीवादिपदार्थेषु सम्यक्श्रद्धानरूपमित्यर्थः । द्विविधं पुनर्द्रव्यतो भावतश्च, तत्र ये विशोधिविशेषेण विशुद्धिकृता मिथ्यात्वपुद्गलास्तद् द्रव्यसम्यक्त्वं, यस्तु तदुपष्टंभोपजनितो जीवस्य जिनोक्ततत्त्वरुचिपरिणामस्तद्भावसम्यक्त्वं । यद्वा परमार्थमजानतो भव्यस्य यज्जिनवचनतत्त्वश्रद्धानं तद् द्रव्यसम्यक्त्वं, यत्पुनः परमार्थं विजानत एतद्भवति तद्भावसम्यक्त्वं । तथा नैश्चयिकव्यावहारिकभेदतोऽपि द्विविधं सम्यक्त्वं, तत्र ज्ञानदर्शनचारित्ररूपो य आत्मनः शुभपरिणामस्तन्नैश्चयिकं, ज्ञानादिपरिणामतोऽभिन्नत्वादात्मा एव वा नैश्चयिकं सम्यक्त्वं । यदुक्तं—

आत्मैव दर्शनज्ञान-चारित्राण्यथवा यतेः । यत्तदात्मक एवैष, शरीरमधितिष्ठति ॥ १ ॥

किंच निश्चयतो हि देवो निष्पन्नस्वरूपः स्वजीव एव, तथा निश्चयेन गुरुरपि तत्त्वरमणः स्वजीव एव, तथा पुनर्निश्चयतो धर्मः स्वजीवस्यैव ज्ञानादिस्वभावो, न त्वन्यः कोऽप्यस्तीत्येवं यत् श्रद्धानं तन्नैश्चयिकं सम्यक्त्वं बोध्यम् । इदमेव च मोक्षस्य कारणमस्ति, यतो जीवस्वरूपपरिज्ञानं विना कर्मक्षयरूपो मोक्षो न भवतीति । अथ देवोऽर्हन्नेव, गुरुस्तु सद्धर्मोपदेशदानेन मोक्षमार्गस्य दर्शयिता, धर्मो हि केवलिप्ररूपितो दयामूल एवेत्याद्यर्थस्य नय ७ प्रमाण २ निक्षेप ४ यत् श्रद्धानं तन्नैश्चयिकसम्यक्त्वस्य कारणीभूतं व्यावहारिकं सम्यक्त्वं बोध्यम् । इदमत्र तात्पर्य-यः किल अपगतरागद्वेषमोहः स एव देवस्तादृशस्तु श्रीमान् अर्हन्नेव, नापरे हरिहरादयस्तेषां स्त्रीशस्त्रजपमालादे रागादिचिह्नस्य व्यक्तस्यैव वीक्षणात् । ननु भवत्वेषां रागादिमत्त्वं कास्माकं हानिरिति चेन्न, रागादिकलुषिततया तेषामद्याप्यमुक्तत्वेन मुक्तिदानायोगात्; मुक्त्यर्थमेव च देवस्याप्यभिप्रेतत्वात् । न च वाच्यं नित्यमुक्ता अमी न लिप्यंते रागादिभिरिति, नित्यमुक्तानां पुनर्भवाभावात्, श्रूयंते च पुनर्भवा एषां अवतारा ह्यसंख्येया इति पुराणोक्तिबलात् । ननु मा भवतु मुक्तिदायकत्वं, तथापि राज्यादिदातृत्वं रोगाद्यपायवारकत्वं च वर्त्तते एव अमीषां साक्षाद्विलोकनादिति चेन्न, एवं सति तथाविधपार्थिवादीनां भिषगादीनां च देवत्वप्रसंगात् । न च वाच्यं पार्थिवादयस्तु परेभ्यः कर्मानुसारेणैव दद्युर्नाधिकमिति, तेषामपि तथैव प्रवृत्तेः, न हि सर्वेऽपि तद्भक्ता राजानो नीरुजो वा संति, अनुभवविरुद्धत्वात् । यदाहुः-यद्यथयादृशं येन, कृतं कर्म शुभाशुभं । तत्तथा तादृशं तस्य, फलमीशः प्रयच्छति ॥ १ ॥ इत्यलं विस्तरेण ।

तथा ये पृथिव्यादिषट्कायविराधनतो निवृत्ताः सद्ज्ञानिनस्त एव गुरवो नापरे द्विजादयस्तेषां सर्वारंभप्रवृत्तत्वेन सदा

षट्कायोपमर्दनसंभवात्। ननु भवतु षट्कायोपमर्दकत्वं, परं ब्राह्मणजातित्वमस्त्येवेति चेन्न, ब्राह्मणजातित्वेऽपि व्रात्यस्य निंद्यत्वात्, तदभावेऽपि पराशरविश्वामित्रादीनां पूज्यत्वाभिधानात्। यदाहुः-श्वपाकीगर्भसंभूतः, पाराशरमहामुनिः। तपसा ब्राह्मणो जात-स्तस्माज्जातिरकारणं ॥ १ ॥ कैवर्त्तीगर्भसंभूतो, व्यासो नाम महामुनिः। तप० ॥ २ ॥ शशकीगर्भसंभूतः, शुको नाम महामुनिः। तप० ॥ ३ ॥ इत्यादि। न तेषां ब्राह्मणी माता, संस्कारश्च न विद्यते। तपसा ब्राह्मणा जाता-स्तस्माज्जातिरकारणं ॥ ४ ॥ अन्यत्राप्युक्तं-सत्यं ब्रह्म तपो ब्रह्म, ब्रह्म चेंद्रियनिग्रहः। सर्वभूतदया ब्रह्म, एतद्ब्राह्मणलक्षणं ॥ १ ॥ शूद्रोऽपि शीलसंपन्नो, गुणवान् ब्राह्मणो भवेत्। ब्राह्मणोऽपि क्रियाहीनः, शूद्रापत्यसमो भवेत् ॥ २ ॥ तस्माद्विरतिरेव प्रमाणं, तां विना गुरुत्वेऽपि तार्यतारकत्वायोगात्। यतः-दुन्नि वि विसयासत्ता, दुण्ण वि धणधणसंगहसमेआ। सीसगुरू समदोसा, तारिज्जइ भणसु को केण ? ॥ १ ॥ न च वाच्यं कुटीचरादयः संयता एव निःसंगत्वादिति, तेषामपि सम्यग्जीवानवबोधेन स्नानाद्यारंभवत्त्वात्, तस्मात् षट्कायपालकाः साधव एव गुरव इति स्थितं।

तथा केवलिना सर्वज्ञेनैव भणितो धर्मः श्रेयान्न त्वपरैः, न च तेऽपि सर्वज्ञा इति वाच्यं, एकमूर्त्तित्वेऽविरुद्धधर्मभाषणायोगात्। तथाहि-विष्णुमते विष्णुमूलेयं सृष्टिरुच्यते, शिवमते तु शिवमूलेति। शुद्धिरप्येकत्र जलेन, अपरत्र भस्मना, मोक्षोऽप्येकत्रात्मन्येव लयोऽपरत्र तु नवगुणोच्छेदः, किं च पश्चादप्युच्छेद्यानसुरान् सृजंतस्तेभ्यश्च वरं ददानाः कथं नाम ते सर्वज्ञा भवितुमर्हंति ? अत एव न तदुक्तो धर्मः प्रमाणमस्मदाद्युक्तवत्। तस्मात् केवलिभणित एव धर्मः श्रेयानिति सम्यगविपर्यस्ता रुचिः श्रद्धानात्मिका व्यवहारसम्यक्त्वमुच्यते। व्यवहारनयमपि प्रमाणमस्ति, तद्बलेनैव तीर्थप्रवृत्तेरन्यथा तदुच्छेदप्रसंगात्। तदुक्तं-

जइ जिणमयं पवज्जह, ता मा ववहारनिच्छयं मुयह । ववहार नओच्छेए, तित्थुच्छेओ जओऽवस्सं ॥ १ ॥ इति ॥

तथा पुनः पौद्गलिकापौद्गलिकभेदतोऽपि द्विविधं सम्यक्त्वं, तत्रापनीतमिथ्यास्वभावसम्यक्त्वपुंजगतपुद्गलवेदनस्वरूपं क्षायोपशमिकं पौद्गलिकं, सर्वथा मिथ्यात्वमिश्रसम्यक्त्वपुंजपुद्गलानां क्षयात् उपशमाच्च समुत्पन्नं केवलजीवपरिणामरूपं क्षायिकमौपशमिकं वा अपौद्गलिकं। तथा निसर्गाधिगमाभ्यामपि सम्यक्त्वं द्विधा, तत्र तीर्थंकराद्युपदेशमंतरेण स्वभावत एव जंतोर्यत्कर्मोपशमादिभ्यो जायते तन्निसर्गसम्यक्त्वं, यत्पुनस्तीर्थंकराद्युपदेशजिनप्रतिमादर्शनादिबाह्यनिमित्तोपष्टंभतः कर्मोपशमादिना प्रादुर्भवति तदधिगमसम्यक्त्वमिति । अत्र मार्गज्वरदृष्टांतौ प्रस्तुतौ । तद्यथा–एकः पथो भ्रष्ट उपदेशं विना भ्रमन् स्वयमेव पंथानमाप्नोति, कश्चिच्च परोपदेशेन। ज्वरोऽपि कश्चित् स्वयमेव याति, कश्चित्तु भेषजोपायेन। एवं प्राणिनां सम्यक्त्वमार्गप्राप्तिर्मिथ्यात्वज्वरापगमश्च निसर्गोपदेशाभ्यां भाव्यः ।

अथास्य त्रैविध्यं दर्श्यते–कारक १, रोचक २, दीपक ३ भेदतस्त्रिविधं सम्यक्त्वं, तत्र जीवानां सम्यगनुष्ठानप्रवृत्तिं कारयतीति कारकं, एतावता यस्मिन् परमविशुद्धिरूपे सम्यक्त्वे प्रादुर्भूते सति जीवो यदनुष्ठानं यथा सूत्रे भणितं तत्तथैव करोति तत्कारकसम्यक्त्वं, एतच्च विशुद्धचारित्रिणामेव द्रष्टव्यं । तथा श्रद्धानमात्रं रोचकसम्यक्त्वं, एतावता यत्सम्यगनुष्ठानप्रवृत्तिं रोचयत्येव केवलं, न पुनः कारयति तद्रोचकं, इदं चाविरतसम्यग्दृशां कृष्णश्रेणिकादीनां बोध्यं । तथा यः स्वयं मिथ्यादृष्टिरभव्यो दूरभव्यो वा कश्चिदंगारमर्दकादिवत् धर्मकथादिभिर्जिनोक्तजीवाजीवादिपदार्थान् यथावस्थितान् परस्य दीपयति प्रकाशयति यस्मात् तस्मात्तत्सम्यक्त्वं दीपकं उच्यते । ननु यः स्वयं मिथ्यादृष्टिस्तस्य सम्यक्त्वमिति कथमुच्यते वचनविरोधात्?

इति चेन्नैवं, मिथ्यादृष्टेरपि सतस्तस्य यः परिणामविशेषः स खलु प्रतिपत्तॄणां सम्यक्त्वस्य कारणं, ततः कारणे कार्योपचारात्सम्यक्त्वमित्युच्यते, यथायुर्घृतमित्यदोषः। तथा औपशमिक १ क्षायिक २ क्षायोपशमिक ३ भेदादपि त्रिविधं सम्यक्त्वम् ॥ तथा औपशमिक १ क्षायिक २ क्षायोपशमिक ३ सास्वादन ४ भेदाच्चतुर्विधं सम्यक्त्वम् । तथा पुनः औपशमिक १ क्षायिक २ क्षायोपशमिक ३ सास्वादन ४ वेदक ५ भेदात्पंचविधं सम्यक्त्वं, एषामर्थस्त्वयं—उदीर्णे मिथ्यात्वेऽनुभवतः क्षयं नीते सति, अनुदीर्णे च परिणामविशुद्धिविशेषेण सर्वथा उपशमं नीते सति यद्गुणः प्रादुर्भवति तदौपशमिकं सम्यक्त्वं उच्यते, इदं च अनादिमिथ्यादृष्टेर्ग्रन्थिभेदकर्तुस्तथा उपशमश्रेणिप्रारंभकस्य जंतोर्भवति १। तथानंतानुबंधिकषायचतुष्टयक्षयानंतरं मिथ्यात्वमिश्रसम्यक्त्वपुंजलक्षणे त्रिविधेऽपि दर्शनमोहनीयकर्मणि सर्वथा क्षीणे सति यद्गुणः संपद्यते तत्क्षायिकं सम्यक्त्वमुच्यते, एतच्च क्षपकश्रेणिप्रतिपत्तुर्जीवस्य भवति। तथा पुनर्यदुदयमागतं मिथ्यात्वं तद्विपाकोदयेन वेदितत्वात् क्षीणं, यच्च शेषं सत्तायामनुदयगतं वर्त्तते तदुपशांतं, उपशांतं नाम मिथ्यात्वमिश्रपुंजौ आश्रित्य निरुद्धोदयं, शुद्धपुंजमाश्रित्य पुनरपनीतमिथ्यास्वभावमित्यर्थः, तदेवमुदीर्णस्य मिथ्यात्वस्य क्षयेण अनुदीर्णस्य चोपशमेन निष्पन्नं यत्सम्यक्त्वं तत्क्षायोपशमिकमुच्यते, इदं हि शुद्धपुंजलक्षणं मिथ्यात्वमपि अतिस्वच्छाभ्रपटलं दृष्टेरिव यथावस्थिततत्त्वरुचेराच्छादकं न भवत्यत उपचारतः सम्यक्त्वमुच्यते। ननु औपशमिकसम्यक्त्वस्य क्षायोपशमिकसम्यक्त्वात्को विशेषः? उभयत्रापि अविशेषेण उदितं मिथ्यात्वं क्षीणं अनुदितं तु उपशांतमिति। अत्रोच्यते—अस्ति विशेषः, क्षायोपशमिके हि मिथ्यात्वस्य विपाकानुभवो नास्ति, परं भस्मच्छन्नवह्निसंबंधिधूमरेखावत् प्रदेशानुभवोऽस्त्येव, औपशमिके तु विपाकतः प्रदेशतश्च सर्वथा

मिथ्यात्वस्यानुभवो नास्त्येवेति ३। तथा पूर्वोक्तौपशमिकसम्यक्त्ववमनसमये तदास्वादस्वरूपं सास्वादनसम्यक्त्वं भवति, औपशमिकात्पतन् सन् यावदद्यापि मिथ्यात्वं न प्राप्तस्तावत्सास्वादन इति ४। तथा पुनः क्षपकश्रेणिं प्रतिपन्नस्य चतुर्षु अनंतानुबंधिषु मिथ्यात्वमिश्रपुंजद्वये च क्षपितेषु सत्सु क्षप्यमाणे च क्षायोपशमिकलक्षणे शुद्धपुंजे तत्संबंधिचरमपुद्गलक्षपणोद्यतस्य तच्चरमपुद्गलवेदनस्वरूपं यत्सम्यक्त्वं तद्वेदकमुच्यते। वेदकप्राप्त्यनंतरसमये च अवश्यमेव क्षायिकसम्यक्त्वप्राप्तिर्भवतीति ॥

अथ पंचानामपि सम्यक्त्वानां कालनियम उच्यते—

अंतमुहुत्तोवसमो, छावली सासाण वेअगो समओ ।
साहियतित्तीसायर–खइओ दुगुणो खओवसमो ॥ ७ ॥

व्याख्या—औपशमिकस्य तावदुत्कर्षतोऽन्तर्मुहूर्त्तप्रमाणा स्थितिः, सास्वादनस्य षडावलिका स्थितिः, वेदकस्य तु एकः समयः स्थितिः, क्षायिकस्य पुनः संसारमाश्रित्य साधिकत्रयस्त्रिंशत्सागरोपमाणि स्थितिः, सा च सर्वार्थसिद्धाद्यपेक्षया द्रष्टव्या, सिद्धावस्थापेक्षया तु साद्यनंतैव स्थितिः, क्षायोपशमिकस्य तु क्षायिकतो द्विगुणा स्थितिः, साधिकषट्षष्टि (६६) सागरोपमाणीत्यर्थः, इयं च विजयाद्यनुत्तरेषु त्रयस्त्रिंशत्सागरस्थितौ वारद्वयगमनापेक्षया, अथवा द्वादशे देवलोके द्वाविंशति (२२) सागरस्थितौ वारत्रयगमनापेक्षया ज्ञेया, साधिकत्वं तु नरभवायुःप्रक्षेपादिति। इयं हि उत्कृष्टा स्थितिरुक्ता, जघन्यतस्तु आद्यानां त्रयाणामेकैकसमयस्थितिः, अंत्ययोस्तु द्वयोः प्रत्येकमंतर्मुहूर्त्तस्थितिरिति ॥

अथैतेषु कतमत् सम्यक्त्वं कतिवारं प्राप्यते ? इति दर्श्यते—

उक्कोसं सासायण, उवसामिया हुंति पंचवाराओ ।
वेयगखयगा इक्कसि, असंखवारा खओवसमो ॥ ८ ॥

व्याख्या—उत्कर्षत आसंसारं सास्वादनौपशमिकसम्यक्त्वे पंचवारं भवतः, तत्रैकवारं तु प्रथमसम्यक्त्वलाभे, वारचतुष्टयं चोपशमश्रेण्यपेक्षमिति । तथा वेदकं क्षायिकं चैकशः एकवारमेव भवत इत्यर्थः, क्षायोपशमिकं तु बहुभवापेक्षया असंख्यवारं लभ्यते इति ॥ अथ कस्मिन् गुणस्थानके किं सम्यक्त्वं स्यादिति निरूप्यते—

बीयगुणे सासाणो, तुरियाइसु अट्ठिगारचउचउसु ।
उवसमखायगवेयग–खाओवसमा कमा हुंति ॥ ९ ॥

व्याख्या—मिथ्यात्वाद्ययोग्यंतानि चतुर्दशगुणस्थानानि संति, तेषु द्वितीयगुणे सास्वादनसम्यक्त्वं भवति, तथा तुर्यादिष्विति चतुर्थादिषु अष्टसु अविरताद्युपशांतमोहांतेषु गुणस्थानेषु औपशमिकं सम्यक्त्वं भवति, तथा चतुर्थादिषु एकादशसु अयोग्यंतेषु गुणेषु क्षायिकं भवति । तथा पुनश्चतुर्थादिषु चतुर्षु अप्रमत्तांतेषु गुणेषु वेदकं भवति । तेष्वेव च चतुर्षु क्षायोपशमिकं सम्यक्त्वं भवतीति ॥ अथ प्रथमतया मुक्तस्य वा सम्यक्त्वादेर्ग्रहणमाकर्ष उच्यते, ते च एकजीवस्य एकस्मिन्

भवे कियंतो भवंतीत्यभिधीयते—

तिण्हं सहसपुहुत्तं, सयपुहुत्तं च होइ विरईए ।
एगभवे आगरिसा, एवइआ हुंति नायव्वा ॥ १० ॥

व्याख्या—त्रयाणां भावश्रुत १ सम्यक्त्व २ देशविरति ३ नाम्नां सामायिकानामेकभवे सहस्रपृथक्त्वमाकर्षा भवंति, द्विप्रभृतिरा नवभ्यः पृथक्त्वमुच्यते । तथा सर्वविरतेराकर्षा एकभवे शतपृथक्त्वं भवंति, उत्कर्षत एतावंत आकर्षा भवंति, जघन्यतस्तु एक एवेति ॥ अथ संसारे स्थितस्य जीवस्य सर्वभवेषु कियंत आकर्षाः स्युरित्युच्यते—

तिण्हं सहसमसंखा, सहसपुहुत्तं च होइ विरईए ।
नाणाभवआगरिसा, एवतिआ हुंति नायव्वा ॥ ११ ॥

व्याख्या—नानाभवेषु एकजीवस्य त्रयाणां भावश्रुतादीनामाकर्षा असंख्याताः सहस्रपृथक्त्वं उत्कृष्टा भवंति । तथा सर्वविरतेराकर्षा उत्कृष्टाः सहस्रपृथक्त्वं भवंति, द्रव्यश्रुतस्य तु आकर्षा अनंताः स्युः, द्वींद्रियादिमिथ्यात्विनामपि तत्सद्भावात् ५ । इत्युक्तं पंचविधं सम्यक्त्वं ॥

अथास्य दशविधत्वं निरूप्यते–एतदनंतरोक्तमौपशमिकादि पंचविधं सम्यक्त्वं प्रत्येकं निसर्गतोऽधिगमतश्च जायमान-

त्वाद्द्विविधं भवति, अथवा प्रज्ञापनाद्यागमोक्तनिसर्गरुच्यादिभेदैर्दशविधं सम्यक्त्वं भवति । तद्यथा-निसर्गरुचिः १ उपदेशरुचिः २ आज्ञारुचिः ३ सूत्ररुचिः ४ बीजरुचिः ५ अभिगमरुचिः ६ विस्ताररुचिः ७ क्रियारुचिः ८ संक्षेपरुचिः ९ धर्मरुचिः १० इति । तत्र निसर्गरुचेः स्वरूपमुच्यते-निसर्गः स्वभावस्तेन जिनोक्ततत्त्वेषु रुचिर्यस्य स निसर्गरुचिः । अयमर्थः-जिनैर्दृष्टं यज्जीवादिस्वरूपं तदेवमेवास्ति नान्यथा, इत्येवं यस्तीर्थकरोपदिष्टान् द्रव्यक्षेत्रकालभावभेदतो नामस्थापनाद्रव्यभावभेदतो वा चतुर्विधान् जीवादिपदार्थान् परोपदेशं विना जातिस्मरणप्रतिभादिरूपया स्वमत्यैव श्रद्धाति स निसर्गरुचिर्बोध्यः १ । अथोपदेशरुचिः प्रोच्यते-उपदेशो गुर्वादिभिर्वस्तुतत्त्वकथनं तेन रुचिर्यस्य सः, एतावता अनंतरोक्तानेव जीवादिपदार्थान् छद्मस्थस्य तीर्थकृदादेर्वा उपदेशेन यः श्रद्धाति स उपदेशरुचिर्बोध्यः २ । अथाज्ञारुचिरुच्यते-आज्ञा सर्वज्ञवचनात्मिका तस्यां रुचिर्यस्य सोऽयमर्थः-यो भव्यो देशतो रागद्वेषमोहाज्ञानविवर्जितः सन् केवलया तीर्थंकराद्याज्ञया एव प्रवचनोक्तमर्थजातं तथेति प्रतिपद्यते, न तु स्वयं बुद्धिहीनत्वात् तथाविधमवबुध्यति स मासतुसादिवत् आज्ञारुचिर्बोध्यः, मासतुसवृत्तांतस्त्वेवं--

एकः कश्चिद् गृहस्थो गुरोः पार्श्वे धर्मं श्रुत्वा प्रतिबुध्य च दीक्षां जग्राह । परं तथाविधतीव्रतरज्ञानावरणीयकर्मोदयाद्गुरुभिर्बहुधा पाठ्यमानोऽपि एकं पदमात्रमपि धारयितुमुच्चारयितुं च न शक्तोऽभूत् । ततो गुरुभिरुक्तं-सृतमनेन शास्त्राध्ययनेन, त्वं केवलं ' मा रूस मा तूस ' इत्येवाधीष्व । अथ स मुनिर्बुद्धिहीनत्वात् तद्वाक्यमपि अध्येतुमशक्तः सन् तस्य स्थाने ' मासतुसेति ' पठन् केवलां गुर्वाज्ञामेव प्रमाणीकुर्वन् आत्मनिंदां च कुर्वन् सद्भावनया घनघातिकर्मचतुष्टयक्षयं विधाय सद्यः केवलज्ञानश्रियं शिश्राय । अयं चाज्ञारुचिर्ज्ञातव्यः ३ । अथ सूत्ररुचिः प्रोच्यते-सूत्रमंगोपांगादि आचारादिलक्षणं, तेन रुचि-

र्यस्य सः, अयं भावः—यः सिद्धांताध्ययनं कुर्वन् तेनाधीयमानेनैव सिद्धांतेन सम्यक्त्वं प्राप्नोति, प्रसन्नप्रसन्नतराध्यवसायश्च भवति स गोविंदवाचकवत्सूत्ररुचिर्बोध्यः, यथा कश्चिद्गोविंदनामा शाक्यमतभक्तो जिनागमरहस्यग्रहणार्थं कपटेन यतीभूत्वा आचार्याणां पार्श्वे सिद्धांताध्ययनं कुर्वाणस्तेनैवाधीयमानसूत्रेण परिणामविशुद्धिप्रादुर्भावात् सम्यक्त्वं प्राप्य शुद्धसाधुर्भूत्वा सूरिपदं प्राप्त इतीत्थं सूत्ररुचिर्ज्ञेयः ४। अथ बीजरुचिरुच्यते-बीजमिव बीजं यदेकमपि अनेकार्थबोधोत्पादकं वचनं तेन रुचिर्यस्य सः, यथा हि बीजं क्रमेणानेकबीजानां जनकं भवति, एवमात्मनोऽपि एकपदविषयिणी रुचिरनेकपदविषयिरुच्यंतराणामुत्पादिका भवति, एवंविधरुचिमानात्मा बीजरुचिरुच्यते। अथवा जले तैलबिंदुवत्, यथा जलैकदेशगतोऽपि तैलबिंदुः समस्तं जलमाक्रामति, तथा तत्त्वैकदेशोत्पन्नरुचिरप्यात्मा तथाविधक्षायोपशमवशादशेषेषु तत्त्वेषु रुचिमान् भवति, स एवंविधो बीजरुचिर्ज्ञातव्यः ५। अथाभिगमरुचिरुच्यते-अभिगमो विशिष्टपरिज्ञानं तेन रुचिर्यस्य सः, एतावता येन श्रुतज्ञानमर्थमाश्रित्य विज्ञातं भवति सोऽभिगमरुचिर्बोध्यः, श्रुतज्ञानं हि आचाराद्यंगानि औपपातिकाद्युपांगानि उत्तराध्ययनादिप्रकीर्णकानीति ६। अथ विस्ताररुचिरुच्यते—विस्तारः सकलद्वादशांगानां नयैः पर्यालोचनं तेन परिवृद्धा रुचिर्यस्य सः, अयमर्थः—येन किल षण्णां द्रव्याणां सर्वपर्यायाः सर्वैः प्रत्यक्षादिप्रमाणैः सर्वैश्च नैगमादिनयप्रकारैर्यथातथं विज्ञाताः संति स विस्ताररुचिर्ज्ञेयः ७। अथ क्रियारुचिरुच्यते—क्रिया सम्यक् संयमानुष्ठानं तत्र रुचिर्यस्य सः, एतावता यस्य भावतो ज्ञानदर्शनचारित्राचाराद्यनुष्ठाने रुचिरस्ति स क्रियारुचिर्बोद्धव्यः ८। अथ संक्षेपरुचिरुच्यते—संक्षेपः संकोचस्तत्र रुचिर्यस्य सः, विस्तारार्थापरिज्ञानादिति हेतोः, अयं भावः—यो हि जिनप्रणीतप्रवचनेषु अकुशलः सौगतादिकुदर्शनानामनभिलाषी च सन् संक्षेपेणैव चिलातीपुत्रवदु-

प्रशमविवेकसंवराभिधपदत्रयेण तत्त्वरुचिमवाप्नोति स संक्षेपरुचिर्बोध्यः। अत्र चिलातीपुत्रवृत्तांतस्तु प्रसिद्ध एव ९। अथ धर्मरुचिरुच्यते–धर्मे अस्तिकायधर्मे श्रुतधर्मादौ वा रुचिर्यस्य सः, एतावता यो जीवो जिनेश्वरोक्तं धर्मास्तिकायादीनां गत्युपष्टंभकत्वादिस्वभावमंगप्रविष्टाद्यागमस्वरूपं वा सामायिकादिचारित्रधर्मं वा श्रद्दधाति स धर्मरुचिर्ज्ञातव्यः १०। अत्र हि पृथक् उपाधिभेदेन सम्यक्त्वभेदकथनं शिष्यव्युत्पादनार्थं, अन्यथा तु निसर्गोपदेशयोरधिगमादौ वा क्वचित्केषांचिदंतर्भावोऽस्त्येवेति। यच्चेह सम्यक्त्वस्य जीवादभिन्नत्वेनाभिधानं तद् गुणगुणिनोः कथंचिदभेदज्ञापनार्थमित्युक्तं दशविधं सम्यक्त्वम् ॥

अथ सर्वेष्वपि धर्मकृत्येषु सम्यक्त्वस्यैव प्राधान्यं प्रदर्श्यते––

सम्मत्तमेव मूलं, निद्दिट्ठं जिणवरेहिं धम्मस्स ।
एगं पि धम्मकिच्चं, न तं विना सोहए नियमा ॥ १२ ॥

स्पष्टार्थो, इदमत्र तात्पर्यं–अस्मिन्नपारसंसारे बहुतरभ्रमणेन खिन्नीभूतैर्भव्यात्मभिस्तावदुक्तस्वरूपविशुद्धसम्यक्त्वयुक्ता स्वात्मभूमिर्विधेया, यतो विशुद्धात्मभूमौ निहितं सत् सर्वमपि सद्धर्मकृत्यं प्रभासचित्रकरपरिकर्मितभूमौ चित्रमिवासाधारणशोभां बिभर्ति, आत्मशुद्धिं विना तु किमपि सत्कृत्यं न शोभते। अतो भव्यैस्तत्रैव यतितव्यमिति। पूर्वसूचितप्रभासचित्रकृद्दृष्टांतस्त्वेवं–

अस्मिन् जंबूद्वीपे भरतक्षेत्रमध्यगतं बहुलरुचिरधवलगृहसुंदरं जिनमंदिरश्रेणिविभ्राजितं विविधनागपुन्नागादिपादपोपेतप्रचुरतरोपवनविराजितं साकेतं नाम नगरमासीत्। तत्र निखिलरिपुवृक्षोन्मूलने महाबलसदृशो महाबलो नाम राजा विरराज;

अथैकदा आस्थानमंडपोपविष्टः स भूपतिर्विविधदेशदर्शकं स्वदूतं प्रतीत्थं पप्रच्छ–'भो मम राज्ये राजलीलोचितं किमपि वस्तु न ह्यस्ति ?।' तदा स प्राह–'स्वामिन्! मवद्राज्येऽन्यत्सर्वमप्यस्ति परमेका नयनमनोहारिविचित्रचित्रालंकृता राजलीलोचिता चित्रसभा नास्ति'। अथैतद्वचः समाकर्ण्य अतिकुतूहलपूरितमनस्केन राज्ञा वरमंत्रिणमाहूय त्वरितं चित्रसभां कारयस्वेत्यादिष्टं, मंत्रिणापि स्वामिनियोगं शिरसि निधाय शीघ्रं दीर्घतरविशालशालोपेता बहुविधरचनाविराजिता महासभा निर्मापिता, ततो राज्ञा विमल १ प्रभासा २ भिधानौ चित्रकर्मनिपुणौ द्वौ चित्रकरौ आहूतौ। सा सभा चार्धार्धविभागेन विभज्य ताभ्यामर्पिता, मध्ये च यवनिकां दत्त्वा राज्ञा तावेवमुक्तौ–'भो युवाभ्यामन्योऽन्यं चित्रकर्म कदापि न प्रेक्षणीयं, निजनिजमत्यनुसारेण सम्यक् चित्रं चित्रयितव्यं च।' ततो द्वावपि तौ अहमहमिकया सम्यक् चित्रकर्म कर्तुं लग्नौ, एवं च कार्यं कुर्वतोस्तयोर्यावत् पण्मासा गतास्तावद्दुत्सुकेन राज्ञा तौ पृष्टौ, ततो विमलेनोक्तं–स्वामिन्! मदीयो भागस्तु निष्पन्नोऽस्ति, तदा राज्ञा सद्यस्तत्रागत्य, विचित्रविच्छित्तिचित्रितमद्भुतं तं भूमिभागं विलोक्य संतुष्टेन सता बहुतरद्रव्यादिप्रदानेन तस्योपरि महाप्रसादो विहितः। तदनंतरं प्रभासाय पृष्टं तदा स प्राह–स्वामिन्! मया तु अद्यापि चित्रारंभोऽपि न कृतोऽस्ति, किं तु तद्भूमिसंस्कार एव विहितोऽस्ति। अथ नृपेण स भूमिसंस्कारः कीदृगिति विमृश्य, यावन्मध्यस्था यवनिकाऽपनीता तावत्तत्र भूमौ सविशेषरम्यं सुचित्रकम दृष्टं, ततो राज्ञा स भणितो–रे त्वं किमस्मानपि विप्रतारयसि ? इह तु साक्षाच्चित्रं विलोक्यते।। स प्राह–स्वामिन्! एष प्रतिबिंबसंक्रमो विद्यते, न तु चित्रं, अथैतदुक्त्वा तेन पुनरपि परिच्छद् प्रदत्ता, ततो नृपेण तां केवलां भूमिं दृष्ट्वा विस्मितेन सता पृष्टं–त्वया कथमीदृशी भूमिः कृता ?. तेनोक्तं–देव! ईदृग्भूमौ चित्रं सुस्थिरं भवति,

वर्णानां कांतिरधिकं स्फुरति; उल्लिखितरूपाणि पुनर्विशेषतः शोभां बिभ्रति, प्रेक्षमाणजनानां भावोल्लासो भवति । अथैवं श्रुत्वा तद्विवेकेन तुष्टो नृपस्तस्योपरि अतीव प्रसादं कृतवान्, एवं चोक्तवान्—एषा मे चित्रसभा एवंभूतैव सती अपूर्वप्रसिद्धिमती भवतादित्यत एवमेव तिष्ठतु इति । अत्र चैष उपनयः—यदत्र साकेतपुरं स तु अतिमहान् संसारः, यश्च महाबलो राजा स सम्यगुपदेष्टा आचार्यः, या हि सभा सा मनुष्यगतिः, यश्च चित्रकरः स भव्यजीवः, या च चित्रसभाया भूमिस्तत्सम आत्मा, यश्च भूमिसंस्कारस्तत्सम्यक्त्वं, यदत्र चित्रं स धर्मः, यानि च नानाविधचित्ररूपाणि तानि बहुविधप्राणातिपातविरत्यादिव्रतानि, ये त्वत्र चित्रोद्दीपकाः शुक्लादिवर्णास्ते धर्मशोभाविधायिनो विविधा नियमाः, योऽत्र भावोल्लासस्तज्जीववीर्यमिति ॥

एवं प्रभासाभिधचित्रकृद्वत्, कार्यात्मभूमिर्विबुधैर्विशुद्धा । येनोज्ज्वलं कर्मविचित्रचित्रं, शोभामनन्यप्रतिमां दधीत ॥ १ ॥

॥ इति प्रभासचित्रकारकथा ॥

एतेन सर्वधर्मकार्येषु सम्यक्त्वस्य प्राधान्यं दर्शितं, सांप्रतं पुनर्विस्ताररुचिसत्त्वानामुपकारार्थं तत्सम्यक्त्वमेव सप्तषष्टिभेदैर्विभाव्यते—

चउसद्दहण ४ तिलिंगं ३, दसविणय १० तिसुद्धि ३ पंच गयदोसं ५ ।
अट्ठपभावण ८ भूसण ५, लक्खण ५ पंचविहसंजुत्तं ॥ १३ ॥

छव्विहजयणा ६ गारं, छब्भावण ६ भावियं च छट्ठाणं ६ ।
इय सत्तसट्ठि ६७ लक्खण-भेयविसुद्धं च संमत्तं ॥ १४ ॥

व्याख्या—परमार्थसंस्तवः १ परमार्थज्ञातृसेवनं २ व्यापन्नदर्शनवर्जनं ३ कुदर्शनवर्जनं ४ चेति चत्वारि श्रद्धानानि ४ । शुश्रूषा १ धर्मराग २ वैयावृत्त्य ३ रूपाणि त्रीणि लिंगानि ३ । अर्हद् १ सिद्ध २ चैत्य ३ श्रुत ४ धर्म ५ साधुवर्गा ६ चार्यो ७ पाध्याय ८ प्रवचन ९ दर्शनानां १० भक्तिबहुमानादिर्दशधा विनयः १० । जिन १ जिनमत २ जिनमतास्थितसाध्वादि ३ त्रितयादपरस्यासारत्वचिंतनमिति तिस्रः शुद्धयः ३ । शंका १ कांक्षा २ विचिकित्सा ३ कुदृष्टिप्रशंसा ४ तत्परिचय ५ श्चेति पंच दूषणानि ५ । प्रवचनी १ धर्मकथी २ वादी ३ नैमित्तिकः ४ तपस्वी ५ प्रज्ञप्त्यादिविद्यावान् ६ चूर्णांजनादिसिद्धः ७ कवि ८ श्चेति अष्टौ प्रभावकाः ९ । जिनशासनकौशलं १ प्रभावना २ तीर्थसेवा ३ स्थैर्यं ४ भक्ति ५ श्चेति पंच भूषणानि ५ । उपशमः १ संवेगो २ निर्वेदो ३ अनुकंपा ४ आस्तिक्यं ५ चेति पंच लक्षणानि ५ । परतीर्थिकादिवंदन १ नमस्करणा २ लपन ३ संलपना ४ सनादिदान ५ गंधपुष्पादिप्रेषण ६ वर्जनलक्षणाः षट् यतनाः ६ । राजाभियोगो १ गणाभियोगः २ बलाभियोगः ३ सुराभियोगः ४ कांतारवृत्ति ५ र्गुरुनिग्रह ६ श्चेति षडाकाराः ६ । इदं सम्यक्त्वं चारित्रधर्मस्य मूल १ द्वार २ प्रतिष्ठान ३ आधार ४ भाजन ५ निधि ६ सन्निभं कीर्तितमित्येवं चिंतनरूपाः षड् भावनाः ६ । अस्ति जीवः १ स च नित्यः २ स पुनः कर्माणि करोति ३ कृतं च वेदयति ४ अस्ति चास्य निर्वाणं ५ अस्ति पुनर्मोक्षो-

पायः ६ एतानि जीवास्तित्वादीनि षट् स्थानानि ६। इत्येवं सप्तषष्ट्या (६७) लक्षणभेदैर्विशुद्धं सम्यक्त्वं भवतीति गाथाद्वयार्थः, अथैते एव भेदा विस्तरेण व्याख्यायंते—

परमार्थास्तात्त्विकजीवाजीवादिपदार्थास्तेषु संस्तवः परिचयः, तात्पर्येण बहुमानपुरस्सरं जीवादिपदार्थावगमायाभ्यास इत्यर्थः, इदं प्रथमं श्रद्धानं १ तथा परमार्थज्ञातॄणामाचार्यादीनां सेवनं भक्तिः, इदं द्वितीयं श्रद्धानं २। तथा व्यापन्नं विनष्टं दर्शनं सम्यक्त्वं येषां ते व्यापन्नदर्शना निह्नवादयस्तेषां वर्जनं परिहार इदं तृतीयं श्रद्धानं ३। तथा कुत्सितं दर्शनं येषां ते कुदर्शनाः सौगतादयस्तेषां वर्जनमिदं चतुर्थं श्रद्धानं ४। सम्यक्त्वं श्रद्धीयतेऽस्तीति प्रतिपद्यते एभिरिति श्रद्धानानीमानी चत्वारि प्रोक्तानि। सम्यग्दर्शनिना हि स्वगुणविशुद्धिकारकं परमार्थसंस्तवादिकं सर्वदैव समाचरणीयम्। तथा दर्शनमालिन्यहेतुभूतो व्यापन्नदर्शनादिसंसर्गस्तु परिवर्जनीयः, अन्यथा प्रवरतरसुधासन्निभमपि गंगोदकं यथा लवणोदसमुद्रसंसर्गात्सद्यो लवणत्वमासादयति, तथा सम्यग्दृष्टिरपि गुणहीनसंसर्गाद्विरूपत्वं भजतीति तात्पर्यं। अथ लिंगत्रयं व्याख्यायते-श्रोतुमिच्छा शुश्रूषा सद्बोधहेतुधर्मशास्त्रश्रवणवांच्छेत्यर्थः, अयं भावः-यथा कोऽपि सुखी विदग्धो रागी तरुणश्च पुमान् प्रियकांतायुक्तः सन् सुरगीतं श्रोतुमिच्छति ततोऽप्यधिकतमा सिद्धांतशुश्रूषा सम्यक्त्वे सति भव्यानां भवतीति। इदं प्रथमं लिंगं १। तथा धर्मश्चारित्रादिस्तत्र यो रागोऽनुरागः स धर्मरागः, इदमत्र तात्पर्य-यथा कोऽपि कांतारातीतो दुर्गतो बुभुक्षाक्षीणशरीरो ब्राह्मणो घृतपूरान् भोक्तुमिच्छति, तथा सम्यक्त्ववतो जीवस्य तथाविधकर्मदोषतः सदनुष्ठानादिधर्मं कर्तुमशक्तस्यापि तत्र धर्मेऽत्यर्थमभिलाषो भवतीति द्वितीयं लिंगं २। तथा देवगुरूणां वैयावृत्ये नियमः, अयमर्थः-देवा आराध्यतमा अर्हंतो गुरवश्च

पर्वादिषु सदा आचार्यादिपञ्चेषु वैयावृत्त्ये यथाशक्ति पूजादिश्रामण्यादौ नियमः श्रेणिकादिवत् अवश्यं कर्त्तव्यतांगीकारः, स च सम्यक्त्वे सति भवति। यथा श्रेणिकोऽविरविमानपि प्रतिदिनाष्टोत्तरशतनव्यनिष्पन्नस्वर्णयवस्वस्तिकढौकनादि देवपूजादौ नियमं स्वीकृतवान्, तत्पुण्यप्रभावाच्च तीर्थंकरनामकर्मोपार्जितवान्। एवमन्यैरपि भव्यैरत्र कार्ये यतितव्यं। इदं तृतीयं लिंगं ३। एतैः शुश्रूषादिभिस्त्रिभिर्लिंगैः सम्यक्त्वमुत्पन्नमस्तीति निश्चीयते इति भावः॥

अथ दशधा विनयो व्याख्यायते—अर्हन्तस्तीर्थंकराः १ सिद्धाः क्षीणाष्टकर्ममलपटलाः २ चैत्यानि जिनेंद्रप्रतिमाः ३ श्रुतमाचारांगाद्यागमः ४ धर्मः क्षांत्यादिरूपः ५ साधुवर्गः श्रमणसमूहः ६ आचार्याः षट्त्रिंशद्गुणधारका गणनायकाः ७ उपाध्यायाः सूत्रपाठकाः ८ प्रवक्ति जीवादितत्त्वमिति प्रवचनं संघः ९ सम्यग्दर्शनं सम्यक्त्वं १० तदभेदोपचारात् सम्यक्त्ववतामपि दर्शनमुच्यते। एवं प्रागपि यथासंभवं वाच्यं। एतेषु अर्हदादिषु दशसु स्थानेषु भक्तिरभिमुखगमनासनप्रदानादिलक्षणा बाह्यप्रतिपत्तिः १। बहुमानो मनसि निर्भरा प्रीतिः २। वर्णनं तु तेषामतिशयगुणोत्कीर्त्तनादि ३। तथाऽवर्णवादवर्जनमश्लाघापरिहरणोड्डाहगोपनादि ४। आशातनापरिहारो मनोवाक्कायैः प्रतिकूलप्रवृत्तेर्निषेधः ५। एष दशस्थानविषयतः पञ्चविधो दर्शनविनयो द्रष्टव्यः, अयं हि सम्यक्त्वे सति प्रादुर्भवतीत्यतो दर्शनविनय इति निर्दिष्टः। अथ विनयस्य दशभेदेषु यस्तृतीयो भेदश्चैत्यविनयः प्रोक्तस्तत्र चैत्यानि जिनबिंबानि, तानि च कतिविधानि किंस्वरूपाणि च संतीत्याशंक्य तद्भेदादि प्रदर्शते—

भत्ती १ मंगलचेइय २, निस्सकड ३ अनिस्सचेइए वावि ४ ।

सासयचेइय पंचम ५-मुवइट्ठं जिणवरिंदेहिं ॥ १५ ॥

व्याख्या—श्रीजिनवरेंद्रैः पंचधा चैत्यमुपदिष्टं, तत्र गृहे यथोक्तलक्षणाद्युपेता प्रतिदिनं त्रिकालपूजावंदनाद्यर्थं कारिता या जिनप्रतिमा तद्भक्तिचैत्यं, तथा गृहद्वारोपरिवर्जितिर्यक्काष्ठस्य मध्यभागे निष्पादितं यज्जिनबिंबं तन्मंगलचैत्यं, मथुरायां हि नगर्यां गृहे कृते मंगलनिमित्तमुत्तरंगेषु प्रथमं जिनप्रतिमा प्रतिष्ठाप्यते, अन्यथा तद् गृहं पतेत्। यदुक्तं श्रीसिद्धसेनाचार्यैः-

जम्मि सिरिपासपडिमं, संतिकए करइ पडिगिहदुवारे । अज्ज वि जणा पुरिं तं, महुरमघन्ना न पेच्छंतीति ॥ १ ॥

तथा यत्कस्यापि गच्छस्य सत्कं चैत्यं भवति तन्निश्राकृतचैत्यं, तत्र हि तद्गच्छीया आचार्यादय एव प्रतिष्ठादिकार्येषु अधिक्रियंते, अन्यः पुनस्तत्र प्रतिष्ठादिकं कर्तुं न लभते इत्यर्थः, तथाऽस्माद्विपरीतमनिश्राकृतचैत्यं यत्र सर्वेऽपि गणनायकादयः पदधारकाः प्रतिष्ठामालारोपणादिकार्यं कुर्वंति, यथा शत्रुंजयमूलचैत्ये, तत्र हि सर्वसूरीणां प्रतिष्ठाधिकारित्वादिति । तथा पंचमं सिद्धायतनं शाश्वतजिनचैत्यमिति ५ । अथवा प्रकारांतरेण पंच चैत्यानि भवंति, तथाहि-नित्य १ द्विविधभक्तिकृत २-३ मंगलकृत ४ साधर्मिक ५ भेदात् पंचधा चैत्यानि । तत्र नित्यानि शाश्वतचैत्यानि, तानि च देवलोकादिषु बोध्यानि, तथा भक्तिकृतानि भरतादिभिः कारितानि, तानि च निश्राकृतानि अनिश्राकृतानि चेति द्वेधा, तथा मंगलार्थं कृतं मंगलकृतं चैत्यं, तन्मथुरादिषु उत्तरंगे प्रतिष्ठापितं । तथा वारत्तकमुनेः पुत्रो रम्ये देवगृहे स्वपितुर्मूर्त्तिमकार्षीत् तत्साधर्मिकचैत्य-

मिति । अस्य भावार्थस्तु कथानकादवसेयस्तच्चेदं—

वारत्तकं नगरं, अभयसेनो राजा, तस्य च वारत्तको नाम सुबुद्धिनिधिर्मंत्री । स चैकदा ग्रामांतरादागतेन केनचित्प्राघूर्णकेन सह वार्त्तां कुर्वाणः स्वकीयमत्तवारणभूमौ उपविष्टोऽस्ति । तस्मिन्नवसरे एको धर्मघोषनामा महामुनिर्भिक्षाग्रहणार्थं तस्य गृहं प्रविष्टः, तद्भार्या च तस्मै भिक्षादानार्थं घृतखंडमिश्रितघैरेयीभृतं पात्रमुत्पाटितवती, अत्रांतरे च कथमपि तद्भाजनात् खंडमिश्रितो घृतबिंदुर्भूमौ पतितः, ततस्तं दृष्ट्वा स महात्मा धर्मघोषमुनिर्भगवदुपदिष्टभिक्षाग्रहणविधौ कृतोद्यमः सन् छर्दितदोषदुष्टा इयं भिक्षा, तस्मान्मे न कल्पते, इति मनसि विचार्य भिक्षामगृहीत्वा गृहान्निर्जगाम । वारत्तकमंत्रिणा च मत्तवारणस्थितेन दृष्टो भगवान्निर्गच्छन्, चिंतितं च चित्ते कथमनेन मदीया भिक्षा न गृहीता ? इत्येवं यावच्चिंतयति तावत्तस्य भूमौ निपतितस्य खंडयुक्तघृतबिंदोरुपरि मक्षिकाः संमिलिताः, तासां च भक्षणाय प्रधाविता गृहगोधिका, तस्या वधाय प्रधावितः सरटस्तस्यापि च भक्षणाय प्रधावति स्म मार्जारी, तस्या अपि हननाय प्रधावितः प्राघूर्णकस्य श्वा, तस्यापि च प्रतिद्वंद्वी प्रधावितोऽन्यो गृहश्वानस्ततो द्वयोरपि तयोः शुनोरभूत्परस्परं युद्धं । तदनंतरं निजनिजशुनकपराभवपीडनया च प्रधावितौ मंत्रिप्राघूर्णकयोः सेवकौ, ततस्तयोरपि अन्योऽन्यमभूत् लकुटालकुटि महायुद्धं, दृष्टं चैतत्सर्वमपि वारत्तकमंत्रिणा, ततस्तं युद्धं निवार्य चिंतितं च घृतादिबिंदुमात्रेऽपि भूमौ पतिते यत एवंविधाऽधिकरणप्रवृत्तिरभूत् तत एवाधिकरणभीरुर्भगवान् भिक्षां न गृहीतवान् । अहो ! सुदृष्टो भगवता धर्मः, को नाम भगवंतं वीतरागं विना एवंविधमपापं धर्ममुपदेष्टुं समर्थो भवति ? ततो ममापि स एव देवः सेव्यस्तदुक्तमेव चानुष्ठानं पालयितुमुचितमिति विचिंत्य, स मंत्री संसारसुख-

विमुखः शुभध्यानोपगतः संजातजातिस्मरणो देवतार्पितसाधुवेषस्तत्कालमेव गृहं त्यक्त्वा अन्यत्र विहारं कृतवान्। क्रमेण दीर्घकालं संयममनुपाल्य, केवलज्ञानं प्राप्य वारत्तकपुर एव सिद्धिलक्ष्मीं शिश्राय। ततस्तत्पुत्रेण स्नेहापूरितमानसेन सुबुद्धिना एकं रम्यं देवगृहं कारयित्वा रजोहरणमुखपोतिकापरिग्रहधारिणी स्वपितुः प्रतिमा तत्र स्थापिता, सत्रशाला च तत्र प्रवर्त्तिता, सा च साधर्मिकस्थलीति शास्त्रे भण्यते। इति वारत्तककथानकं साधर्मिकचैत्योपरि दर्शितं।

एतेन पंचधा चैत्यान्युक्तानि। अथैतेषु पंचसु भक्तिकृतादिचतुर्विधचैत्यानां कृत्रिमत्वेन न्यूनाधिकभावसंभवात्संख्यानियमो नास्ति, शाश्वतजिनचैत्यानां तु नित्यत्वात् स विद्यते। अतस्त्रिभुवनस्थितानां शाश्वतजिनसंबंधिनां देवगृहाणां बिंबानां च संख्या 'कम्मभूमी'[1] त्यादिचैत्यवंदनांतर्गतगाथानुसारेणाभिधीयते, तद्गाथे च इमे—

संत्ताणवइसहस्सा, लक्खा छप्पन्न अट्ठकोडीओ।
चउसय छायासीया, ति(ते)लुक्के चेइए वंदे ॥ १६ ॥
वंदे नवकोडिसयं, पणवीसं कोडिलक्खतेवन्ना।
अट्ठावीससहस्सा, चउसय अट्ठासिया पडिमा ॥ १७ ॥

---

१ कर्मभूमिसूचितजगच्चिंतामणिचैत्यवन्दने सम्प्रति इमे गाथे एतत्संख्यासूचिके न दृश्येते।

व्याख्या—अष्टौ ८ कोटयः, षट्पंचाश ५६ लक्षाणि, सप्तनवतिः ९७ सहस्राणि चत्वारि शतानि षडशीतिश्चेति, एतावंति त्रैलोक्ये चैत्यानि संति, तान्यहं वंदे इत्यन्वयः ॥१६॥ तथा पंचविंशति २५ कोट्यधिका नवशत ९०० कोटयस्त्रिपंचाश ५३ लक्षाणि अष्टाविंशति २८ सहस्राणि चत्वारि ४ शतानि अष्टाशीति ८८ श्चेति, एतावत्यः शाश्वतजिनचैत्यानां मध्ये प्रतिमाः संति ता अहं वंदे ॥१७॥ इति गाथाद्वयार्थः । अथ त्रिभुवने उक्तप्रमाणानि शाश्वतजिनभवनबिंबानि यथा संति तथा दर्श्यंते—तत्राधोलोके दक्षिणोत्तरभागावस्थितेषु भवनपतीनां दशसु निकायेषु सर्वसंख्यया सप्त ७ कोटयो द्वासप्तति ७२ लक्षाणि च भवनानि संति, प्रतिभवनं च एकैकचैत्यसद्भावेन अधोलोके चैत्यान्यपि सर्वाणि द्वासप्तति ७२ लक्षाधिकसप्त ७ कोटिप्रमितान्येव भवंति, तच्चैत्यांतर्गतबिंबानि तु सर्वसंख्यया अष्टशत ८०० कोटयस्त्रयस्त्रिंश ३३ त्कोटयः षट्सप्तति ७६ लक्षाणि च संति, प्रतिचैत्यमष्टोत्तरशतबिंबसद्भावात्। अथ तिर्यग्लोके तावन्मेरुपंचके पंचाशीति ८५ श्चैत्यानि, तथाहि—प्रतिमेरु चत्वारि चत्वारि वनानि, प्रतिवनं च चतुर्दिक्षु चत्वारि चत्वारि चैत्यानि, पुनः प्रतिमेरु एकैका चूलिका, तदुपरि चैकैकं चैत्यं, एवमेकैकस्मिन् मेरौ सप्तदश सप्तदश चैत्यानि, ततः सर्वमीलने जातानि पंचाशीति ८५ प्रमितानि । तथा प्रतिमेरु विदिग्भागे चतुर्णां चतुर्णां सद्भावात् विंशति २० र्गजदंतगिरयः संति, तदुपरि च विंशति २० श्चैत्यानि, तथा पंचसु देवकुरुषु पंचसूत्तरकुरुषु जंबूशाल्मलीप्रभृतयो दश वृक्षाः संति, तत्र च दश चैत्यानि, तथाशीति ८० र्वक्षस्कारगिरयः संति । प्रतिमहाविदेहं षोडशषोडशसंख्यानां सद्भावात्, तेषामुपरि चाशीति ८० श्चैत्यानि । तथा प्रतिमहाविदेहं द्वात्रिंशद् द्वात्रिंशत्सद्भावेन, पुनः प्रतिभरतं प्रत्यैरवतं चैकैकसद्भावेन सप्तत्य १७० धिकैकशतसंख्या दीर्घवैताढ्यगिरयः संति, तेषु च सप्तत्य १७० धिकैकशतप्रमि-

तान्येव चैत्यानि । तथा जंबूद्वीपे षण्णां सद्भावेन, धातकीखंडेषु पुष्करार्द्धे च द्वादशद्वादशसंख्यानां सद्भावेन त्रिंशत्प्रमिताः कुलगिरयः संति, तेषु च त्रिंशदेव ३० चैत्यानि। तथा धातकीखंडे पुष्करार्धे च द्वौ द्वौ इषुकारगिरी विद्येते, तेषां चतुर्णामुपरि चत्वारि ४ चैत्यानि । तथा समयक्षेत्रसीमाकारिमानुषोत्तरपर्वतोपरि चतुर्दिक्षु चत्वारि चैत्यानि, तथा नंदीश्वरो नामाष्टमो द्वीपस्तत्र द्वापंचाश ५२ चैत्यानि । तथाहि—पूर्वस्यां दिशि नंदीश्वरस्य मध्यदेशे अंजनवर्णोऽञ्जनगिरिरस्ति, तस्य चतुर्दिक्षु चतसृणां वापीनां मध्यस्थाश्चत्वारः श्वेतवर्णा दधिमुखगिरयः संति, तथा तस्यैव चतुर्विदिक्षु द्वयोर्द्वयोः सद्भावेन अष्टसंख्या रक्तवर्णा रतिकरपर्वताः संति, एतन्मीलने पूर्वदिग्भागे जातास्त्रयोदश, एवं दक्षिणोत्तरपश्चिमासु तिसृष्वपि दिक्षु उक्तनाम्नामेव त्रयोदशत्रयोदशगिरीणां सद्भावेन सर्वमीलने जाता द्वापंचाश ५२ गिरयस्तेषामुपरि एकैकसद्भावाद् द्वापंचाशदेव चैत्यानि । तथा एकादशे कुंडलद्वीपे चतुर्दिक्षु चत्वारि चैत्यानि, तथा त्रयोदशे रुचकद्वीपेऽपि चतुर्दिक्षु चत्वारि चैत्यानि, एवं सर्वसंकलनया तिर्यग्लोके त्रिषष्ठ्यधिकचतुःशत ४६३ चैत्यानि जातानि, तच्चैत्यांतर्गतबिंबानि तु चतुरधिकानि पंचाशत्सहस्राणि (५०००४) संति । इहापि प्रतिचैत्यमष्टोत्तरशतबिंबसद्भावात् । अधोर्ध्वलोके सौधर्मदेवलोकादारभ्यानुत्तरपंचकं यावत् चतुरशीति (८४) लक्षाणि सप्तनवतिः (९७) सहस्राणि त्रयोविंशति (२३) श्च विमानानि संति, प्रतिविमानं चैकैकचैत्यसद्भावेन चैत्यान्यपि सर्वाणि सप्तनवति ९७ सहस्राधिकचतुरशीति ८४ लक्षाणि त्रयोविंशति २३ श्चैव भवंति, तन्मध्यगतबिंबानि तु एकनवतिः ९१ कोटयः षट्सप्तति (७६) लक्षाणि अष्टसप्ततिः ७८ सहस्राणि चत्वारि ४ शतानि चतुरशीति ८४ श्च भवंति, अत्रापि प्रतिचैत्यमष्टोत्तर-

सर्वविमानसद्भावात् । इत्येवं लोकत्रयस्थितानां शाश्वतजिनसंबंधिनां चैत्यानां बिंबानां च संख्यामीलने 'सत्ताणवइसहस्से' इत्यादिगाथाद्वयोक्ता सर्वापि संख्या संपद्यते इति । इह किल चैत्यबिंबानामविसंवादिस्थानान्याश्रित्यैषा संख्या दर्शिता, केचित्तु आचार्या विसंवादस्थानान्यप्याश्रित्यानंतरोक्तसंख्यापेक्षयाधिकतरचैत्यबिंबसंख्यां प्रतिपादयंति । यदुक्तं संघाचारनाम्नि चैत्यवंदनभाष्यवृत्तौ—

सगकोडिलक्खबिसयरि, अहो य तिरिए दुतीसपणसयरा । चुलसी लक्खा सगनवइ, सहसतेवीसुवरि लोए ॥ १ ॥
तेरसकोडि सयाकोडि, गुणनवइ सट्ठी लक्ख अहलोए । तिरिए तिलक्ख तेणवइ, सहस पडिमा दुसयचत्ता ॥ २ ॥
बावन्नं कोडिसयं, चउणवईलक्ख सहस चउयाला । सत्त सया सट्ठिजुआ, सासयपडिमा उवरि लोए ॥ ३ ॥ इति ।

व्याख्या—सप्त ७ कोटयो द्वासप्तति ७२ लक्षाणि च अधोलोके चैत्यानि संति, प्रतिभवनमेकैकसद्भावात् । अथ तिर्यग्लोके द्वात्रिंशच्छतानि पंचसप्तत्यधिकानि ३२७५ चैत्यानि संति । तथाहि-पंचमेरुविंशतिगजदंतगिरिजंबूशाल्मल्यादिवृक्षदशकाशीतिवक्षस्कारगिरिसप्तत्यधिकैकशतदीर्घवैताढ्यगिरित्रिंशत्कुलगिरिचतुरिषुकारगिरिमानुषोत्तरगिरिनंदीश्वरकुंडलरुचकाभिधानेषु अविसंवादिस्थानेषु त्रिषष्ट्यधिकानि चत्वारि शतानि ४६३ चैत्यानि प्रागुक्तरीत्यैव बोध्यानि । अवशिष्टसंख्यानि तु चैत्यानि विसंवादिस्थानेषु विद्यंते । तद्यथा-मेरुपंचकापेक्षया पंचसु भद्रशालवनेषु अष्टाष्ट करिकूटानि संति, तदुपरि च प्रत्येकमेकैकस्वीकारेण चत्वारिंश ४० चैत्यानि, तथा अशीत्यधिकत्रिशत ३८० संख्येषु गंगासिंध्वादिनदीप्रपातकुंडेषु त्रीणि शतानि अशीतिश्चैव चैत्यानि । तथाशीति ८० संख्येषु पद्मद्रहादिषु अशीति ८० चैत्यानि, तथा सप्तति ७० संख्यासु

गंगादिमहानदीषु सप्तति ७० चैत्यानि, तथा पंचसु देवकुरुषु पंचसु उत्तरकुरुषु च दश १० चैत्यानि, तथा सहस्रसंख्येषु कंचनगिरिषु सहस्रं १००० चैत्यानि, तथा विंशति २० संख्येषु यमलगिरिषु विंशति २० चैत्यानि, तथा विंशति २० संख्येषु वृत्तवैताढ्येष्वपि विंशति २० चैत्यानि, तथा जंबूशाल्मल्यादिवृक्षदशके दश चैत्यानि संति, तानि च शागविसंवादिचैत्यगणनायां गृहीतान्येव, परं तत्परिकरभूताः षष्ठ ६० चिकैकादश ११ शतपरिमिता ये लघुजंब्वादयस्तेषु तावत्संख्यान्येव ११६० चैत्यानि संति, तेषामत्र ग्रहणं, तथा द्वात्रिंशत्संख्यासु राजधानीषु द्वात्रिंशच्चैत्यानि, एतद्विसंवादिस्थानगतसर्वचैत्यसंख्यामीलने द्वे सहस्रे अष्टौ शतानि द्वादश २८१२ चैत्यानि जातानि। एवमविसंवादिविसंवादिस्थानद्वयगतसर्वचैत्यसंख्या यदा संमील्यते तदा द्वात्रिंशच्छतानि पंचसप्तत्यधिकानि ३२७५ भवंति। अथोर्ध्वलोके चतुरशीति ८४ लक्षाणि सप्तनवति ९७ सहस्राणि त्रयोविंशतिश्च २३ चैत्यानि, प्रतिविमानमेकैकसद्भावात् । इति प्रथमगाथार्थः ॥ १ ॥

अथ गाथाद्वयेनोक्तचैत्येष्वेव क्रमेण बिंबसंख्या यथा–अधोलोके त्रयोदश १३ शतकोटय एकोननवति ८९ कोटयः षष्टि ६० लक्षाणि च प्रतिमाः संति, प्रतिचैत्यमशीत्यधिकैकशतबिंबस्वीकारात् । तथा तिर्यग्लोके त्रीणि ३ लक्षाणि त्रयोनवतिः ९३ सहस्राणि द्वे २ शते चत्वारिंश ४० च प्रतिमाः संति । कुत इत्याह–नंदीश्वररुचककुंडलद्वीपगतषष्टिचैत्येषु प्रत्येकं चतुर्विंशत्यधिकैकशत १२४ बिंबसंख्यास्वीकारात् । शेषस्थानगतद्वापंचाश ५२ द्अधिकसप्तविंशति २७ शतचैत्येषु ( तथा पूर्वोक्तेषु त्रिषष्ट्यधिकचतुःशतचैत्येषु ) च प्रत्येकं विंशत्यधिकैकशत १२० बिंबस्वीकारात् ॥ २ ॥ तथा उपरिलोके द्वापंचाश ५२ त्कोट्यधिकमेकं कोटिशतं चतुर्णवति ९४ लक्षाणिचतुश्चत्वारिंश ४४ त्सहस्राणि सप्त ७ शतानि षष्टि ६० श्च १५२९४४७६०

शाश्वतप्रतिमाः संति । द्वादशकल्पगत चैत्येषु प्रत्येकमशीत्यधिकैकशत १८० बिंबस्वीकारात्, नवग्रैवेयकपंचानुत्तरगतचैत्येषु
च प्रत्येकं विंशत्यधिकैकशत १२० बिंबस्वीकारात्। इति द्वितीयतृतीयगाथार्थः ॥ ३ ॥ अथ शास्त्रोक्तमेव सर्वचैत्यबिंब-
संख्याप्रतिपादकं गाथाद्वयं यथा—

सव्वे वि अट्ठ ८ कोडी, लक्खा सगवन्न ५७ दुसय २०० अडनउया ९८। तिहुयणचेइय वंदे, असंखुदहिदीवजोइवणे
॥ ४ ॥ पनरस १५ कोडिसयाइं, कोडी बायाल ४२ लक्ख अडवन्ना ५८। अडतीस ३८ सहस वंदे, सासयजिण-
पडिम तियलोए ॥ ५ ॥ (अत्र गाथाद्वये संख्याधिक्यं वर्तते तत्संबंधी उल्लेखः प्रस्तावनायां दृश्यः)

सुगमार्थमिदं, नवरं उदधयो द्वीपा ज्योतिष्कविमानानि व्यंतरनगराणि च असंख्यातानि, तेष्वपि असंख्यातान्येव
चैत्यानि संति, तान्यहं वंदे इति गाथापंचकार्थः ॥ इह प्राक् करिकूटादीनां यद्विसंवादिस्थानकत्वमुक्तं तज्जंबूद्वीपप्रज्ञप्त्या-
दिकेषु स्थानेषु चैत्यानामनुक्तत्वात्, तथा च तदनुसारिणी क्षेत्रसमासोक्तगाथा—'करिकूडकुंडदहनइ, कुरुकंचणजमलसम
वियड्ढेसु । जिणभवणविसंवाओ, जो तं जाणंति गीयत्था ॥ १ ॥' इति, तथा यत्प्राक् प्रतिचैत्यमष्टोत्तरशतसंख्यान्येव
बिंबानि गृहीतानि, तदपि जंबूद्वीपप्रज्ञप्त्यनुसारेणैव । तथा च वैताढ्यस्थसिद्धायतनकूटाधिकारे तत्सूत्रं—

'एत्थ णं महं एगे सिद्धाययणे पन्नत्ते, कोसं आयामेणं, अद्धकोसं विक्खंभेणं, देसूणं कोसं उड्ढं उच्चत्तेणं, जाव ज्झया,
तस्स णं सिद्धायतणस्स तिदिसिं तओ दारा पन्नत्ता, ते णं दारा पंचधणुसयाइं उड्ढं उच्चत्तेणं, अड्ढाइज्जाइं धणुसयाइं विक्खंभेणं,
तावतियं चेव पवेसेणं, सेआ वरकणगथूभियागा, दारवण्णओ जाव वणमाला । तस्स णं सिद्धायतणस्स बहुसमरमणिज्जस्स

भूमिभागस्स बहुमज्झदेसभागे, एत्थ णं महं एगे देवच्छंदए पन्नत्ते, पंचधणुसयाइं आयामविक्खंभेणं, सातिरेगाइं पंचधणुसयाइं उड्ढं उच्चत्तेणं सव्व रयणामए, एत्थ, णं अट्ठसयं जिणपडिमाणं जिणुस्सेहपमाणमेत्ताणं सन्निक्खित्तं चिट्ठति, एवं जाव धूवकडुच्छगा इति । 'अट्ठसयं ति अष्टाधिकं शतमित्यर्थः । इह यावत्करणादिदं तासां वर्णनं-तासि णं जिणपडिमाणं इमे एयारूवे वण्णावासे पण्णत्ते, तं जहा-तवणिज्जमया हत्थतलपादतला, अंकामयाइं नखाइं, अंतो लोहिअक्खपडिसेकाइं, कणगामईओ जंघाओ, कणगामया जाणू, कणगमया ऊरू, कणगामईओ गायलट्ठीओ, तवणिज्जमया चुच्चुआ, तवणिज्जमयाओ नाभीओ, रिट्ठामईओ रोमराईओ, तवणिज्जमया सिरिवच्छा, सिलप्पवालमया ओट्ठा, फालिहमया दंता, तवणिज्जमईओ जीहाओ, तवणिज्जमया तालुआ, कणगामईओ नासिगाओ, अंतोलोहिअक्खपडिसेगाओ, अंकामयाणि अच्छीणि, अंतोलोहिअक्खपडिसेगाइं, रिट्ठामईओ ताराओ, रिट्ठामयाणि अच्छिपत्ताणि, रिट्ठामईओ भमुहाओ, कणगामया सवणा, कणगामईओ णिलाडपट्टियाओ, वयरामईओ सीसघडीओ, तवणिज्जमईओ केसंतकेसभूमीओ रिट्ठामया उवरिमुद्धया इति'

अथ तासां जिनप्रतिमानां परिकरवर्णनं, यथा-'तासि णं जिणपडिमाणं पिट्ठओ पत्तेयं पत्तेयं छत्तधारपडिमाओ हिमरययकुंदिंदुप्पगासाइं सकोरिंटमल्लदामाइं धवलाइं आयवत्ताइं सलीलं धारेमाणीओ चिट्ठंति । तासि णं जिणपडिमाणं उभओ पासे पत्तेयं पत्तेयं चामरधारपडिमाओ पन्नत्ताओ चंदप्पभवइरवेरुलियनाणामणिरयणखचियचित्तदंडाओ सुहमरययदीहवालाओ संखंककुंददगरययअमयमहियफेणपुंजसंनिगासाओ चामराओ गहाय सलीलं वीइमाणीओ वीइमाणीओ चिट्ठंति । तासि णं जिणपडिमाणं पुरओ दो दो नागपडिमाओ भूअपडिमाओ जिणजक्खपडिमाओ कुंडधारपडिमाओ सन्निखित्ताओ चिट्ठंति, ताओ णं सव्वरयणामईओ

अच्छाओ जाव पडिरूवाओ। तत्थ णं तासि णं जिणपडिमाणं पुरओ अट्ठसयं घंटाणं, अट्ठसयं भिंगाराणं, एवं आयंसगाणं जाव लोमहत्थपुप्फचंगेरीणं लोमहत्थपुप्फपडलगाणं तेल्लसमुग्गाणं जाव अंजणसमुग्गाणं अट्ठसयं धूवकडुच्छुयाणं चिट्ठंति इति।'

एवं जंबूद्वीपगतगर्भसिद्धायतनेषु प्रत्येकं जिनप्रतिमानामष्टाधिकं शतमेवात्र षष्ठोपांगे प्रोक्तमस्ति। एतदनुसारेण च लोकत्रयवर्तिषु सर्वेष्वपि सिद्धायतनेषु प्रत्येकमष्टोत्तरशतमेव प्रतिमा अवगंतव्याः। अत एव च 'कम्मभूमीत्यादि' स्तोत्रेऽपि एषैव संख्या स्वीकृतेति सुधीभिर्विभाव्यं। अत्र कश्चित्प्रेरयति–ननु भवद्भिरित्थं चैत्यादिसंख्या प्रतिपादिता, परं यद्यधिकसंख्या एव चैत्यादयो भविष्यंति तर्हि न्यूनसंख्याभिधाने महान् दोषः समुत्पत्स्यते इति, तत्रोच्यते–सत्यं, अत एव स्तोत्रांते लोकत्रयवर्तिसकलशाश्वताशाश्वतजिनचैत्यादिप्रणतिप्रतिपादिका 'जं किंचि नामतित्थं' इत्यादिका गाथा पठितास्तीत्यतो न कश्चिद्दोषः। तत्त्वतस्तु एतन्निर्णयं केवलिनो बहुश्रुता वा विदंति, न च विवादे कापि सिद्धिरस्ति, सम्यग्दृष्टीनां हि 'तमेव सच्चं नीसंकं जं जिणेहिं पवेइयं' इति वाक्यस्यैवोपादेयत्वादित्यलं विस्तरेण।

अथ विसंवादाविसंवादिस्थानद्वयमाश्रित्य त्रिभुवनस्थितानां शाश्वतजिनचैत्यानामुच्चत्वादिप्रमाणमभिधीयते–तत्र द्वादशदेवलोकेषु नवग्रैवेयकेषु पंचानुत्तरेषु तथा नंदीश्वरकुंडलरुचकाख्ये द्वीपत्रये यानि जिनचैत्यानि तानि उच्चत्वेन द्विसप्ततियोजनप्रमाणानि, आयामतो योजनैकशतप्रमितानि, विष्कंभतः पंचाशद्योजनमानानि। तथा कुलगिरिदेवकुरूत्तरकुरुमेरुवनगजदंतगिरिवक्षस्कारेषुकारमानुषोत्तरेषु असुरादिदशनिकायेषु च स्थितानां चैत्यानां षट्त्रिंशद् ३६ योजनानि उच्चत्वं, पंचाशद्यो-

१ 'अथाविसंवादिस्थानान्याश्रित्य' इति प्रतिद्वयपाठः।

जनानि दीर्घत्वं, पंचविंशतियोजनानि पृथुत्वं । तथा दीर्घवैताढ्येषु मेरुचूलिकासु [*महानदीषु कुंडेषु] जंबूप्रभृतिवृक्षेषु [वृत्तवैताढ्येषु कांचनगिरिषु दिग्गजगिरिषु द्रहेषु यमलगिरिषु] च यानि चैत्यानि तानि उच्चत्वेन चत्वारिंशदधिकचतुर्दशशतधनुःप्रमाणानि, दैर्घ्येण च एकगव्यूतमानानि, विष्कंभतस्तु अर्धगव्यूतप्रमितानि, [तथा राजधानीषु व्यंतरनगरेषु ज्योतिष्कविमानेषु च स्थितानां चैत्यानां नवयोजनानि उच्चत्वं, सार्धद्वादशयोजनानि दीर्घत्वं, सपादषट् योजनानि पृथुलत्वमस्तीत्यादि सर्वं सुधीभिर्विभाव्यं] इह च नंदीश्वररुचककुंडलद्वीपत्रयस्थायिनां षष्टि (६०) चैत्यानां प्रत्येकं चत्वारि चत्वारि द्वाराणि संति । एतद्व्यतिरिक्तानां तु सर्वेषामपि शाश्वतजिनचैत्यानां त्रीणि त्रीण्येव द्वाराणि बोध्यानि । किं च शाश्वतजिनबिंबानि किल सर्वाण्यपि ऋषभानन १ चंद्रानन २ वारिषेण ३ वर्द्धमाने ४ त्येतन्नामचतुष्टयेनैव भणितव्यानि, तथैवागमे प्रतिपादितत्वादिति प्रोक्ता शाश्वत [जिन] चैत्यसंबंधिवक्तव्यता । अथ भक्तिकृताद्यशाश्वतचैत्यानां गुणदोषादि व्यावर्ण्यते—तत्र तावद्भाल १ नासा २ वदन ३ ग्रीवा ४ हृदय ५ नाभि ६ गुह्य ७ सक्थि ८ जानु ९ पिंडिका १० चरणादि ११ केषु स्थानेषु वास्तुकादिग्रन्थोक्तप्रमाणसमन्वितं नयनश्रवणस्कंधकरांगुल्यादिसर्वावयवेष्वदूषितं समचतुरस्रसंस्थानसंस्थितं पर्यंकासनेन कायोत्सर्गेण वा विराजितं सर्वांगसुंदरं विधिना चैत्यादौ प्रतिष्ठितं श्रीजिनबिंबं पूज्यमानं सत् सर्वभव्यानां समीहितार्थसंपादकं भवति । उक्तलक्षणविहीनं तु तदशुभार्थसूचकत्वेन अपूज्यमेव बोध्यम् । तथा यथोक्तलक्षणोपेतमपि बिंबं यदि कथंचिद्वर्षशतादर्वाक् स्वावयवेषु दूषितं स्यात्तर्हि तदपि अपूज्यम् । यदि तु उत्तमपुरुषैर्विधिना चैत्यादौ स्थापितं बिंबं वर्षशता-

* एते पाठाः प्रतिद्वये न सन्ति । एवमग्रेऽपि ज्ञेयम् ।

दृष्टं विकलांगं स्यात्तदा तत्पूजनेऽपि न दोषः । यदुक्तं—

परिगम्मगाओ उड्ढं, जं बिंबं उत्तमेहि संठवियं । वियलंगु वि पूइज्जइ, तं बिंबं निप्फलं न जओ ॥ १ ॥ त्ति

अत्र पुनरयं विशेषः–मुखनयननखग्रीवाकटिप्रमृतिप्रदेशेषु भग्नं मूलनायकबिंबं सर्वथैव पूजयितुमयोग्यं, आधारपरिकरलांछनादिप्रदेशेषु तु खंडितमपि तत्पूजनीयम्। तथा धातुलेपादिबिंबं विकलांगं सत् पुनरपि सज्जीक्रियते, काष्ठरत्नपाषाणमयं तु तत्खंडितं तत्पुनः सज्जीकर्तुमयुक्तमेव । तथाऽत्यंगा हीनांगा कृशोदरी वृद्धोदरी कृशहृदया नेत्रादिहीना ऊर्ध्वदृग् तिर्यग्दृग् अधोमुखी रौद्रमुखी च प्रतिमा दुष्टा॰ शांतभावानुत्पादकत्वेन नृपादिभयस्वामिनाशार्थनाशशोकसंतापाद्यशुभार्थसूचकत्वेन च सतामपूज्या उक्ता । यथोचितांगधारिका शांतदृष्टिर्जिनप्रतिमा तु सद्भावोत्पादकत्वेन शांतिसौभाग्यवृद्ध्यादिशुभार्थप्रदायकत्वेन च सदैव पूजनीया कथिता ।

अथ गृहस्थानां स्वगृहेषु यादृशी प्रतिमा पूजयितुमर्हा भवति तत्स्वरूपं दर्श्यते–गृहस्थेन किल प्राग्दर्शितदोषवियुक्ता एकांगुलाद्येकादशांगुलपर्यंतोन्मानधारिका परिकरसंयुक्ता स्वर्णरूप्यरत्नपित्तलादिमयी सर्वांगसुंदरा जिनप्रतिमा स्वगृहे संसेव्या । परिकरेणोक्तमानेन च वर्जिता तथा पाषाणलेपदंतकाष्ठलोहमयी चित्रलिखिता च जिनप्रतिमा स्वगृहे नैव पूजनीया ।

तदुक्तं–समयावलिसुत्ताओ, लेवोवलकट्ठदंतलोहाणं । परिवारमाणरहियं, घरंमि न हु पूयए बिंबं ॥ १ ॥ ति

तथा गृहप्रतिमानां पुरतो बलिविस्तारो न कर्त्तव्यः, किंतु भावतो नित्यं स्नपनं, त्रिसंध्यमर्चनं च विधेयमिति । एकादशांगुलेभ्योऽधिकप्रमाणा जिनमूर्त्तिस्तु ग्रामादौ पूजनीया, न तु स्वगृहे । तथा एकादशांगुलेभ्यो हीनप्रमाणा

मूर्त्तिर्मूलनायकतया प्रासादे न स्थापनीया, इति विवेकः । तथा विधिना जिनबिंबस्य कर्तॄणां कारयितॄणां च नराणां सर्वदा समृद्धिवृद्धिर्भवति, दारिद्र्यं दौर्भाग्यं कुशरीरं कुगतिः कुमतिरपमानता रोगः शोकश्चेत्यादयो दोषास्तु कदापि न भवंतीत्यादि । अत्र हि जिनबिंबचैत्यविचारे बहुतरं वक्तव्यमस्ति, तत्सर्वं महाग्रन्थादवगंतव्यमित्युक्ता पंचविधचैत्यवक्तव्यता ।

अथ तद्विनयस्वरूपं प्रतिपाद्यते—

द्वित्रिपंचाष्टादिभेदैः, प्रोक्ता भक्तिरनेकधा ।
द्विविधा द्रव्यभावाभ्यां, त्रिविधांगादिभेदतः ॥ १८ ॥

व्याख्या—इह विनयो भक्तिबहुमानादिलक्षणः प्राग्दर्शितस्तन्मध्ये भक्तिर्द्वित्रिपंचाष्टादिभेदैरनेकधास्ति । तत्र द्विविधा तु द्रव्यभावभेदतो बोध्या, त्रिविधा पुनरंगाग्रभावभेदतः, तत्रांगपूजा जलविलेपनपुष्पाभरणादिभिर्भवति । तथाहि-दुःप्राप्तं सम्यक्त्वरत्नं स्थिरीकर्तुकामेन विवेकवता गृहस्थेन स्वयं शुचिना भूत्वा, प्रथमं बादरजीवयतनार्थं शुद्धवस्त्रादिना श्रीजिनसमानमुद्रान्वितस्य श्रीजिनबिंबस्य प्रमार्जनं विधाय कर्पूरपुष्पकेसरादिमिश्रितगंधोदकेन केवलनिर्मलजलेन वा स्नपनं विधेयं, ततः कर्पूरकेसरचंदनादिमद्द्रव्यैर्विलेपनं कार्यं, ततश्च पुष्पपूजा विधेया, तत्र सामान्यपुष्पैस्तु पूजा नैव कार्या, यदुक्तं—

न शुष्कैः पूजयेद्देवं, कुसुमैर्न महीगतैः । न विशीर्णदलैः स्पृष्टै-र्नाशुभैर्नाविकाशिभिः ॥ १ ॥ पूतिगंधीन्यगंधानि, आम्लगंधानि वर्जयेत् । कीटकोशापविद्धानि, जीर्णपर्युषितानि च ॥ २ ॥ अपि च—हस्तात्प्रस्खलितं क्षितौ निपतितं लग्नं

पतितादयो-येऽप्यूर्ध्वं गतं धृतं कुवसनैर्नाभेरधो यद्धृतं। स्पृष्टं दुष्टजनैर्घनैरभिहतं यद्दूषितं कीटकैः-स्त्याज्यं तत्कुसुमं दलं फलमथो भक्तैर्जिनप्रीतये ॥ ३ ॥ तथा उक्तदोषदुष्टैः पुष्पैः पूजां कुर्वन् जनो नीचत्वं प्राप्नोति। तदुक्तं-पूजां कुर्वन्नं-गलग्नं-र्धरायां पतितैः पुनः। यः करोत्यर्चनं पुष्पैः-स्फोटिकः सोऽभिजायते ॥ ४ ॥ इति। एतावता उक्तदोषवर्जितैः उत्तमपुष्पैः श्रीजिनपूजा कर्त्तव्या, तत्प्रभावाच्च धनसारस्येव सद्यः सकलसुखसमृद्धिवृद्ध्यादयो भव्यांगिनां गृहेषु प्रादुर्भवंति, दारिद्र्यशोकसंतापादयश्च दूरे व्रजंति, इदं तु ऐहलौकिकं फलमुक्तं, पारलौकिकं तु स्वर्गमोक्षप्राप्तिलक्षणं बोध्यं। अथ प्राक् सूचितधनसारश्रेष्ठिकथा त्वेवं—

कुसुमपुरे धनसारश्रेष्ठी त्रिकालं जिनार्चादिपुण्यपरायणः परिवसति। एकदा अर्धरात्रसमये तस्य चेतसि अयं विकल्पः समुत्पन्नो-मया खलु प्राग्भवकृतसत्कर्मबलेन इह प्रवर्द्धमानसमृद्धिर्लब्धा। अथास्मिन् भवेऽपि यदि किंचित् सद्धर्मकर्माचरणं कुर्यां तर्हि भवांतरेऽपि सुखसंपन्नो भवेयं। पुनर्याऽसौ समृद्धिरालोक्यते सापि गजकर्णादिवच्चंचलतरा विद्यते, अतोऽस्याः सफलत्वसंपादनार्थं परत्र सुखसिद्ध्यर्थं च श्रीजिनप्रासादं कारयिष्ये। यतः शास्त्रे श्रीजिनप्रासादकारयितुर्महापुण्यप्राप्तिरभिहितास्ति। ततस्तावदनेनैव कार्येण मया स्वकीयनृधनादिसकलसामग्री सफलीकर्त्तुमुचितेति। अथैवं चिंतयत एव तस्यावशिष्टा सर्वापि रजनी सद्यो व्यतिक्रांता, प्रातःसमयश्च संजातस्तदानीं स श्रेष्ठी स्वन्यायार्जितवित्तेन एकं द्वापंचाशद्देवकुलिकामंडितं श्रीजिनप्रासादं कारयितुं प्रारब्धवान्। ततस्तत्पुत्राः प्रतिदिनं बहुतरं द्रव्यव्ययं विलोक्य इत्थं प्रोचुः-भोः तात! किमिदं त्वया सकलद्रव्यनाशकं निरर्थकं कार्यमारब्धं? अस्मभ्यं तु एतन्न रोचते। यदि पुनर्नवीनानि गृहाभरणा-

दीनि कारितानि भवेयुस्तदापि समीचीनं, यतस्तानि क्वचित्कालांतरेऽपि कार्यसाधकानि स्युः। तथापि स श्रेष्ठी तत्पुत्रवचनं श्रुतमपि अश्रुतमिव कृत्वा, मोल्लासं प्रवर्धमानपरिणामैर्द्रव्यव्ययं कुर्वन् चैत्यं समग्रमपि निष्पादयामास। परं यदा चैत्यं परिपूर्णं जातं तदा कुतोऽप्यंतरायकर्मोदयतः सर्वमपि द्रव्यं व्ययीभूतं, तदा स्वपुत्रा अन्येऽपि मिथ्यात्विनो जनाश्च वदंति सम 'एतच्चैत्यं कारितं तेन धनं गतं।' तथापि स श्रेष्ठी जिनधर्मोपरि निश्चलचित्तः सन् स्वद्रव्यानुसारेण स्तोकं स्तोकं पुण्यं करोत्येव। तत एकदा तत्र स्वधर्माचार्याः समायाताः, वंदनार्थं गतः श्रेष्ठी, गुरुभिः पृष्टं-'ननु अस्ति सुखं भवतां ?' श्रेष्ठिनोक्तं-स्वामिन् ! भवत्प्रसादात् सुखमस्ति, परं जिनप्रासादनिर्माणणादस्य धनं गतमित्यादिका धर्मापभ्राजना जनमध्ये जायते तन्महादुःखं चेतसि विद्यते, यन्मे द्रव्यं गतं तस्य तु किमपि दुःखं नास्ति, यतो द्रव्यं तु इतोऽप्यधिकं जीवानां शुभकर्मोदयतो बहुशः समायाति, अंतरायकर्मोदयतो नश्यति च। तथापि स्वामिन् ! ज्ञानबलेनालोक्यतां ममास्मिन् भवेऽयमंतरायस्त्रुटिष्यति न वा ?। अथैतत् श्रेष्ठिवचः श्रुत्वा तुष्टैर्गुरुभिर्ज्ञानतोऽशुभकर्मनाशं शुभोदयं च विज्ञाय, धर्मोन्नतिकरणार्थं तस्मै नमस्काराख्यो मंत्राधिराजः साधनविधियुक्तः समर्पितः। श्रेष्ठ्यपि शुभदिने देवगृहे मूलनायकबिंबाग्रे स्थित्वाऽष्टमतपःसमाचरणपूर्वकं तस्य जापं कृतवान्। ततः पारणकदिने एकामखंडितोत्तमसुगंधिपुष्पमालां श्रीजिनेंद्रस्य कंठे संस्थाप्य यावता स्तुतिं कर्तुं प्रवृत्तस्तावता संतुष्टो धरणेंद्रस्तत्पुरः प्रादुर्भूय प्रोवाच-'भोः श्रेष्ठिन् ! तुष्टोऽहं भगवद्भक्त्या मार्गयस्व मनोवांछितम्।' ततः श्रेष्ठ्यपि प्रभोः स्तुतिं पूर्णां विधाय प्रोवाच-'यदि त्वं तुष्टोऽसि तर्हि प्रभुकंठारोपितपुष्पमालाया यत्पुण्यं मयोपार्जितं, तदनुसारेण फलमर्पयेति।' तदा धरणेंद्रेणोक्तं-'तावत्पुण्यानुरूपं तु फलं दातुं नाहं समर्थोऽस्मि,

तद्दाने हि चतुःषष्टिसुरेंद्राणामपि अक्षमत्वात्, ततोऽन्यद्याचस्व ।' श्रेष्ठिनोक्तं-' तर्हि मालामध्यगतैकपुष्पस्यैव फलमर्पय ।' इंद्रेणोक्तं-' तत्पुष्पफलमपि दातुं नाहं समर्थोऽस्मि '। ' तर्हि तत्पत्रस्यैवार्पय फलं।' तेनोक्तं-' तत्राप्यसमर्थोऽहं ।' ततः श्रेष्ठी प्राह-' एतावन्मात्रमपि त्वयि यदि सामर्थ्यं नास्ति तर्हि गच्छ स्वस्थाने ।' तदा धरणेंद्रोऽमोघं देवदर्शनमिति हेतोस्तस्य गृहे रत्नभृतसुवर्णकलशान् स्थापयन्नस्मीत्युक्त्वाऽदृश्यो बभूव । श्रेष्ठी अपि तत उत्थाय यत्र गुरव आसन् तत्र गत्वा, गुरुभ्यो वंदनापूर्वकं सर्वमपि तत्स्वरूपं निवेद्य स्वगृहं चागत्य पारणकं कृतवान् । ततः स श्रेष्ठी जिनधर्मनिंदनपरान् पुत्रान् समाहूय, प्राग्भूतसर्ववृत्तांतकथनेन तद्द्रव्यदर्शनेन च श्रीजिनवरेंद्रपुष्पपूजाया महामहिमानं दर्शयित्वा, सर्वमपि कुटुंबं श्रीजिनधर्मे स्थिरीकृत्य यावज्जीवं सुखी भोगी त्यागी च संजातः ॥ इति पुष्पपूजोपरि धनसारश्रेष्ठिकथा ॥

अथाभरणपूजा यथा-विवेकिभिः श्रीजिनबिंबे स्वर्णरत्नचक्षुःश्रीवत्सहारकुंडलबीजपूरच्छत्रमुकुटतिलकादिविविधाभरणानि स्वयमन्येन वाऽनुपभुक्तपूर्वाणि दमयंत्यादिवत् यथाप्रदेशमारोपणीयानि । यथा दमयंत्या प्राग्भवे वीरमतीनाम्न्या रत्नतिलकानि कारयित्वा अष्टापदाद्रौ चतुर्विंशतिजिनानां ललाटेषु आरोपितानि, तत्पुण्यप्रभावाच्च सा स्वाभाविकतिलकालंकृतललाटा अहर्निशं तत्कांतिनिर्नाशिततमःप्रचारा त्रिखंडाधिपनलनरेंद्रपट्टराज्ञी दमयंती बभूव । एवमन्येऽपि बहवो भव्या अनया पूजया विविधसुखश्रेणिसंपन्ना जाताः । इत्यंगपूजा ।

अथ द्वितीयाऽग्रपूजा उच्यते-सा पुनर्नैवेद्यफलाक्षतदीपादिभिर्भवति । तत्र नैवेद्यानि वरसज्जकमोदकादीनि भक्ष्यवस्तूनि, फलानि नालिकेरबीजपूरादीनि, अक्षतानि च स्वभोग्यधान्याद्विशिष्टानि अखंडोज्ज्वलशालिप्रमुखधान्यानि । तानि

श्रीजिनाग्रे ढौकनीयानि। तथा प्रभोः पुरतः प्रवरयतनापूर्वमुत्तमघृतप्रदीपश्च विधेयः, परं विवेकिना गृहस्थेन तेन प्रदीपेन स्वगृहकृत्यं न कार्यं, यदि कोऽपि कुर्यात्तर्हि देवसेनजननीवत्तिर्यग्योन्यादिमहादुःखभाजनं स्यात्। उक्तं च—दीपं विधाय देवाना-मग्रतः पुनरेव हि। गृहकार्यं न कर्त्तव्यं, कृते तिर्यग्भवं भजेत्॥ १॥ इति। इह देवसेनजननीदृष्टांतस्त्वयं—

इंद्रपुरे अजितसेनो नृपः। देवसेनः श्रेष्ठी। स च परमश्राद्धः सदा धर्मकार्यं कुर्वाणः सुखेन कालमतिवाहयति। अथ तस्मिन्नेव पुरे एको धनसेननामा उष्ट्रवाहकः परिवसति। तद्गृहादेका उष्ट्रिका देवसेनगृहे निरन्तरमुपैति। धनसेनेन यष्टिप्रहारादिना ताडितापि गृहे न तिष्ठति। ततो दयार्द्रचेतसा देवसेनश्रेष्ठिना मूल्येन तां गृहीत्वा स्वगृहे रक्षिता। एकदा तत्र धर्मघोषाचार्याः समेतास्तदा बहवो भव्या गुरुवंदनार्थं जग्मुः। श्रेष्ठी देवसेनोऽपि तत्रागतः। ततो गुरुभिर्धर्मोपदेशो दत्तः। स चेत्थं—

"धर्मो जगतः सारः, सर्वसुखानां प्रधानहेतुत्वात्। तस्योत्पत्तिर्मनुजात्, सारं तेनैव मानुष्यं॥ १॥

अपि लभ्यते सुराज्यं, लभ्यंते पुरवराणि रम्याणि। न हि लभ्यते विशुद्धः, सर्वज्ञोक्तो महाधर्मः॥ २॥

न धम्मकज्जा परमत्थि कज्जं, न पाणिहिंसा परमं अकज्जं। न पेमरागा परमत्थि बंधो, न बोहिलाभा परमत्थि लाभो॥३॥

ततो भो भव्याः! प्रमादं परित्यज्य श्रीजिनधर्मे रतिं कुरुत, येन भवतां सर्वार्थाः सिद्ध्यंतीत्यादि।" अथोपदेशान्ते देवसेनः श्रेष्ठी गुरुं पप्रच्छ-स्वामिन्! एका ममोष्ट्रिका विद्यते सा मद्गृहं विना क्वाप्यन्यत्र न तिष्ठति, तत्र किं कारणं?। सूरिणोक्तं-' एषा पूर्वभवे तव मातासीत्, एकदाऽनया श्रीजिनाग्रे दीपं विधाय तद्दीपेन स्वगृहकृत्यानि कृतानि, तथा धूपांगारेण चूल्हकः संधुक्षितस्ततः

कियता कालेन इतो मृत्वाऽनालोचिततत्कर्मवशात् असौ उन्दूरिका संजाता, पूर्वभवस्नेहाच्च ते गृहं न मुंचति।" एतत् श्रुत्वा सर्वेऽपि श्रेष्ठ्यादयो लोका देवसंबंधिवस्तूपभोगस्य एतादृक् फलं विज्ञाय तत्परित्यागे यत्नवंतः संजाताः। ततो गुरुं नत्वा ते स्वं स्वं स्थानं संप्राप्ताः। इति प्रदीपाधिकारे देवसेनजननीदृष्टांतः। अमुं दृष्टांतं निशम्य संसारभीरुभिर्भव्यैर्देवप्रदीपादिना स्वकार्यं न कर्त्तव्यं, देवनिर्माल्यं स्वल्पमपि न ग्राह्यं, देवश्रीखंडतिलकं न कार्यं, देवजलेन हस्तपादाद्यपि न प्रक्षाल्यं, देवद्रव्यं व्याजेन न ग्राह्यं, अन्यदपि देववस्तु स्वकार्ये न प्रयोज्यमिति द्वितीया अग्रपूजा।

अथ तृतीया भावपूजा उच्यते—सा च जिनवंदनस्तवनस्मरणादिभिर्भवति। तत्र प्रथमं चैत्यवंदनोचितदेशे स्थित्वा चैत्यवंदनं कार्यं, शक्रस्तवादि वाच्यं, तथा लोकोत्तरसद्भूततीर्थंकरगुणगणवर्णनपरैर्वचनैः स्तुतिर्विधेया। ततो हृदयकमलकोशे श्रीजिनेंद्रं संस्थाप्य तद्गुणस्मरणं कार्यं। तथा प्रभोः पुरस्तान्नाट्यादि कुर्वता लंकेशादिवदखंडभावो धार्यः। यथा लंकेश्वरेण रावणेनैकदाऽष्टापदाद्रौ भरतेश्वरकारितस्वस्ववर्णप्रमाणोपेतचतुर्विंशतिजिनप्रासादे ऋषभादीनां द्रव्यपूजां विधाय, मंदोदरीप्रभृतिषोडशसहस्रांतःपुरीभिः समं नाटये क्रियमाणे स्ववीणातंत्री त्रुटिता, तदा जिनगुणगानरंगभंगभीरुणा स्वस्नसाकृष्य तत्र संदधे, तदा तज्जिनभक्त्या तेन तीर्थकृन्नामकर्मोपार्जितं, महाविदेहे स तीर्थकृद्भावी। इत्थमन्यैरपि श्रीजिनपूजायां यत्नो विधेयः। भाष्ये यद्यपि–'गंधवनट्टवाइय–लवणजलारत्तियाइ दीवाइ। जं किंचं तं सव्वं, पिउअरइ अग्गपूयाए॥ १॥' इत्यादिवचनेन नाट्यमग्रपूजायां भणितं, तथापि नाट्यस्य प्रायो भावमिश्रितत्वाद्भावस्य च प्राधान्येन विवक्षितत्वात्तस्यात्र पठनेऽपि न दोष इति बोध्यमिति भावपूजा तृतीया। एतेन त्रिविधा पूजा प्रोक्ता। अथ पंचविधा प्रोच्यते—

पुष्पाद्यर्चा १ तदाज्ञा २ च, तद्द्रव्यपरिरक्षणं ३ ।
उत्सव ४ स्तीर्थयात्रा ५ च, भक्तिः पंचविधा जिने ॥ ११ ॥

व्याख्या—श्रीजिनेंद्रे पंचप्रकारा भक्तिर्भवति । तत्र केतकचंपकजातीयूथिकाशतपत्रादिविविधपुष्पैर्धूपदीपचंदनादिभिश्च यदर्चनं सा प्रथमा भक्तिः १ । तथा श्रीजिनेंद्रस्याज्ञायाः सम्यग् मनोवाक्कायैः परिपालनं सा द्वितीया भक्तिः २ । जिनाज्ञा हि सर्वधर्मकृत्यानां मूलकारणमस्ति, ततो जिनाज्ञां विना सर्वमपि धर्मकार्यं निरर्थकमेवेति विज्ञाय जिनाज्ञायां विशेषतो यतितव्यं । उक्तं च—

आणाइ तवो आणाइ, संजमो तह य दाणमाणाए । आणारहिओ धम्मो, पलालपूल व्व पडिहाइ ॥ १ ॥
अपि च–भमिओ भवो अणंतो, तुह आणाविरहिएहिं जीवेहिं । पुण भमियव्वो तेहिं, जेहिं नंगीकया आणा ॥ २ ॥
जो न कुणइ तुह आणं, सो आणं कुणइ तिहुअणजणस्स । जो पुण कुणइ जिणाणं, तस्साणा तिहुअणे चेय ॥ ३ ॥ इति

तथा देवसंबंधिद्रव्यस्य सम्यग् रीत्या रक्षणं वृद्धिकरणं च तृतीया भक्तिः । यतोऽस्मिन् संसारे स्वद्रव्यरक्षणादौ तु सर्वेऽपि प्राणिनस्तत्पराः संत्येव, परं देवद्रव्यरक्षणादौ कस्याप्युत्तमस्यैव प्रवृत्तिर्भवति । ये पुनर्देवद्रव्यस्य रक्षणादौ सम्यक् प्रवर्त्तंते, ते प्राणिनोऽत्र परत्र च लोके महासुखश्रेणिसंपन्ना भवंति । ये च तद्भक्षणादि कुर्वंति ते उभयत्रापि घोरतर-दुःखभाजः स्युः । उक्तं च—

जिणपवयणवुड्ढिकरं, पभावगं नाणदंसणगुणाणं । भक्खंतो जिणदव्वं, अणंतसंसारिओ होइ ॥ १ ॥

जिणपवयणवुड्ढिकरं, पभावगं नाणदंसणगुणाणं । रक्खंतो जिणदव्वं, परित्तसंसारिओ होइ ॥ २ ॥

परित्त त्ति परिमितभवस्थितिरित्यर्थः ।

जिणपवयणवुड्ढिकरं, पभावगं नाणदंसणगुणाणं । वड्ढंतो जिणदव्वं, तित्थयरत्तं लहइ जीवो ॥ ३ ॥

वृद्धिरत्र अपूर्वापूर्वद्रव्यप्रक्षेपादिनाऽवसेया । सा च पंचदशकर्मादानकुव्यापारवर्जनसद्व्यवहारादिविधिना एव कार्या । अविधिना तु तद्विधानं प्रत्युत दोषाय संपद्यते । यदुक्तं—

जिणवरआणारहियं, वद्धारंता वि के वि जिणदव्वं । बुड्डंति भवसमुद्दे, मूढा मोहेण अन्नाणी ॥ १ ॥

केचित्तु श्राद्धव्यतिरिक्तेभ्यः समधिकग्रहणं गृहीत्वा कलांतरेणापि तद्वृद्धिरुचितैवेत्याहुः ।

अपि च—चेइयदव्वविणासे, इसिघाए पवयणस्स उड्डाहे । संजइचउत्थभंगे, मूलग्गी बोहिलाभस्स ॥ १ ॥

विनाशोऽत्र भक्षणोपेक्षणादिलक्षणो बोध्यः । अत्र चैत्यद्रव्यभक्षणरक्षणादौ बहवो दृष्टांताः संति । परमत्र त्वेकः सागरश्रेष्ठिदृष्टांतः स्पष्टतया निगद्यते—

साकेतपुरे सागरश्रेष्ठी परमार्हतः परिवसति । एकदा तत्रत्यैः शेषश्रावकैः सुश्रावकोऽयमिति चिन्तित्य तस्मै चैत्यद्रव्यं दत्तं, प्रोक्तं च—'चैत्यकार्यकर्तृसूत्रधारादिभ्यस्त्वया द्रव्यं दातव्यमिति ।' सोऽपि लोभाभिभूतः सूत्रधारादिभ्यो रूपकादिद्रव्यं न दत्ते, किं तु समर्घाणि धान्यगुडतैलघृतवस्त्रादीनि चैत्यद्रव्येण संगृह्य तेभ्यो दत्ते, लाभं च स्वगृहे स्थापयति ।

एवं रूपकाशीतिभागरूपाणां काकिणीनामेकं सहस्रं लाभेन संगृहीतं, अर्जितं च तेनैवं घोरतरं दुष्कर्म । ततः कियता कालेन स तत्कर्म अनालोच्य मृत्वा जलनिधौ जलमानुषः संजातः । तत्र स जात्यरत्नग्राहकपुरुषैर्जलमध्याद्गृहीत्वा, समुद्रांतर्जलचरोपद्रवनिवारकजलमध्योद्योतकारकतैलग्रहणार्थं वज्रघरट्टके प्रक्षिप्तस्तत्र च महाव्यथया षड्भिर्मासैर्मृत्वा तृतीये नरके नारकोऽजनि । नरकादुद्धृत्य पंचशतधनुर्मानो महामत्स्यो जातः, तत्र पुनर्म्लेच्छकृतसर्वांगच्छेदादिमहाकदर्थनया मृत्वा गतश्चतुर्थपृथिव्यां । एवमेकद्व्यादिभवांतरितो नरकसप्तकेऽपि वारद्वयमुत्पेदे । ततः सहस्रकाकिणीप्रमाणदेवद्रव्योपभोगवशात्सांतरनिरंतरोत्पत्त्या सहस्रं वारान् श्वा जातः । एवं सहस्रं सहस्रं वारान् गर्तशूकरैडकमृगसंबरशृगालमार्जारमूषकनकुलगृहकोकिलगोधासर्पवृश्चिकपृथिव्यप्तेजोवायुवनस्पतिशंखशुक्तिजलौकःकीटिकाकृमिकीटपतंगमक्षिकाभ्रमरकच्छपमत्स्यखरमहिषकरभवेसरतुरगगजादिभवेषु भ्रांतः प्रायः सर्वभवेषु शस्त्रघातादिना महाव्यथां सहमान एव मृतः । ततश्च क्षीणबहुदुष्कर्मा स सागरजीवो वसंतपुरे कोटिद्रव्येश्वरवसुदत्तश्रेष्ठिनो भार्याया वसुमत्या गर्भत्वेनोत्पन्नः । तदा तस्मिन् गर्भस्थे एव नष्टं सर्वं द्रव्यं, जन्मदिने च जनको विपन्नः, पंचमे वर्षे मातापि मृता । तदा लोकैर्निःपुण्यक इति तस्य नाम दत्तं, ततो द्रमकवृत्त्या स वृद्धिं प्राप । अन्यदा दृष्टः स्नेहलेन मातुलेन नीतश्च स्वगृहे, परं तद्रात्रावेव मुषितं मातुलगृहं चौरैः । एवं यस्य वेश्मनि स एकमपि दिनं वसति तत्र चौरधाटधग्निगृहस्वामिनाशाद्युपद्रवः स्यात् । ततः कुपुत्रोऽयं ज्वलंती गड्डरिका वा मूर्तिमानुत्पातो वा इत्यादिलोकनिंदया उद्विग्नः स गतो देशांतरं, प्राप्तश्च तामलिप्तीं पुरीं, स्थितश्च विनयंधरमहेभ्यगृहे भृत्यवृत्त्या । परं ज्वलितं तद्दिन एव तद्गृहं, निष्कासितश्च तत्कालं तेन श्वान इव स्वगृहात् । ततः किंकर्तव्यमूढः सन् प्राक्कृतं

स्वकर्म निंदति स्म। यतः—

कम्मं कुणंति सवसा, तस्सुदयंमि य परवसा हुंति। रुक्खं दुरुहइ सवसो, निवडई परवसो तत्तो ॥ १ ॥

ततः स्थानांतरितानि भाग्यानीति विमृश्य गतः स समुद्रतीरं, तद्दिने एवारूढश्च प्रवहणं। तत्र धनावहसांयात्रिकेण सार्द्धं संप्राप्तः स सुखेन द्वीपांतरं। दध्यौ च स्वचित्ते–'उद्घटितं मम भाग्यं, यन्मयि आरूढेऽपि न भग्नं यानपात्रं, यद्वा विस्मृतमिदं संप्रति दुर्दैवस्य कृत्यं, परं मा भूद्वलनावसरे तस्यैतत्स्मरणं' इत्यादि तच्चिंतानुसारेणैव दैवेन वलमानस्य प्रचंडदंडप्रहतभांडमिव शतखंडीकृतः पोतः। तदा निःपुण्यकः फलके लग्नः, कथंचिदब्धितीरस्थं कंचिद्ग्रामं प्राप्तः। तत्र पुनस्तद्ग्रामठक्कुरस्य सेवां चकार। अन्यदा चौरधाटया निपातितः ठक्कुरः, निःपुण्यकश्च ठक्कुरपुत्रबुद्ध्या बध्वा नीतः स्वपल्ल्यां। तद्दिवसे एव चान्यपल्लीपतिना विनाशिता सा पल्ली, ततस्तैरपि निर्भाग्योऽयमिति मत्वा निष्कासितः। एवमन्येष्वपि सहस्रस्थानेषु अनेकोपद्रवहेतुत्वात् निष्कासनादिमहादुःखं वेदयन् वांछितार्थदायकसेलकयक्षप्रासादं प्राप्तः। तत्र स्वदुःखनिवेदनपूर्वकमेकाग्रतया तमाराधयामास। एकविंशत्युपवासैश्च तुष्टो यक्षः प्राह–'हे भद्र ! प्रतिसंध्यं मत्पुरः सुवर्णचंद्रकसहस्रालंकृतो महामयूरो नृत्यं करिष्यति, नृत्यानंतरं च प्रतिदिनमेकैकं तत्कनकपिच्छं पतिष्यति तत्त्वया ग्राह्यमिति।' अथ हृष्टेन तेनापि कतिचिद्दिनानि यावत् तानि गृहीतानि। एवं च नवशती पिच्छानां प्राप्ता, शतमेकं शेषं स्थितं। अथ दुष्कर्मप्रेरितेन तेन चिंतितं–'एकैकपिच्छग्रहणायाद्यापि कियच्चिरमत्रारण्येऽहं तिष्ठामि ? यदेकमुष्ट्यैव मत्राण्यपि गृह्णामि तद्वरमिति।' ततस्तद्दिने नृत्यन्मयूरस्य तानि पिच्छानि एकमुष्ट्यैव यावद् ग्रहीतुं प्रवृत्तस्तावन्मयूरः काकरूपः सन्नुड्डीय गतः, पूर्वगृहीतपि-

च्छान्यपि नष्टानि । यतः—दैवमुल्लंघ्य यत्कार्यं, क्रियते फलवन्न तत् । सरोंभश्चातकेनात्तं, गलरंध्रेण गच्छति ॥ १ ॥ ततो धिगमां मुधैव मयेदमौत्सुक्यं कृतमिति विचिंतयन्, वने इतस्ततो भ्रमन् ज्ञानिनं मुनिमेकं दृष्ट्वा नत्वा च स्वप्राग्भवस्वरूपं पप्रच्छ । तेनाप्युक्तं सर्वमपि यथानुभूतं प्राग्भवस्वरूपं । ततो देवद्रव्योपजीवनप्रायश्चित्तं ययाचे । मुनिनाप्युक्तं–'समधिकतावद्देवद्रव्यप्रदानेन तस्य सम्यग् रक्षणवृद्धिकरणादिना च तद्दुष्कर्मप्रतीकारः सर्वांगीणभोगर्द्धिसुखलाभश्च संपद्यते ।' अथैतत् श्रुत्वा " यावत्प्राग्गृहीतद्रव्यात्सहस्रगुणं देवद्रव्यं न प्रयच्छेयं तावद्वस्त्राहारादिनिर्वाहमात्रादधिकं स्वल्पमपि द्रव्यं न संग्रहिष्ये " इति मुनिसमक्षं तेन नियमो जगृहे, विशुद्धश्राद्धधर्मश्चांगीकृतः । ततो यद्यद् व्यवहरति तत्र तत्र बहुद्रव्यं सोऽर्जयति । यथा यथा च द्रव्यमर्जयति तथा तथा देवद्रव्यं ददाति । एवं स्वल्पैरेव दिवसैर्देशनिमित्तं काकिणीलक्षदशकं द्रव्यं दत्तवान् । ततो देवस्याऽनृणीभूतः क्रमादर्जितप्रभूततरद्रव्यः सन् स्वपुरं प्राप्तः । तत्र च सर्वमहेभ्येषु मुख्यतया ज्ञायमानः स्वयं कारितेषु अन्येषु च सर्वजैनप्रासादेषु निजशक्त्या अखंडभक्त्या प्रत्यहं महापूजाप्रभावनादिकरणसम्यग्देवद्रव्यरक्षणयथायुक्तितद्वृद्धिप्रापणादिना अर्हद्भक्तिरूपं प्रथमं स्थानकमाराध्य जिननामकर्मोपार्जितवान् । अवसरे च गीतार्थगुरुपार्श्वे दीक्षामाददे । तत्रापि सिद्धांताध्ययनेन गीतार्थीभूय सद्धर्मदेशनादिना बहून् भव्यान् प्रतिबोध्य प्रांतेऽनशनेन कालं कृत्वा सर्वार्थसिद्धे देवत्वमनुभूय महाविदेहे तीर्थकृद्विभूतिं भुक्त्वा सिद्धः ॥ इति देवद्रव्याधिकारे सागरश्रेष्ठिकथानकं ॥ उक्ता तृतीया भक्तिः ॥

अथोत्सवरूपा चतुर्थी भक्तिः—ये खलु भव्यात्मभिरष्टाह्निकास्नात्रचैत्यबिंबप्रतिष्ठाद्युत्सवाः क्रियंते, तथा श्रीपर्यूषणापर्वणि कल्पपुस्तकवाचनप्रभावनाद्युत्सवा विधीयंते सापि जिनशासनोन्नतिहेतुत्वाज्जिनपूजैव निगद्यते । यतः—

प्रकारेणाधिकं मन्ये, भावनातः प्रभावनां । भावना स्वस्य लाभाय, स्वान्ययोस्तु प्रभावना ॥ १ ॥ इति ।

अथ तीर्थयात्रारूपा पंचमी भक्तिः-श्रीशत्रुंजयगिरिनारार्बुदाचलाष्टापदसम्मेतशिखरादिसकलतीर्थेषु जिनवंदनतत्क्षेत्रस्पर्शनादिनिमित्तं यद्गमनं सा तीर्थयात्रा, इयमपि जिनभक्तिरेव बोध्या । तत्र सकलतीर्थाधिराजः श्रीशत्रुंजयतीर्थं, तत्सदृशं हि लोकत्रयेऽपि अन्यत्तीर्थं नास्ति । यदुक्तं—नमस्कारसमो मंत्रः, शत्रुंजयसमो गिरिः । वीतरागसमो देवो, न भूतो न भविष्यति ॥ १ ॥ इति । किं च श्रीशत्रुंजयतीर्थस्पर्शनादिना महापापिनोऽपि प्राणिनः स्वर्गादिसुखभोक्तारो भवंति, सुकृतिनस्तु अल्पेनैव कालेन सिद्ध्यंति । यदुक्तं—

कृत्वा पापसहस्राणि, हत्वा जंतुशतानि च । इदं तीर्थं समासाद्य, तिर्यंचोऽपि दिवं गताः ॥ १ ॥ एकैकस्मिन् पदे दत्ते, शत्रुंजयगिरिं प्रति । भवकोटिसहस्रेभ्यः, पातकेभ्यो विमुच्यते ॥ २ ॥ छट्ठेणं भत्तेणं, अपाणएणं च सत्त जत्ताओ । जो कुणई सेत्तुंजे, सो तइयभवे लहइ सिद्धिं ॥ ३ ॥ इति । ततो ये प्राणिनो दुर्लभं मानुषं जन्म संप्राप्य श्रीसिद्धाचलयात्रां कुर्वंति ते स्वकीयं जन्म सफलीकुर्वंति । ये पुनस्तथाविधसामर्थ्याभावात् स्वयं यात्रां कर्तुमशक्ता अपि अन्येषां यात्राकारिणामनुमोदनां कुर्वंति यथा-" धन्यास्ते प्राणिनो ये श्रीसिद्धाचलं स्वदृष्ट्याऽवलोकयंति, स्वशरीरेण स्पृशंति, स्वकरेण तत्र श्रीऋषभादिजिनार्चनं कुर्वंति " इत्यादि । पुनः परेभ्यो यात्राविषयमुपदेशं प्रयच्छंति, यथा-" वपुः पवित्रीकुरु तीर्थयात्रया, चित्तं पवित्रीकुरु धर्मवांछया । वित्तं पवित्रीकुरु पात्रदानतः, कुलं पवित्रीकुरु सच्चरित्रतः ॥ १ ॥ " इत्यादि । तथा-" मुक्तिमंदिरमारोहतां जनानां सुखेनारोहणाय प्रवरं सोपानमिव विराजमानं श्रीविमलाचलतीर्थराजं कदाहं स्वनेत्रयुगलेन विलोक-

यिष्ये ? कदा पुनः स्वशरीरेण तत्स्पर्शनं करिष्ये ? तद्दर्शनादिव्यतिरेकेण मृथैव याति ममेदं जन्म " इत्यादिकां स्वचेतसि भावनां ये भावयंति ते प्राणिनः स्वस्थानस्था एव तीर्थयात्राफलं प्राप्नुवंति। ये तु सत्यामपि सामग्र्यां तीर्थयात्रां न कुर्वंति ते अज्ञानिनो दीर्घसंसारिणो बोध्याः। तथा श्रीशत्रुंजये स्वल्पमपि कृतं पुण्यं महाफलप्रदं भवति, यदुक्तं-न वि तं सुवन्नभूमी-भूसणदानेन अन्नतित्थेसु। जं पावइ पुण्णफलं, पूयाण्हवणेण सित्तुंजे ॥ १ ॥ पुनस्तीर्थयात्राकारकैः प्राणिभिर्यात्राकाले षड्रीकारयुक्तैर्भाव्यं, येन तीर्थयात्राप्रयासो विशिष्टतराभीष्टफलप्रदायकः संपद्यते। षड् रीकारास्त्वमी-एकाहारी भूमिसंस्तारकारी, पद्भ्यां चारी शुद्धसम्यक्त्वधारी। यात्राकाले पः सचित्तापहारी, पुण्यात्मा स्याद्ब्रह्मचारी विवेकी ॥ १ ॥ इति। अपि च-श्रीतीर्थपांथरजसा विरजीभवंति, तीर्थेषु बंभ्रमणतो न भवे भ्रमंति। द्रव्यव्ययादिह नराः स्थिरसंपदः स्युः, पूज्या भवंति जगदीशमथार्चयंतः ॥ १ ॥ इत्यादि तीर्थसेवाया महाफलं विज्ञाय भव्यात्मभिः शत्रुंजयादिमहातीर्थयात्रायां सादरैर्भाव्यं, स्वद्रव्यं च सफलीकर्त्तव्यं। तथा तीर्थं प्रति जिगमिषूणामन्येषां भव्यसत्त्वानां शंबलादिप्रदानेन साहाय्यं करणीयं। तथा पुनस्तीर्थयात्रां कुर्वद्भिः प्राणिभिर्धनश्रेष्ठ्यादिवत्तीर्थोन्नतिः कर्त्तव्या, न तु लाघवमिति। धनश्रेष्ठिवृत्तांतस्त्वयं-

हस्तिनापुरे नगरे अनेककोटिद्रव्येश्वरो धनो नाम श्रेष्ठी परमः श्रावकः परिवसति। स च कदाचिन्निशायां धर्मजागरिकां कुर्वाणः स्वमनसीत्थं चिंतयति स्म-" मया खलु पूर्वकृतसुकृतवशादिदं मनुष्यजन्म संप्राप्तं, तथार्यक्षेत्रजातिकुलरूपविभवसंभारोऽपि लब्धः, तत्र पुनः प्रभूततरपुण्योदयात् रंकपुरुषेण निधानमिव श्रीवीरजिनधर्मः संप्राप्तो मया, परं यावत् श्रीविमलाचलगिरिनारादिमहातीर्थेषु श्रीनाभेयनेमीश्वरादितीर्थेश्वरदर्शनवंदनपूजनादिसत्कृत्यानि मया न कृतानि तावत् किं ममानेन

संग्रामेनापि प्रसरप्रनदिरप्यसज्जनमंदिरादिरगोंगेति ।" अथैवं विचिन्त्य स प्रभाते राज्ञः शुभाज्ञां समादाय नगरे तीर्थयात्रा-विधिविकासुघोषणां कारयामास। मेलयति स्म च बहुतरं संघं। ततः स श्रेष्ठी शुभदिने हस्तिनापुरान्निर्गत्य महुतरसंघसंयुक्तः सन् नागनाथीश्वरश्रीवीरजिनचैत्यालयमनुव्रजन्, मार्गे स्थाने स्थाने महर्घ्याणि चैत्यानि पूजयन्, जीर्णचैत्यानि च समुद्धरन्, मुनिजनपदकमलं वंदमानः, साधर्म्यवात्सल्यं कुर्वाणः, करुणाभरेण दुःस्थजनेभ्यः प्रत्यहं वांछितार्थं प्रददानः, क्रमेण सुखंसुखेन श्रीशत्रुंजयशैलं संप्राप्तः। तत्र महाविभूत्या श्रीयुगादिजिनेंद्रं वंदित्वा पूजयित्वा, अष्टाह्निकोत्सवं कृत्वा सिद्धक्षेत्रस्पर्शनादिना निजं जन्म सफलीभूतं मन्यानस्ततः प्रस्थाय क्रमेण गिरिनारशैलं समाजगाम। तत्र पुनर्मूलजिनभवने यादवकुलमंडनं निखिलब्रह्मचारिचक्रचूडामणिश्रीनेमिनाथजिनेंद्रं त्रिःप्रदक्षिणीकृत्य प्रणम्य च सुरभिजलस्नपनसरससुरभिगोशीर्षचंदनविलेपनपूर्वकं सद्रत्नमणिकनकरत्नाभरणैर्नेमिप्रभोर्बिम्बं विभूषितवान् । पंचवर्णसुरभिपुष्पमालां च प्रभोः कण्ठे स्थापितवान् । ततः पुरस्तादष्टमंगलालेखन १ नालिकेरादिफलढौकन २ धूपोत्क्षेप ३ दीपकविधान ४ छत्रचामरचंद्रोदयमहाध्वजारोपणादिविविधपूजां विधाय, भक्तिभरोल्लसितरोमांचः सन् श्रेष्ठी यावन्नेमिजिनेंद्रस्य मुखकमलं विलोकयति तावन्महाराष्ट्रमंडलमध्यगतमलयपुरात् कोटिद्रव्येश्वरः सितपटसाधुप्रद्वेषी बोटकपाखंडिभक्तो वरुणनामा श्रेष्ठी महता निजसंघेन युक्तस्तत्र प्राप्तः । अथ तां धनश्रेष्ठिनिर्मितां नेमिपूजां दृष्ट्वा स्वहृदये संजातामर्षः सन् स श्रेष्ठी एवं प्रोवाच—" हहा ! एतैस्तत्त्वविमुखैः सितपटभक्तैः श्राद्धरूपो निर्ग्रन्थवरिष्ठोऽपि, स्वामी कथं सग्रंथः कृतः ?" इति । ततः स मिथ्याबुद्धिः क्षिप्रं तद्वस्त्राभरणकुसुमादिकं प्रभोर्बिम्बाद्दूरीकारयति स्म ।,गजपदजलेन च महता बिम्बमपि प्रक्षालयति स्म । तदैवमविधिं कुर्वन्तो वरुणस्य धनश्रेष्ठिना

सार्धं तत्र बहुतरो वाग्विवादो बभूव। ततो द्वावपि महामर्षसंयुक्तौ निजनिजपरिकरेण सह त्वरितं शैलादुत्तीर्णौ, संप्राप्तौ च विक्रमनृपाधिष्ठितगिरिनगराभिधाननगरासन्नप्रदेशे। तत्र पुनर्द्वयोरपि संघपत्योः सपरिच्छदयोर्निजनिजतीर्थस्थापनार्थं समजनि परस्परं महान् विवादः। तस्मिन्नवसरे लोकमुखादाकर्णितवृत्तांतेन विक्रमभूपेन सहसा तत्रागत्य विवदमानौ द्वावपि तौ निवार्य-" प्रातर्भवद्विवादं दूरीकरिष्ये, अधुना कोऽपि, कदाग्रहं मा विदधातु," इत्युक्त्वा स्वस्थानं जग्मे। तदा तौ श्रेष्ठिनावपि स्वस्वनिवेशे समायातौ। अथ " को जानाति प्रभाते कस्य तीर्थं स्थापयिष्यति राजा ?" इत्यादिमानमदुःखेन दुःखितं निद्रामप्राप्नुवंतं शासनसुरीध्यानोपगतचेतसं धनश्रेष्ठिनं रात्रौ शासनदेवी स्वयं प्रादुर्भूयेत्थं प्रोवाच—

" वरसिद्धसिद्ध-धम्मिट्ठ, जिट्ठ सुपइट्ठसमयलद्धट्ठ। भयनट्ठ मा मणागवि, नियमणे कुणसु दुक्खमिणं ॥ १ ॥

जं चिइवंदणमज्झे, गाहं उज्जिंतसेल इच्चाइं। पक्खिवियानियसहाए, जयं धुवं तुज्झ दाहामि ॥ २ ॥"

एतत् श्रुत्वा हृष्टतुष्टहृदयः स श्रेष्ठी सुखेन निशां निनाय। अथ प्रभाते राज्ञा समाहूतौ द्वावपि संघपती सकलनिजसंघसहितौ राज्ञः पार्श्वे समागतौ, उक्तवंतौ च स्वस्ववृत्तांतं। ततो राज्ञा भणितं-"अहो भवंतौ द्वावपि जिनसमयविदौ जिनधर्मश्रद्धालू जिनवरप्रवचनप्रभावनाकरणप्रवरौ विद्येते, तद्भवद्भ्यामेतादृगसमंजसं कार्यं कथं विहितमिति ?।" तदा धनश्रेष्ठी भणति स्म-' स्वामिन्! निजतीर्थे यदि वयं वस्त्राभरणादिभिर्जिनपूजां कुर्मस्तदा कथमेष दुराशयस्तस्या विध्वंसनं करोति ?।' ततो वरुणः प्राह-' राजन्! वयं स्वतीर्थे न हि कस्याप्यविधिं कर्तुं दद्म' इत्यादि। अथ तयोर्वचनं निशम्य [illegible] नृपः प्रोवाच-' को जानाति कस्येदं तीर्थमस्ति ?।' ततो धनः प्राह-" स्वामिन्नस्माकमेवेदं तीर्थं, यतः

ऽस्माकं चैत्यवंदनमध्ये चिरंतनी 'उज्जिंतसेलसिहरे' इत्यादिका गाथा विद्यते। यद्यत्र भवतामप्रत्ययो भवेत्तर्हि असत्संघे गर्वानपि शिशुतरुणवृद्धान् अधुनैव चैत्यवंदनसूत्रं पाठयत।" तदा वरुणोऽवादीत्-'को जानात्यनेन नवीनैव गाथा निष्पाद्य सकलसंघाय शिक्षिता भविष्यतीति।' ततो नृपः प्रत्ययनिमित्तमेकं स्वपुरुषं पवनगतिकरभिकया स्वनगरासन्नमिलवाञ्छिग्रामात् शीलादिगुणैः प्रसिद्धां परमजिनधर्मानुरागिणो धनदेवश्रेष्ठिनः पुत्रीं सत्वरं तत्रानायितवान्। आनाय्य च श्वेताम्बराशाम्बरसंघसमक्षं नृपेण सा पृष्टा-'पुत्रि! त्वां प्रति चैत्यवन्दनं समायाति ?।' तयोक्तं-'स्वामिन्! सम्यग् रीत्या।' 'एवं तर्हि शीघ्रं तत् कथयस्व।' सापि च नृपादेशादतिगंभीरस्वरेण सकलमपि चैत्यवंदनं तावत्पपाठ यावदेषा गाथा—

उज्जिंतसेलसिहरे, दिक्खा नाणं निसीहिया जस्स। तं धम्मचक्कवट्टिं, अरिट्ठनेमिं नमंसामि ॥ १ ॥ त्ति।

अथैतत् श्रुत्वा विक्रमनृपः सकललोकसहितो हर्षादुल्लसितमानसः सन् इत्थं प्रोवाच-'जयति स्म जयति स्म श्वेतांबरसंघो नूनमेतत्तीर्थमेतस्यास्तीति।' ततः पराजितो वरुणश्रेष्ठी स्वसंघसहितो लोकमुखात्स्वनिंदां तत्प्रशंसां च शृण्वन् विमनस्कीभूय स्वस्थानं जगाम। अथ तद्दिनादारभ्य एषा गाथा चैत्यवंदनमध्ये पठ्यते। यद्यपीयं गाथा अविरतिदेवतानिर्मितत्वेन विरतिमतां पठितुमयुक्ता तथापि शासनोन्नतिहेतुत्वेन गीतार्थैरशठैः पूर्वसूरिभिरनिषिद्धत्वात् युक्तमेव सतां तत्पठनमिति ध्येयम्। यः पुनस्तथाविधपूर्वाचार्यचरितमन्यथा करोति तस्यागमे महत्तरो दंडो भणितोऽस्ति। यदवादि श्रीभद्रबाहुस्वामिभिः—

आयरियपरंपरएण, आगयं जो उ छेयबुद्धीए । कोवयइ च्छेयवाइ, जमालिनासं स नासिहिइ ॥ १ ॥ त्ति ।

व्याख्या—आचार्याः संसारपातभीरवः सुधर्मस्वाम्यादयस्तेषां प्रणालिका–पारंपर्यं तेनागतं व्याख्यानं क्वचिद्व्यवहारनयप्राधान्येन क्वचिन्निश्चयनयप्राधान्येन च सूत्राभिप्रायः तं यः कुतर्कदर्पध्मातमानसः छेकबुद्ध्या साहसिकमतिकतया विकोपयति दूषयति विपरीतं ब्रूयादित्यर्थः । स एवं छेकवादी पण्डिताभिमानी जमालिनाशं जमालिनिह्नववत् सर्वज्ञमतविकोपको विनंक्ष्यति विनाशमेष्यति इति ॥

अथ विक्रमनृपेण बहुतरसत्कारसन्मानदानपूर्वकं विसर्जितः स धनश्रेष्ठी शीघ्रं निजसंघयुक्तो भूयोऽपि उज्जयंतशैलं संप्राप्तः । तत्र पुनर्नेमिजिनेंद्रं वरवस्त्राभरणकुसुमादिभिः सविशेषमभ्यर्च्य याचकेभ्यो दानं दत्त्वा, अष्टाह्निकोत्सवं कृत्वा ततः प्रस्थाय निजसंघेन सार्धं प्रयाणं कुर्वन् क्रमेण हस्तिनापुरं समाजगाम । तत्र नृपादिसकललोकैर्विहितबहुसन्मानो धनश्रेष्ठी चिरकालं श्रावकधर्मं प्रपाल्य बहुधा जिनप्रवचनप्रभावनां विधाय प्रांते सुगतेर्भाजनं बभूव । इति तीर्थयात्राधिकारे वृद्धसंप्रदायागतं धनश्रेष्ठिकथानकं ॥ इति पंचमी भक्तिः ॥

एतेन पंचधा पूजा प्रोक्ता । अथाष्टविधा प्रोच्यते—

वरगंधधूवचुक्ख–क्खएहि कुसुमेहि पवरदीवेहिं ।<br>
नेवज्जफलजलेहि य, जिनपूआ अठ्ठहा होइ ॥ २० ॥

व्याख्या—वरगंधा उत्तमचंदनादिद्रव्याणि (१) धूपः संमीलितागुरुप्रभृतिसुगंधिद्रव्यसमुत्थः (२) चोक्षाक्षतानि अखंडोज्ज्वलशाल्यादिधान्यानि (३) कुसुमानि पंचवर्णसुगंधिपुष्पाणि (४) अवरदीपा निर्मलघृतपूरितमणिस्वर्णादिमयप्रदीपाः (५) नैवेद्यानि मोदकादीनि (६) फलानि नालिकेरादीनि (७) जलानि निर्मलपवित्रपानीयानि (८) एतैरष्टधा जिनपूजा भवतीति गाथार्थः ।

अथैतस्याः फलं दर्श्यते—

अंगं गंधसुगंधं, वन्नं रूवं सुहं च सोहग्गं ।
पावइ परमपयं पि हु, पुरिसो जिनगंधपूयाए ॥ २१ ॥
जिणपूयणेण पुज्जो, होइ सुगंधो सुगंधधूवेण ।
दीवेण दित्त(त्ति)मंतो, अक्खओ अक्खएहिं तु ॥ २२ ॥
पूयइ जो जिणचंदं, तिण्णि वि संझासु पवरकुसुमेहिं ।
सो पावइ सुरसुक्खं, कमेण मुक्खं सयासुक्खं ॥ २३ ॥
दीवालीपव्वदिणे, दीवं काऊण वद्धमाणग्गे ।

जो ढोयइ वरसफले, वरसं सफलं भवे तस्स ॥ २४ ॥

ढोयइ वहुभत्तिजुओ, नेवज्जं जो जिणिंदचंदाणं ।

भुंजइ सो वरभोए, देवासुरमणुअनाहाणं ॥ २५ ॥

जो ढोयइ जलभरियं, कलसं भत्तीइ वीयरागाणं ।

सो पावइ परमपयं, सुपसत्थं भावसुद्धीए ॥ २६ ॥ त्ति

षडप्युत्तानार्था इति न व्याख्याताः । सर्वापीयं जिनपूजा भव्यात्मभिर्मनोवाक्कायशुद्ध्यैव विधेया, यतः शुभभावेन विहिता स्वल्पापि जिनभक्तिर्महाफलदायिनी संपद्यते, तदुक्तं—

यास्याम्यायतनं जिनस्य लभते ध्यायंश्चतुर्थं फलं, षष्ठं चोत्थित उद्यतोऽष्टममथो गंतुं प्रवृत्तोऽध्वनि ।

श्रद्धालुर्दशमं बहिर्जिनगृहात्प्राप्तस्ततो द्वादशं, मध्ये पाक्षिकमीक्षिते जिनपतौ मासोपवासं फलं ॥ १ ॥ इत्यादि ।

अत्र हि तथाविधभावशुद्धिरेव प्रधानं कारणमवगंतव्यं । इत्युक्ताष्टविधपूजा । अथादिशब्दसंगृहीता सप्तदशविधा एकविंशतिविधा च पूजा नाममात्रेण दर्श्यते—

ण्हवण १ विलेवण २ वत्थजुग ३, गंधारुहणं च ४ पुप्फरोहणयं ५ ।

मालारुहणं ६ वन्नय ७, चुन्न ८ पडागाण ९ आभरणे १० ॥ २७ ॥
मालकलावंसघरं ११, पुप्फप्पगरं च १२ अट्ठमंगलयं १३ ।
धूवुक्खेवो १४ गीयं १५, नट्टं १६ वज्जं १७ तहा भणियं ॥ २८ ॥

एतद्गाथार्थस्त्वयं—निर्मलजलेन स्नपनं १ चंदनादिना नवांगेषु नवतिलकविधानं २ वस्त्रयुगपरिधापनं ३ वासचूर्णप्रक्षेपः ४ विकसितपुष्पढौकनं ५ प्रभुकंठे गुंफितपुष्पमालारोपणं ६ पंचवर्णपुष्पैः सर्वांगशोभाविधानं ७ कर्पूरकृष्णागरुप्रभृति सुगंधद्रव्यैरर्चनं ८ ध्वजारोपणं ९ छत्रमुकुटाद्याभरणारोपणं १० पुष्पगृहरचनं ११ जिनाग्रे पंचवर्णपुष्पाणां पुंजविधानं १२ तंदुलादिभिरष्टमंगलालेखनं १३ सुगंधिधूपोत्क्षेपः १४ गीतगानं १५ विविधनाट्यविधानं १६ शंखपणवझल्लर्यादिवादित्रवादनं १७ । एषा सप्तदशविधा पूजा । अथैकविंशतिविधा यथा—

जिणपडिमाणं पूया, भेया इगवीस नीर १ चंदणयं २ ।
भूसण ३ पुप्फो ४ वासं ५, धूवं ६ फल ७ दीव ८ तंदुलयं ९ ॥ २९ ॥
नेवज्ज १० पत्त ११ पूगी १२, वारि १३ सुवत्थं च १४ छत्त १५ चामरयं १६ ।
वाजित्त १७ गीय १८ नट्टं १९, थुइ २० कोससंवुड्ढि २१ इयहीरं ॥ ३० ॥

इत्येकविंशतिविधा पूजा। एवमष्टोत्तरशतप्रकारादयोऽन्येऽपि बहवः पूजाप्रकाराः शास्त्रांतरेभ्योऽवसेयाः। इति व्याख्यातश्चैत्यविनयाख्यो दर्शनविनयस्य तृतीयो भेदः, शेषविनयभेदानां तु विस्तरव्याख्या महाग्रंथेभ्यो विद्वद्भिः स्वयमभ्यूह्या।

अथ क्रमप्राप्तास्तिस्रः शुद्धयो व्याख्यायंते—जिन १ जिनमत २ जिनमतस्थितेत्यादि ३। जिनो वीतरागः १ जिनमतं च स्यात्पदलांछिततया तीर्थकृद्भिः प्रणीतं यथावस्थितजीवाजीवादितत्त्वं २ जिनमतस्थितास्तु अंगीकृतपारमेश्वरप्रवचनाः साध्वादयः ३। एतान् त्रीन् विमुच्य शेषमेकांतग्रहग्रस्तं सर्वमपि जगद् विचार्यमाणं संसारमध्ये कचवरनिकरप्रायमस्ति, एतावता जिनादित्रितयमेव सारं, शेषं तु सर्वमप्यसारमिति भावः, एवंविधविचारणया हि सम्यक्त्वस्य विशोध्यमानत्वादेतास्तिस्रः शुद्धय उच्यंते। अन्यत्र पुनरन्यथा तिस्रः शुद्धयः प्रोक्तास्तद्यथा—

मणवायाकायाणं, सुद्धी सम्मत्तसाहणा तत्थ। मणसुद्धी जिणजिणमय–वज्जमसारं मुणइ लोयं॥ १॥
तित्थंकरचलणारा–हणेण जं मज्झ सिज्झइ न कज्जं। पत्थेमि तस्थ नन्नं, देवविसेसं च वयसुद्धी॥ २॥
छिज्जंतो भिज्जंतो, पीलिज्जंतो वि डज्झमाणो वि। जिणवज्जदेवयाणं, न नमइ जो तस्स तणुसुद्धी॥ ३॥

व्याख्या—मनोवाक्कायानां त्रयाणां करणानां शुद्धिः सम्यक्त्वस्य साधनभूता विद्यते, त्रिकरणशुद्ध्यैव सम्यक्त्वमुत्पद्यत इत्यर्थः, तत्र यदा जिनजिनमतवर्जं सर्वमपि लोकमसारं मन्यते असारतया जानाति तदा मनःशुद्धिर्भवति, इयं प्रथमा शुद्धिः १। तथा तीर्थंकरचरणाराधनेन यन्मम कार्यं न सिद्ध्यति तदा कार्ये अन्यं देवविशेषं न प्रार्थयामि, एतावता जिनमन्या यत्कार्यं न जातं तदन्यस्मात् कुतो भवतीत्यर्थः, एतादृग् मुखेन यज्जल्पनं सा वाक्शुद्धिः, इयं द्वितीया २। तथा यः

शस्त्रादिना छिद्यमानो भिद्यमानः पीड्यमानो दह्यमानोऽपि सन् जिनवर्जं परं देवं मनागपि कायेन न नमति तस्य तनुशुद्धिर्भवति, इयं तृतीया ३ । इतिगाथात्रयार्थः ॥ इति शुद्धित्रिकं ॥

अथ दूषणपंचकं व्याख्यायते—शंकाकांक्षेत्यादि, तत्र शंका रागद्वेषविमुक्तयथार्थोपदेशकसर्वज्ञोक्तवचनेषु संशयः, सा च सम्यक्त्वविघातहेतुत्वात् सम्यग्दर्शनिभिः सर्वथैव परिहर्त्तव्या, यतो लोकेऽपि शंकाकर्तुर्नरस्य कार्यं विनश्यदेव दृश्यते, यस्तु शंकां न विदधाति तस्य तु अवश्यमेव कार्यसिद्धिर्विलोक्यते, तत्र च व्यवहारिकद्वयदृष्टांतः, स चायं—

एकस्यां नगर्यां द्वौ व्यवहारिकौ वसतः । तौ च प्राक्तनकर्मवशादाजन्मदरिद्रौ, अन्यदा इतस्ततो भ्रमंतौ एकं कंचित् सिद्धपुरुषं समीक्ष्य स्वसंपत्तिसिद्ध्यर्थं तत्सेवातत्परौ बभूवतुः । सोऽप्येकदा तयोर्विविधभक्त्या प्रसन्नीभूय ताभ्यां कंथाद्वयं दत्त्वा इत्थं प्रोवाच–'इदं कंथाद्वयं षण्मासीं यावन्नित्यं कंठे धार्यं, ततः प्रत्यहं पंचशतदीनारप्रदं भविष्यतीति ।' अथ द्वावपि कंथाद्वयं समादाय स्वस्वस्थानं समाजग्मतुः, ततस्तयोर्मध्ये एकेन व्यवहारिकेण 'किं ज्ञायते इयं कंथा षण्मासांते यथोक्तफलदायिनी संपत्स्यते न वा ?' इत्यादिस्वहृदयसमुद्भूतशंकया जनलज्जया च सा कंथा परित्यक्ता । अन्येन तु तत्फलप्राप्तिविषयिणीं शंकां जनलज्जां च परित्यज्य षण्मासीं यावत्सा व्यूढा, तेन स महर्द्धिर्जज्ञे । ततस्तस्य ऋद्धिविस्तारं विलोक्य स कंथापरित्यागी वणिक् आजीवितं पश्चात्तापपरो जातः । द्वितीयस्तु यावज्जीवं सुखी भोगी त्यागी च समजनि । अतो भव्यात्मभिः सद्वस्तुनि स्वल्पापि शंका न कार्या । इति शंकायां वणिग्द्वयदृष्टांतः १ ।

तथा कांक्षा अन्यान्यदर्शनाभिलाषः, परमार्थतो भगवदर्हत्प्रणीतागमानाश्रमरूपा, सापि सम्यक्त्वं दूषयतीत्यतः सम्य-

त्तिभिस्तत्परिहारे यत्नो विधेयः, यतो लोकेऽपि कांक्षाकारी नरः प्रचुरतरदुःखमाग्भवन् विलोक्यते, तत्रेदं ज्ञातं—

एकस्मिन्नगरे कश्चिद्ब्राह्मणो वसति, स प्रत्यहं धाराभिधस्वगोत्रदेव्याराधनं करोति। कदाचिल्लोकमुखाच्चामुंडां सप्रभावां निशम्य तामप्याराधयामास, एवं च द्वयोरुपासनं कुर्वतस्तस्य कियान् कालो व्यतिचक्राम। अथान्येद्युः स विप्रो ग्रामांतरं गच्छन् मार्गे सद्यः समंतात् समायातेन नद्याः पूरेण प्लाव्यमानस्ततो बहिर्निसर्तुमशक्नुवन् धावस्व धावस्व धारे! कुलदेवि!, धावस्व धावस्व चामुंडे! मां रक्ष रक्षेत्यादिवचनैर्देवीद्वयस्मरणं चकार। तदा समागते द्वे अपि देव्यौ, परं परस्परेर्ष्यया द्वयोर्मध्ये एकयापि देव्या स विप्रो न रक्षितः। ततश्चार्त्तरौद्रध्यानोपगत एव जलमध्ये त्रुडितो, गतश्च परलोकमिति हेतोः स्वहितकांक्षिभिर्भव्यैरन्यान्याकांक्षा कदापि न कार्या। इति कांक्षायां विप्रदृष्टांतः २।

तथा विचिकित्सा श्रीजिनाज्ञानुसारिशुद्धाचारधारकसाध्वाद्युत्तमपुरुषाणां निंदा, सापि सम्यक्त्वदूषकत्वात् परिवर्जनीया, यतो निःसपत्नसम्यक्त्वरत्नयत्नवतां प्राणिनामन्यस्य कस्यचित्सदोषस्यापि लोकस्य निंदा कर्त्तुमयुक्ता, ततो निर्दुष्टसाध्वादेस्तु निंदायाः सर्वथैव परिहारो भाव्य इति भावः, ये पुनः श्रद्धालुनामधेयं बिभ्राणा अन्येषां पुरः स्वगुर्वादीनामवर्णवादं कथयंति, तथा महामंगलभूतं गुर्वादिकं सन्मुखमागच्छंतं दृष्ट्वा, अमंगलमेतज्जातमथ न मे कार्यसिद्धिर्भविष्यतीत्यादि स्वमनसि चिंतयंति ते महामूढत्वेन जिनप्रवचनपराङ्मुखत्वेन च एकांतमिथ्यात्विनो महादुष्कर्मबंधका बोध्याः। किं बहुनोक्तेन? तेषां हि इह परत्र च कदापि प्रायो वांछितार्थसिद्धिर्न भवतीति ३।

तथा कुत्सिता दृष्टिर्दर्शनं येषां ते कुदृष्टयः कुतीर्थिकास्तेषु विषये प्रशंसा श्लाघा कुदृष्टिप्रशंसेत्युच्यते। साऽप्युक्तहेतोरेव

वर्जनीया । ये तु कुतीर्थिकानां किंचिदतिशयादिकं दृष्ट्वा समीचीनमेतन्मतं यत्रैतादृशा अतिशयिनः संतीत्यादितत्प्रशंसां कुर्वंति, ते मूढा निःप्रयोजनमेव स्वं शुद्धं सम्यक्त्वरत्नं मलिनीकुर्वंतीति ४ ।

तथा तद्विषय एव आलापसंलापादिना परिचयस्तत्परिचयः कुदृष्टिसंसर्ग इत्यर्थः, सोऽपि सम्यक्त्वं दूषयतीत्यतस्तत्परिहारः कार्यः । सुदृष्टिमतां साध्वादीनां तु निरंतरं परिचयो विधेयः, अन्यथा नंदमणिकारादिवल्लब्धोऽपि सम्यक्त्वादिधर्मो विनाशमुपयाति । तद्वृत्तांतस्त्वेवं--

राजगृहे नगरे एकदा श्रीवर्द्धमानस्वामी समवसृतः । श्रेणिकादयः श्रद्धालुजना वंदनार्थं समेताः । तदानीं सौधर्मकल्पवासी दर्दुरांकनामा देवश्चतुःसहस्रसामानिकदेवपरिवृतो जिनवंदनाय तत्राजगाम, आगत्य च सूर्याभ [ नाम ] देववत् श्रीवीराग्रे द्वात्रिंशद्विधं नृत्यं विधाय स्वस्थानं ययौ । तदा गौतमेन पृष्टं-'भगवन् ! अनेन देवेन एतावती ऋद्धिः केन पुण्येन लब्धा ? ।' भगवानाह-अस्मिन्नेव पुरे एको महेभ्यो नंदमणिकारश्रेष्ठी वसति स्म । स एकदा मन्मुखाद्धर्मं श्रुत्वा सम्यक्त्वपूर्वकं श्राद्धधर्मं प्रपन्नवान् । ततः पालितश्च बहुकालं तेन श्राद्धधर्मः । अथ कदाचिद्दैवयोगेन कुदृष्टिसंसर्गात्तथाविधसाध्वादिपरिचयाभावाच्च तस्य चेतसि मिथ्याबुद्धिः प्रवृद्धिमुपागता, सद्बुद्धिस्तु क्रमेण मंदमंदभावं गतवती । ततश्च मिथ्यपरिणामैः कालक्षेपं कुर्वन् स श्रेष्ठी एकदा ग्रीष्मकाले सपौषधमष्टमतपः कृतवान् । तत्र तृतीयदिनमध्यरात्रौ तृषापीडितत्वेन समुत्पन्नार्त्तध्यानः सन् इत्थं व्यचिंतयत्—

धन्यास्त एव संसारे, कारयंति बहूनि ये । वापीकूपादिकृत्यानि, परोपकृतिहेतवे ॥ १ ॥

धर्मोपदेशकैश्चापि, प्रोक्तोऽसौ धर्म उत्तमः । ये त्वाहुर्दुष्टतामत्र, तदुक्तिर्दृश्यते वृथा ॥ २ ॥
ग्रीष्मर्त्तौ दुर्बलाः सत्त्वास्तृषार्त्ता वापिकादिषु । समागत्य जलं पीत्वा, भवंति सुखिनो यतः ॥ ३ ॥
अतोऽहमपि च श्रत-वापीमेकां महत्तरां । कारयिष्यामि तस्मान्मे, सर्वदा पुण्यसंभवः ॥ ४ ॥ इति ॥

अथोक्तरीत्या ध्यानं कुर्वन् सोऽशिष्टां सर्वामपि रजनीं गमयित्वा प्रातःकाले पारणां कृत्वा श्रेणिकनृपस्यादेशमादाय वैभारगिरिसमीपे एकां महापुष्करिणीं कारयामास । तस्याश्चतुर्दिक्षु विविधवृक्षोपशोभितसत्रागारमठमंडपदेवकुलादिमंडितानि वनानि च कारितवान् । अत्रांतरे बहुतरकुदृष्टिपरिचयात् सर्वथा त्यक्तधर्मस्य तस्य प्रबलतरदुष्कर्मोदयतः शरीरे षोडश महारोगाः समुत्पन्नाः । तन्नामानि चेमानि—

कासे १ सासे २ जरे ३ दाहे ४, कुच्छिसूले ५ भगंदरे ६ । हरसा ७ अजीरए ८ दिट्ठी ९, पिट्ठसूले १० अरोअए ११ ॥ १ ॥ कंडू १२ जलोयरे १३ सीसे १४, कन्नवेयण १५ कुट्ठए १६ । सोल एए महारोगा, आगममिम वियाहिया ॥ २ ॥ इति ॥

अथैतद्रोगाक्रांतशरीरः स श्रेष्ठी महाव्यथया ततो मृत्वा तद्वापीगतैकाग्रध्यानवशात्तस्यामेव वाप्यां गर्भजदर्दुरत्वेनोत्पन्न-स्तत्र च तस्य स्वकीयवापीदर्शनाज्जातिस्मरणमुत्पेदे । ततः स दर्दुरस्तादृग्धर्मविराधनायाः फलं विज्ञाय संजातवैराग्यः सन् अतः परं मया नित्यं षष्ठतपः कार्यं, पारणके च वापीतटे जनस्नानात्प्रासुकीभूतं जलमृत्तिकाद्येन भक्षणीयमित्यभिग्रहं गृहीत-वान् । अथ स तस्मिन्नवसरे तद्वाप्यां स्नानादिनिमित्तं समागच्छतां जनानां मुखान्मदागमनप्रवृत्तिं श्रुत्वा मां च प्राक्तनभ-

द्धर्माचार्यं मत्वा वंदनार्थं निर्गच्छन् लोकैः करुणाबुद्ध्या पुनः पुनरंतःप्रक्षिप्यमाणोऽपि वंदनैकाग्रचित्तः सन् यावद्वाप्या बहिर्निर्जगाम तावद्भक्तिभरोल्लसितमानसो बहुपरिकरसंयुक्तः श्रेणिकनृपोऽपि मद्वंदनाय समागच्छन् तत्र संप्राप्तः। ततश्च दैवयोगात्स दर्दुरो मार्गे श्रेणिकनृपाश्वखुरेण क्षुण्णस्तदा तत्रैव शुभध्यानेन मृत्वा सौधर्मदेवलोके दर्दुरांकनामा महर्द्धिको देवः समुत्पन्नः, उत्पत्तिसम[या]नंतरमेव चावधिज्ञानेन सर्वमपि स्वप्राग्भववृत्तांतं स्मृत्वा मामत्र समवसृतं विज्ञाय सद्यः समागत्य वंदित्वा स्वऋद्धिं दर्शयित्वा च निजस्थानं गतः, अनेन चेत्थमेतावती ऋद्धिः प्राप्ता। पुनर्गौतमेन पृष्टं–'स्वामिन्नयमितश्च्युत्वा क्व यास्यति ?।' भगवतोक्तं–'महाविदेहे उत्पद्य सेत्स्यति।' इत्येवं कुदृष्टिपरिचयोद्भवं विपाकं निशम्य सम्यक्त्ववद्भिः सर्वथैव तत्परिचयः परिहर्त्तव्यः। इति कुदृष्टिपरिचये नंदमणिकारवृत्तांतः ५। इत्येवं दूष्यते सम्यक्त्वमेभिरिति दूषणानि इमानि शंकादीनि पंच प्रोक्तानि। एतेषां च सम्यक्त्वमालिन्यहेतुत्वात् सम्यग्दृष्टिभिरवश्यं परिहारः कार्यः॥

अथ प्रभावकाष्टकं व्याख्यायते—प्रवचनीत्यादि, तत्र प्रवचनं द्वादशांगीरूपं तदस्यास्ति अतिशयवदिति प्रवचनी, वर्त्तमानकालोचितसूत्रार्थधारकस्तीर्थप्रवाहक आचार्य इत्यर्थः। अयं च देवर्द्धिगणिक्षमाश्रमणादिवदाद्यः प्रवचनप्रभावको बोध्यः, देवर्द्धिगणिक्षमाश्रमणकथानकं चेदं—

एकदा राजगृहनगर्यां श्रीवर्द्धमानस्वामिना समवसृतं, देवैः समवसरणं च रचितं, द्वादशापि पर्षदो मिलिताः, सौधर्मेन्द्रोऽपि समागत्य भगवंतं त्रिःप्रदक्षिणीकृत्य वंदित्वा उचितस्थाने उपविष्टः। तदा भगवता सकलभव्योपकाराय सजलजलधरध्वानानुकारिणा स्वरेण परमानंदसुधारसस्राविणी निबिडतरमोहांधकारविद्राविणी निखिलजगज्जंतुचित्तचमत्कारकारिणी महा-

मनोहारिणी धर्मदेशना प्रदत्ता । ततो देशनांते इंद्रः पप्रच्छ–'स्वामिन्नस्यामवसर्पिण्यां भवदीयं तीर्थं कियत्कालं प्रवर्तिष्यते ? कया रीत्या च विच्छेदं यास्यति ?।' भगवानाह–"इंद्र ! एकविंशतिसहस्रवर्षप्रमाणं दुःषमानामकं पंचमारकं यावन्मे तीर्थं प्रवर्तिष्यते । ततः पंचमारकप्रांतदिने पूर्वाह्ने श्रुत १ सूरि २ धर्म ३ संघा ४ विच्छेदं यास्यंति, मध्याह्ने च विमलवाहननृपसुधर्ममंत्रितद्धर्मा विच्छेदं यास्यंति । सायाह्ने च बादरवह्निर्विच्छेदं यास्यति । इत्थं तीर्थविच्छेदो भावी ।" अथ पुनरिंद्रः पप्रच्छ–'स्वामिन् ! भवतां पूर्वगतं श्रुतं कियत्कालं स्थास्यति ? ।' भगवानाह–'भो इंद्र ! एकं वर्षसहस्रं यावन्मे पूर्वगतं स्थास्यति, ततो विच्छेदं यास्यति ।' पुनरिंद्रेण पृष्टं–'कस्मादाचार्यात्परं मम पूर्वगतं यास्यति ? ।' स्वामिनोचे–'देवर्द्धिगणिक्षमाश्रमणात् ।' पुनः पृष्टं–'सांप्रतं तस्य जीवः कुत्रास्ति ? ।' स्वामिनोक्तं–'यस्तव पार्श्वे स्थितो हरिणेगमेषी देवस्तव पदात्यनीकाधिपतिः स तज्जीवः ।' तत् श्रुत्वा इंद्रो विस्मितो हरिणेगमेषिणं प्रशशंस । पार्श्वस्थेन हरिणेगमेषिणापि सर्वो वृत्तांतः श्रुतः । ततः सपरिच्छद इंद्रो भगवंतं नत्वा स्वस्थानं गतः ।

अथ हरिणेगमेषी अनुक्रमेणायुर्दलिकहानौ षण्मासाभ्यंतरे प्रविष्टे आयुषि मनुष्यभवायुर्बद्धवान् । ततः स्वस्य पुष्पमालाम्लानिकल्पवृक्षप्रकंपादिच्यवनलक्षणानि दृष्ट्वा स इंद्रं व्यजिज्ञपत्–"स्वामिन् ! यूयमस्माकं प्रभवः सर्वप्रकारैः पोषकाः स्थ । अत एव ममोपरि प्रसादं विधाय तथा विधेयं यथा परभवेऽपि धर्मप्राप्तिर्भवेत् । मम पुनर्योनियंत्रसंकटे पतितस्य उभयथाप्यंधकारविलुप्तचैतन्यचक्षुषो जरायुमलविलिप्तवपुषोऽग्निवर्णसूचीसमूहसंभेद्यमानशरीरादप्यधिकवेदनस्य मतः मम देवभवसंबंधिसुखमागामिभवधर्मकरणीयं च विस्मृतिं यास्यति । तस्मान्मत्स्थानोत्पन्नोऽपरो हरिणेगमेषी मद्बोधनार्थं मोक्तव्यः,

यथा प्रभूणां प्रभुत्वं परभवेऽपि सफलं स्यात् ।" इंद्रेणाप्यंगीकृतं । ततः पुनर्हरिणेगमेषिणा स्वविमानभित्तौ वज्ररत्नेन लिखितं–' योऽत्र विमाने हरिणेगमेषी उत्पद्येत तेनाहं परभवे प्रतिबोधनीयः, नो चेत्तस्य इंद्रचरणकमलसेवापराङ्मुखत्वदोष ' इति । अथायुःक्षये स ततश्च्युत्वा अस्मिन् जंबूद्वीपे भरतक्षेत्रे सौराष्ट्रदेशे वेलाकूलपत्तनं नाम नगरं, तत्रारिदमनो राजा, तस्य सेवकः कामर्द्धिनामा क्षत्रियः काश्यपगोत्रीयः, तस्य भार्या कलावती, तस्याः कुक्षौ पुत्रत्वेनोत्पन्नः । तदा सा स्वप्ने महर्द्धिकं देवमपश्यत् । क्रमेण शुभलग्ने पुत्रजन्माभूत्, ततो देवर्द्धिरिति तस्य नाम कृतं । स च पंचधात्रीमातृभिः पाल्यमानो द्वादशवार्षिको जातः । पित्रा द्वे कन्ये परिणायिते, ताभ्यां सह वैषयिकं सुखं बुभुजे । पुनश्चाधर्मिजनसंसर्गवशान्निरंतरं स्वमदृशै राजपुत्रैः क्षत्रियपुत्रैश्च सहाखेटकचर्यां विदधाति, धर्मवार्तामपि न जानाति न शृणोति च, एवं स कालं गमयति।

अथ तस्मिन् विमाने नवीनो हरिणेगमेषी उत्पन्नः, स उत्पत्तिसमयकरणीयचैत्यपूजादिदेवकर्माणि कृत्वा सुधर्मायां सभायां इंद्रसेवार्थं गतः, विस्मित इंद्रस्तं दृष्ट्वावादीत्–' त्वं नवीनः समुत्पन्नः ? ।' स प्राह–' स्वामिन् ! ओमिति ।' तत इंद्रः प्राह–' मौलो हरिणेगमेषी त्वया प्रतिबोध्यः ।' तेनाप्यंगीकृतं । अथैकदा तेन हरिणेगमेषिणा स्वविमानभित्तिलिखितान्यक्षराणि दृष्टानि । तदैवं तेन पत्रं लिखितं—" स्वभित्तिलिखितं वाक्यं, मित्र त्वं सफलं कुरु । हरिणेगमेषिको वक्ति, संसारं विषमं त्यज ॥ १ ॥" ततः स्वसेवकदेवं समाकार्यैतत्पत्रं त्वया देवर्द्धये देयमित्युक्त्वा तत्र प्राहिणोत् । स देवोऽपि यत्र देवर्द्धिः स्थितोऽभूत् तत्राकाशस्थ एव पत्रं मुक्तवान् । ततो देवर्द्धिरप्याकाशात्पतितं पत्रं दृष्ट्वाऽवाचयत्, परमर्थं न बुबोध । ततः कियति काले गते स देवः स्वप्नेऽमुमेव श्लोकमवादीत्, तथापि स न प्रतिबुद्धः । एकदा आखेटकं कर्तुं अर-

ण्यानीं गत्वा स वराहपृष्ठेऽश्वं मुक्तवान्। तत्र चैकाकी सन् यदा दूरं गतस्तदा स देव इत्थं महाभयं तं प्रति दर्शितवान्, अग्रे केसरिसिंहः समुपतस्थौ, पृष्ठतो महती गर्त्ता, पार्श्वयोर्महावराहौ घुर्घुरायमाणौ, अधस्ताद्धरित्री चकंपे, उपरिष्टाद् दृषदः पतंति, एवं मरणांतभयजनकानि कारणानि दृष्ट्वा स भयविह्वलः सन् प्रतिदिशं विलोकयति स्म। कोऽप्यत्र मम मरणरक्षको न संभवतीति चिंतायां स एव देवो रुद्रहृष्यावादीत्–'अद्यापि मदुक्तश्लोकार्थं नावबुद्ध्यसे?।' स प्राह–'अहं तु किमपि नावबुध्ये।' तदा देवेन शाम्भरसंबंधिसर्ववृत्तांतनिवेदनपूर्वकं भणितं–'यदि त्वं व्रतग्रहणं कुर्यास्तर्हि इतो मरणांतकष्टात् त्वां रक्षेयमिति।' तत् श्रुत्वा तेनापि तदंगीकृतं। ततो देवेन स उत्पाट्य लोहिताचार्यसमीपे मुक्तस्तत्र दीक्षां भागवतीं जग्राह। ततो देवर्द्धिः पठन् गीतार्थो जातः, यावद् गुरुसमीपे पूर्वगतश्रुतमासीत् तत्सर्वं पठित्वा श्रीकेशिगणधरसंतानीयदेवगुप्तगणेः पार्श्वे प्रथमपूर्वमर्थतोऽधीतवान्। द्वितीयपूर्वसूत्रे पठ्यमाने विद्यागुरवः परासवो जाताः। ततस्तं गीतार्थं ज्ञात्वा गुरुभिः स्वपट्टे स्थापितः। एकेन गुरुणा गणिरिति पदं दत्तं, द्वितीयेन क्षमाश्रमण इति, ततो देवर्द्धिगणिक्षमाश्रमण इति नाम जातम्।

अथ तस्मिन् काले विद्यमानानां पंचशताचार्याणां मध्ये युगप्रधानपदधारकः कलिकालकेवली सर्वसिद्धांतवाचनादायको जिनशासनप्रभावको देवर्द्धिगणिक्षमाश्रमणोऽन्यदा श्रीशत्रुंजये वज्रस्वामिस्थापितं पित्तलमयमादिनाथबिंबं प्रणम्य कपर्दियक्षमाराधयामास, समागतः स कपर्दी, किं कार्यमिति तेन पृष्टे आचार्याः प्रोचुः–"जिनशासनकार्यं, तथाहि–अधुना द्वादशवार्षिकदुष्कालापगमे श्रीस्कंदिलाचार्यैर्माथुरी सिद्धांतवाचना विहिता, तथापि समयानुभावेन मंदबुद्धित्वात्साधूनां सिद्धांता विस्मृत्य यांति यास्यंति च। ततो भवत्साहाय्यात्ताडपत्रेषु सिद्धांतान् लेखितुं मम मनोऽस्ति, यतो महती जिन-

शासनोन्नतिः स्यात्, मंदबुद्धयोऽपि पुस्तकमालंब्य सुखेन शास्त्राध्येतारो भवेयुरिति । " तदा देवेनोक्तं-'अहं सान्निध्यं करिष्यामि, ततो भवता साधवः सर्वेऽप्येकत्र करणीयाः, मषीपत्रादिकं भूयस्तरमानेतव्यं, लेखकाश्च प्रगुणीकार्याः, साधारणद्रव्यं च मेलनीयं " इत्युक्त्वा देवर्द्धिगणिक्षमाश्रमणा वलभ्यां पुरि समागताः, मेलिता देवेन सर्वापि पुस्तकलेखनसामग्री । ततो वृद्धैर्गीतार्थैर्यथा यथांगोपांगानां आलापका उक्तास्तथा तथा पूर्वं खरटरूपेण लिखितास्ततः पुनः संयोजनां कृत्वा देवर्द्धिगणिना मूलपत्रेषु लेखिताः, अत एवांगेषु उपांगानामालापकाः साक्षिणः, मध्ये मध्ये विसंवादोऽपि संख्याया अनियमोऽपि, मध्ये मध्ये माथुरीवाचनापि च दृश्यते ।

तथा पूर्वमार्यरक्षितेन सिद्धांतेषु पृथगनुयोगः कृतः, पुनः स्कंदिलाचार्येण वाचना कृता, देवर्द्धिगणिना च पुस्तकारूढः कृतः, तेन सुधर्मस्वामिवचनानि विसंस्थुलानीव दृश्यंते । तत्र दुःषमानुभाव एव प्रमाणं, परमत्र जिनागमे सम्यग्दृग्भिः संशयो न कार्यः । तस्मिन्नवसरे देवसांनिध्याद्वर्षमध्ये जैनपुस्तककोटिर्लिखिता । अथ किंचित्पूर्वगतश्रुतधारकाः श्रीवीरनिर्वाणादशीत्यधिकनवशतवर्षातिक्रमे सर्वसिद्धांतलेखकारका युगप्रधानपदं बिभ्राणाः श्रीदेवर्द्धिगणिक्षमाश्रमणा बहुधा श्रीजिनशासनप्रभावनां कृत्वा शंते श्रीशत्रुंजयेऽनशनं विधाय स्वर्गं गताः ॥ इति श्रीदेवर्द्धिगणिक्षमाश्रमणवृत्तांतः ॥ एवंविधा आचार्याः श्रीजिनप्रवचनप्रभावका बोध्याः १ ॥

तथा धर्मकथा प्रशस्यास्ति अस्येति धर्मकथी । यः क्षीराश्रवादिलब्धिसंपन्नः सन् सजलजलधरध्वनितानुकारिणा शब्देन आक्षेपणीविक्षेपणीसंवेदनीनिर्वेदनीलक्षणां चतुर्विधां जनितजनमनःप्रमोदप्रथां धर्मकथां कथयति स बहुलभव्यजनप्रतिबोधको

नंदिषेणादिवद्धर्मकथी बोध्यः । कथाचतुष्टयलक्षणं त्विदं—

स्थाप्यते हेतुदृष्टांतैः, स्वमतं यत्र पंडितैः । स्याद्वादध्वनिसंयुक्तं, सा कथाक्षेपणी मता ॥ १ ॥
मिथ्यादृशां मतं यत्र, पूर्वापरविरोधकृत् । तन्निराक्रियते सद्भिः, सा च विक्षेपणी मता ॥ २ ॥
यस्याः श्रवणमात्रेण, भवेन्मोक्षाभिलाषिता । भव्यानां सा च विद्वद्भिः, प्रोक्ता संवेदनी कथा ॥ ३ ॥
यत्र संसारभोगांग-स्थितिलक्षणवर्णनं । वैराग्यकारणं भव्यैः, सोक्ता निर्वेदनी कथा ॥ ४ ॥ इति ॥

इह प्राक्सूचितनंदिषेणवृत्तांतस्त्वयं-एकस्मिन्नगरे एको धनवान् सुखप्रियनामा ब्राह्मणो वसति स्म । स मिथ्यात्वमोहितः सन् एकदा यज्ञं कर्तुमारेभे । तत्र राद्धान्नरक्षायां भीमनामानं स्वदासमादिष्टवान् । तेनापि स्वस्वामी ब्राह्मणो विज्ञप्तः-' यदि विप्रभोजनानंतरं अवशिष्टान्नं मह्यं दास्यथ तदाहमत्र रक्षको भविष्यामि ' इत्युक्ते विप्रेणापि तद्वचः प्रतिपन्नं । गृहस्वामिना ब्राह्मणा भोजिताः, अवशिष्टान्नं सर्वं दासाय दत्तं, तेन च सम्यग्दृष्टिना साधवः प्रतिलाभिताः, अन्येऽपि दर्शनिनोऽनुकंपया दानपात्रीकृताः, तेन महाभोगकर्मोपार्जितं । अथ कियत्यपि काले स दासो मृत्वा देवोऽभूत् । ततोऽपि च्युत्वा राजगृहे श्रेणिकनृपस्य पुत्रत्वेनोत्पन्नः, नंदिषेण इति तस्य नामासीत् । तस्मिन्नेवावसरे विप्रजीवोऽपि कांश्चिद्भवान् भ्रांत्वा कदलीवने हस्तिनीयूथे एकस्या हस्तिन्याः कुक्षौ गर्भत्वेनोत्पन्नः । तस्मिन् यूथे तु यूथपतिर्गजोऽन्यगजपराभवं विशंकमानो हस्तिनीनां प्रसवसमये एव जातं जातं गजं निहंति । हस्तिनीं जातां रक्षति । तदा यस्याः कुक्षौ स ब्राह्मणजीव उत्पन्नोऽस्ति सा हस्तिनी स्वगर्भस्याकुशलं विदित्वा कपटेनैव पादेन खंजीभूय शनैः शनैः हस्तिकपृष्ठतश्चलति, यामचतुष्टयानंतरं

यूथेन सह मिलति। एवं कदाचिद् द्व्यहानंतरं त्र्यहानंतरं वा मिलति।

एवं च सा कुर्वती अन्यदा तापसाश्रमे गत्वा पुष्करेण तापसपादान् स्पृशंती तापसान्ननाम। तापसैरपि तां गुर्विणीति ज्ञात्वा ते गर्भः कुशली भवत्वित्याश्वासिता, सा चैकदा तत्राश्रमे सुतमसूत, तापसपुत्रैश्च तत्प्रतिपालना कृता, हस्तिन्यपि तत्रागत्य तं स्तन्यं पाययति, एवं च स गजपोतस्तापसपुत्रैः समं खेलति, तैश्च बालैः सहाश्रमपादपान् नदीतः शुंडया जलमानीय सिंचति। एवं वृक्षसेचनक्रियां कुर्वाणं गजपोतं विलोक्यास्य सेचनक इति नाम दत्तं। एवं तत्र वर्द्धमानस्त्रिंशद्वार्षिकः कलभो जातः। अथ चैकदा वने भ्रमन् तं यूथपतिं ददर्श। तारुण्येनोत्कटबलस्तं वृद्धगजं हत्वा स्वयं यूथपतिर्बभूव। अनेन च विमृष्टं–' यथा मे जननी तापसाश्रमे मां सुषुवे तथान्याप्यत्र मा सविष्ट ' इति ध्यात्वा स्वयूथमानीय तमाश्रमं बभंज। रुष्टास्तापसा श्रेणिकनृपं तं गजरत्नं ज्ञापयामासुः। राज्ञापि कैश्चित्प्रयोगैः स बंधनं नीतः, आलाने निगडैर्बद्धश्च। तदा तापसैश्चालोक्य स वाग्भिस्तर्जितो–' यादृशं कर्म कृतं तादृशमेव त्वया फलं प्राप्तमिति ' वाक्यै रुष्टो गजो बंधनानि त्रोटयित्वा तापसान् हंतुं दुद्राव, भग्नास्तापसाः, व्याकुलो स्व उच्छलितः, तदा श्रेणिकपुत्रो नंदिषेणस्तं वशीकर्तुं तत्रायातः, तद्दर्शनाच्च तत्कालं स्वस्थीभूय ईहापोहं कुर्वतस्तस्य गजस्यावधिज्ञान(जातिस्मरण)मुत्पन्नं, ततो ज्ञातस्तेन सर्वोऽपि प्राग्भववृत्तांतः। नंदिषेणोऽपि पूर्वभवस्नेहेन तं गजं सद्वाक्यैः संतोष्य स्कंधाधिरोहणपूर्वकमालाने आनीय बद्धवान्। तदा तुष्टेन तातेन नंदिषेणः सत्कृतः, परिणायितः पंचशतकन्याभिः। एकदा भगवान् श्रीमहावीरो राजगृहे समवसृतः, तद्वंदनार्थं पित्रा समं नंदिषेणोऽपि गतः, तत्र भगवद्देशनां श्रुत्वा प्रतिबुद्धः स प्रव्रज्यानुज्ञां श्रीभगवतो ययाचे। भगवानपि अस्माद्धर्मवृद्धिं विज्ञाय यथासुखं

देवानुप्रियेत्यवादीत्, परं मा प्रतिबंधं कार्षीरिति द्वितीयं वाक्यं व्रतविघ्नमालोक्य नोवाच।

अथ गृहे मातापितृ[प्रभृतिवचन]प्रतिवचनानंतरं प्रव्रज्यामहोत्सवे क्रियमाणे आकाशे शासनदेव्यप्यभ्यधात्–'भो नंदिषेणाद्यापि ते भोगकर्मोदयोऽस्ति ततः कियत्कालं प्रतीक्षस्व, पश्चात्प्रव्रज्यां गृह्णीथाः' इत्युक्तेऽपि स्वमनसो दार्ढ्यं विचार्य स श्रीभगवदंतिके दीक्षां जग्राह, क्रमेण दश पूर्वाण्यधीतवान्, दुःकराणि तपांसि च तेपे, तेनायं लब्धिमान् बभूव। अथास्य भोगकर्मोदयतो मनश्चांचल्यात् पूर्वरतानि पूर्वक्रीडितानि च स्मृतिपथमायातानि। ततो मनस्यत्यंतं प्रादुर्भूतां कामव्यथां सोढुमशक्नुवन् सूत्रोक्तविधिना मनोनिग्रहार्थं देहकार्श्यार्थं च भूयसीरातापना विशेषतस्तपांसि च चकार, तथापि भोगेच्छा न निवर्त्तते। ततो व्रतभंगभयान्मरणार्थं गलपाशिकामग्रहीत्, स पाशो देव्या त्रोटितः। ततो विषं भक्षितं, देवानुभावाद्विषेणाप्यमृतायितं। ततो ज्वलनप्रवेश आरब्धः, तत्र वह्निरपि विध्यातः। एवं मृतिप्रयोगाः सर्वेऽपि विफलीबभूवुः। अथैकदा राजगृहे एवाष्टमपारणाये मुनिर्वेश्यागृहे भिक्षार्थं प्रविवेश, उक्तवांश्च–'हे गृहनायिके! चेत्तव श्रद्धा तर्हि मां भिक्षां देहि। ते धर्मलाभोऽस्तु।' तया च हसंत्या उक्तं–'न हि धर्मलाभे सिद्धिरत्र त्वर्थलाभे सिद्धिरस्ति' एवं तयोक्ते मुनिर्मानारूढ एवैनेशान्तु इत्यत्रोचत्। तत इत्थं जल्पत एव तस्य तपोलब्ध्या वेश्यागृहं सार्द्धद्वादशकोटिप्रमितैः सौवर्णैः पूरितं, यदुक्तं महानिशीथसूत्रे षष्ठाध्ययने–धम्मलाभं तओ भणइ, अत्थलाभं विमग्गिओ। तेणावि लद्धिजुत्तेण, एवं भवउ त्ति भणियं ॥ १ ॥ इति. तथा ऋषिमंडलवृत्त्यादौ तु नीव्रतृणाकर्षणाद्वृष्टिर्जातेत्युक्तं, तत्त्वं पुनस्तत्त्वज्ञा विदंतीति। ततः पणांगनापि विस्मयमापन्ना शीघ्रमुत्थाय मुनेः पादयोर्नत्वा हावभावैर्मुनिचित्तं विक्रियां नयंतीत्थमब्रवीत्–'स्वामिंस्त्वया तु एभिः

गोरंगं क्रीता, अतस्त्वदीयं धनं प्रगृह्य त्वमेव भुंक्ष्व' इत्यादिभिर्मोहप्रकृतिभिरिव स्नेहवाग्भिर्मुनिमनः क्षुभितं । ततोऽयं नष्टवृत्तो भूत्वा भोगकर्मोदयेन तत्रैव तस्थौ । परं मया प्रत्यहं दश पुरुषा धर्मं नेतव्या इति नियममग्राहयम् । यदात्र नियमे एकोऽपि न्यूनस्तदा मयैव तत्स्थाने भवितव्यमिति पणितवान् । अतः परं वेश्यापाटकद्वारे मुनिः स्थित्वा तत्रागतान् कामिजनान् विविधयुक्तियुक्ताभिराक्षेपण्यादिधर्मकथाभिर्धर्मं ग्राहयति, कांश्चित् प्रतिबोध्य श्रीजिनेश्वरांतिके महाव्रतानि ग्राहयति, कांश्चित्पुनर्द्वादशव्रतधरान् कारयति । एवं प्रत्यहं धर्मकथाभिर्भव्यजनान् प्रतिबोधयन् स्वयं शुद्धश्राद्धधर्मं प्रपालयन् द्वादश वर्षाणि गमयित्वा निर्जीर्णभोगकर्मा सन् एकस्मिन् दिने नव जनान् प्रतिबोधितवान्, दशमस्त्वेकः स्वर्णकारः समेतः, स च विविधयुक्त्या प्रतिबोध्यमानोऽपि धृष्टत्वान्न प्रतिबुद्धः, प्रत्युत इत्थं जजल्प-'ननु विषयपंकनिमग्नं स्वमात्मानं बोधयितुमशक्तस्त्वं परं किं बोधयिष्यसि?' इति । तावता गणिकया भोजनार्थं नंदिषेणः समाहूतः, परं प्रतिज्ञापूर्त्तिं विना भोजनं नेच्छति । द्विवारं रसवत्यः शीतलीभूताः, ततो वेश्यया तत्रागत्य उपहासपूर्वकमुक्तं-'स्वामिन्नद्य भवतैव दशमस्थाने भवितव्यमिति प्रतिज्ञापूर्तिं कृत्वागत्य भुंक्ष्व ।' एवमुक्ते समाप्तभोगकर्मोदयो नंदिषेणमुनिः पुनर्वेषमादाय श्रीभगवदंतिके पुनर्महाव्रतानि जग्राह, चारित्रं च निर्मलं प्रतिपाल्य प्रांते समाधिना मृत्वा दिवं ययौ । ततश्च्युत्वा महाविदेहे सेत्स्यति । इदं च श्रीवीरचरित्रानुसारेणोक्तं । महानिशीथसूत्रे तु कालप्राप्तिरुक्तास्ति । इह तत्त्वं तु सर्वविदो विदंति । इत्ययं धर्मकथी नाम द्वितीयः प्रवचनप्रभावकोऽत्रसंगः, इति नंदिषेणवृत्तांतः ॥ २ ॥

तथा वादिप्रतिवादिसभ्यसभापतिरूपायां चतुरंगायां परिषदि प्रतिपक्षनिराकरणपूर्वकं स्वपक्षस्थापनार्थमवश्यं वद-

तीति वादी, निरुपमवादिलब्धिसंपन्नत्वेन वावदूकवादिवृंदारकवृंदैरपि अमंदीकृतवाग्विभव इत्यर्थः। अयं च मल्लवादिवत्तर्कशास्त्रादिसकलप्रमाणकुशलः श्वेताम्बरादिजयाद्राजद्वारेऽपि लब्धमाहात्म्यस्तृतीयः प्रभावको बोध्यः। इह मल्लवादिवृत्तांतो ग्रंथांतरादवसेयः ॥ ३ ॥

तथा निमित्तं त्रैकालिकलाभालाभादि प्रतिपादकं शास्त्रं तद्वेत्ति अधीते वा नैमित्तिकः। यो हि जिनमतप्रत्यनीकान् पराजयं नेतुं भद्रबाहुस्वाम्यादिवत् सुनिश्चितं निमित्तं वदति स नैमित्तिको नाम चतुर्थः प्रभावको बोध्यः, भद्रबाहुस्वामिवृत्तांतस्तु प्रसिद्ध एवेति नेहोच्यते ॥ ४ ॥

तथा विकृष्टमष्टमप्रभृतिकं दुस्तपं तपोऽस्यास्तीति तपस्वी, यः परमोपशमरससंभृतः सन् अष्टमदशमपक्षक्षपणमासक्षपणादिविविधतपश्चर्यया जिनमतोल्लासनं विदधाति स श्रीवीरवर्णितकाकंदिकधन्याख्यसाध्वादिवत्तपस्वी नाम पंचमः प्रभावको ज्ञेयः ॥ ५ ॥

तथा विद्याः प्रज्ञप्त्यादयः शासनदेव्यस्ताः साहाय्यके यस्य स विद्यावान्। अयं च श्रीवज्रस्वामिवत् षष्ठः प्रभावको ज्ञातव्यः, वज्रस्वामिवृत्तांतस्तु प्रसिद्ध एव ॥ ६ ॥

तथा सिद्ध्यति स्मेति सिद्धः, चूर्णांजनपादलेपतिलकगुटिकाखेचरभूताकर्षणवैक्रियत्वप्रभृतिभिर्विविधसिद्धिभिः संपन्न इत्यर्थः। अयं च संघादिकार्यसाधनार्थं मिथ्यात्वविद्रावणार्थं जिनप्रवचनप्रभावनार्थं च चूर्णांजनादिसिद्धीनां यथावसरं प्रयोक्ता आर्यसमितसूर्यादिवत्सप्तमः प्रभावको बोध्यः। तत्रार्यसमितसूरिकथानकं चेदं—

आभीरदेशेऽचलपुरं नाम नगरमासीत्, तत्र बहवो जिनप्रवचनप्रभावनाकरणपरायणाः सुमहर्द्धिकाः श्राद्धाः परिवसंति। तस्याचलपुरस्यासन्नप्रदेशे पुनः कन्नावेन्नानद्योर्मध्ये एको ब्रह्मद्वीपोऽस्ति, तत्र बहवस्तापसाः परिवसंति। तेष्वेकः पादलेपक्रियायां विशारदस्तापसः पादलेपेन नित्यं जलमार्गेऽपि स्थलमार्ग इव संचरन् लोके बहुविस्मयं समुत्पादयन् वेन्नानदीमुत्तीर्य पारणार्थमचलपुरे आयाति। तदा तं दृष्ट्वा बहवो मुग्धजना दुस्सहमिथ्यात्वतापसंतप्ताः संतो महिषा इव तद्दर्शनपंके निमग्नाः। ते च जिनमतमवगणयंतः श्राद्धान् एवं प्रोचुः–'अस्माकं शासने यथा प्रत्यक्षं गुरुप्रभावो दृश्यते तथा युष्माकं नास्ति, अतोऽस्मद्धर्मतुल्यः कोऽपि धर्मो न विद्यते' इति। तदा 'एतेषां मुग्धजनानां मिथ्यात्वस्थिरीकरणं मा भवतु' इति विचिंत्य ते श्राद्धास्तन्मिथ्यास्थिरवचनं विविधयुक्तिभिः प्रतिहतं कृत्वा तं तापसं दृष्ट्यापि न विलोकयंति स्म। अथान्यदा सकलसूरिगुणसमलंकृताः श्रीवज्रस्वामिमातुला विविधसिद्धिसंपन्नाः श्रीआर्यसमितसूरयः समागताः, श्रावकाः सर्वेऽपि महताडंबरेण तत्र गत्वा श्रीगुरुपदकमलं प्रणमंति स्म। अतिदीनवचनैः सर्वमपि तापसकृतं जिनतीर्थापभ्राजनाकारणं वृत्तांतं गुरुभ्यो निवेदयंति स्म। ततो गुरवः प्रोचुः–'भोः श्राद्धाः! अयं कपटबुद्धिस्तापसो मूढजनान् केनापि पादलेपादिप्रकारेण विप्रतारयति, परं न हि कापि तपःशक्तिरस्यास्तीति।'

अथैतत् श्रुत्वा ते श्राद्धा विनयेन गुरुं नत्वा स्वगृहमागत्य परीक्षार्थं तं तापसमत्यादरेण भोजयितुं निमंत्रयामासुः, सोऽपि समुत्सुकीभूय बहुलोकपरिवृत एकस्य श्रावकस्य गृहं प्राप्तः। तदा तमागच्छंतं दृष्ट्वा अवसरज्ञः स श्रावकोऽपि महसाऽभ्युत्थाय तमुचितस्थाने उपवेश्य बहुविधबाह्यप्रतिपत्तिपूर्वकं तस्यानिच्छतोऽपि पादद्वयमुष्णनीरेण तथा क्षालयति स्म,

यथा तत्र लेपगंधोऽपि नातिष्ठत्। ततो विविधरसवत्या तं भोजयति स्म। तत्र भोजनं कुर्वन्नपि असौ भविष्यत्कदर्थनाभयेन मनागपि भोजनस्वादं न विवेद। भोजनानंतरं च जलस्तंभकौतुकदर्शनसमुत्सुकेन श्राद्धादिबहुजनेन परिकरितः स तापसो नद्यास्तीरं संप्राप्तः। अथ 'प्रक्षालितेऽपि पादद्वये लेपांशः किंचिदद्यापि विद्यते' इति विचिंत्य, स नद्यां प्रविशन्नेव शीघ्रं बुडबुडारावं कुर्वन् त्रुडितुं लग्नः। ततोऽनुकंपया श्राद्धैर्बहिर्निष्कासितः। तदा 'अहो! अमुना मायिना चिरं वयं वंचिता' इत्यादि चिंतयंतो मिथ्यात्विनोऽपि जिनधर्मानुरक्ता जाताः, ततश्च जिनशासनप्रभावनां कर्तुकामा विविधयोगसंयोगविदः श्रीआर्यसमितसूरयोऽपि तत्र संप्राप्ताः, नद्यंतराले चूर्णविशेषं प्रक्षिप्य सर्वलोकसमक्षं कथयामासुश्च–'वेन्ने! वयं तव परं पारं गंतुमिच्छाम' इति। ततो झटिति मिलितं तस्याः कूलद्वयं। तत्स्वरूपं दृष्ट्वा विस्मिताः सर्वेऽपि लोकाः, तदनंतरं अमंदानंदपूर्णचतुर्वर्णसंघपरिकरिता आचार्याः परपारभूमिं प्राप्ताः। तत्र सद्भूतधर्मोपदेशदानतः सर्वानपि तापसान् प्रतिबोधितवंतः। ततो दूरीभूतनिखिलमिथ्यात्वमलास्ते सर्वेऽपि तापसाः श्रीगुरूणां पार्श्वे प्रव्रज्यां जगृहुः, तेभ्यश्च तापससाधुभ्यो ब्रह्मदीपिका शाखा श्रुतविश्रुता जाता। अथ श्रीआर्यसमितसूरय इत्थं प्रचंडपाखंडिमतखंडनेन भूयसीं जिनमतप्रभावनां विधाय परमजिनधर्मानुरतभव्यजनमनांसि प्रमोदमेदुराणि कृत्वान्यत्र विहृतवंतः। ते श्रावका अपि विविधधर्मक्रियाभिर्जिनशासनोन्नतिं कुर्वाणाः सुखेन गृहधर्मं प्रपाल्य क्रमेण सुगतेर्भाजनं जाताः। इत्यार्यसमितसूरिवृत्तांतः। अयं सिद्धो नाम सप्तमः प्रभावको ज्ञेयः ॥ ७ ॥

तथा कवते नवनववचनरचनाविराजितश्रोतृजनमनःप्रमोदसमुत्पादकविविधभाषाविभूषितहृद्यगद्यपद्यप्रबंधैर्वर्णनं करोतीति

कविः । अयं हि मन्दूतर्यमंबुद्ध्यर्थं प्रवचनप्रभावनार्थं च शोभनवचनरचनाभिर्नृपाद्युत्तमजनप्रतिबोधकः सिद्धसेनदिवाकरादिवत् अष्टमः प्रभावको बोद्धव्यः । सिद्धसेनवृत्तांतस्त्वयं—

उज्जयिन्यां नगर्यां विक्रमादित्यनामा राजा । तस्य पुरोधसः पुत्रो देवसिकाकुक्षिसमुद्भवः सर्वविद्याविशारदो मुकुंदनामा ब्राह्मणोऽन्यदा वादार्थं भृगुकच्छपुरं प्रति चलितः । तत्रांतरा मार्गे श्रीवृद्धवादिसूरिगुरवो मिलिताः । तदा 'अत्र यो यस्मात्पराजयं प्राप्स्यति स तच्छिष्यो भविष्यतीति' पणं विधाय, तत्र पार्श्वस्थान् गोपानेव साक्षिणः कृत्वा आचार्यैः सह वादं कर्तुं स्वयं संस्कृतवाण्या पूर्वपक्षमग्रहीत् । तत् श्रुत्वा गोपैरुक्तं-'एतद्भाषामस्माभिर्न किमप्यवबुध्यते, अतोऽयं तु न किंचिज्जानाति ।' ततोऽवसरज्ञा गुरवो रजोहरणं कटिप्रदेशे निबद्ध्य चप्पटिकां दत्त्वा नृत्यं कुर्वाणा इत्थमवदन्—

नवि चोरियइ नवि मारियइ, परदारागमण निवारियइ । थोडइ थोडउ दाइयइ, सग्गि मटामट जाइयइ ॥ १ ॥ अन्यच्च—

कालउ कंपल अरुनी छइ, छासइं भरियउ दीवड थइ । ए वड पडियउ नीलइ झाड, अवर किसुं छइ सग्गि निलाड ॥ २ ॥

तत एतादृशीं वाणीं निशम्य हृष्टैर्गोपैरुक्तं-'जितमनेन ।' ततो वृद्धवादिगुरवो राजसभायां गत्वा तत्रापि वादेन तं निर्जित्य स्वशिष्यं कृतवंतः । कुमुदचंद्र इति नाम च दत्तवंतः । सूरिपदप्राप्तौ पुनः सिद्धसेनदिवाकर इति नाम ददुः । स चैकदा वादार्थमागतस्य भट्टस्य श्रावणार्थं 'णमो अरिहंताणं' इत्यादिपाठस्थाने 'नमोऽर्हत्सिद्धाचार्योपाध्यायसर्वसाधुभ्यः' इति चतुर्दशपूर्वाणामादिस्थितं संस्कृतवाक्यमुक्तवान् । पुनः स एकदा गुरून् जगाद-'यः सर्वसिद्धांतः प्राकृतमयोऽस्ति, तं सर्वं संस्कृतं करोमि ।' गुरुभिरुक्तं-'बालस्त्रीमंदमूर्खाणां, नृणां चारित्रकांक्षिणां । अनुग्रहाय तत्त्वज्ञैः, सिद्धांतः प्राकृतः कृतः

॥ १ ॥ अत एवं जल्पतस्तव महाप्रायश्चित्तं लग्नं' इत्युक्त्वा गच्छाद्बहिः कृतः । ततः संघेनागत्य विज्ञप्तिः कृता–' स्वामिन् ! अयं महाकवित्वादिगुणसंपन्नत्वात्प्रवचनस्य प्रभावकोऽस्ति, अतो गच्छाद्बहिर्न कार्यः ।' एवमत्याग्रहे क्रियमाणे गुरुभिरुक्तं– "यदि द्रव्यतो मुनिवेषं त्यक्त्वा वेषांतरे तिष्ठन् भावतो मुनिस्वरूपमत्यजन् विविधतपांसि कृत्वाऽष्टादश नृपान् प्रतिबोध्यायं जैनान् करिष्यति, नवीनं तीर्थं चैकं प्रादुष्करिष्यति तदा तं गच्छमध्ये लास्यामो नान्यथेति ।" ततो गुरुवचनमंगीकृत्य स यथोक्तरीत्या विचरन् उज्जयिनीं गतस्तत्रैकदाश्ववाहनार्थं गच्छता श्रीविक्रमनृपेण रथ्यांतर्गच्छंतं सिद्धसेनाचार्यं विलोक्य पृष्टं–' के यूयमिति ? ।' आचार्यैरुक्तं–' वयं सर्वज्ञपुत्राः ।' ततो राज्ञा मनस्येव नमस्कारे कृते आचार्यैर्हस्तमूर्ध्वीकृत्य उच्चैः स्वरेण धर्मलाभो दत्तः । तदा राज्ञोक्तं–' कस्मै धर्मलाभो दीयते ? ।' आचार्या आहुः–' येनास्मभ्यं नमस्कारः कृतस्तस्मै धर्मलाभः ।' ततो हृष्टो राजा ' भवद्भिः स्वचरणैर्मदीयं सभास्थानं पवित्रीकर्त्तव्यं ' इत्युक्त्वा स्वस्थानं जगाम।

अथैकदा श्रीसिद्धसेनाचार्यः श्रीविक्रमनृपस्य नवीनं श्लोकचतुष्टयं कृत्वा राजद्वारे गतः, प्रतिहारमुखेनेत्यवदत्–दिदृक्षुर्भिक्षुरायातो, द्वारे तिष्ठति वारितः । हस्तन्यस्तचतुःश्लोको, यद्वागच्छतु गच्छतु ॥ १ ॥ राज्ञोक्तं–दीयंतां दश लक्षाणि, शासनानि चतुर्दश। हस्तन्यस्तचतुःश्लोको, यद्वागच्छतु गच्छतु ॥ २ ॥ ततः स नृपसमीपं गतः। तत्र श्रीविक्रमः पूर्वदिशाभिमुखः सिंहासने उपविष्टोऽभूत् । तदा सूरिः श्लोकमेकमपठत्–आहते तव निःस्वाने, स्फुटितं वैरिहृद्घटे । गलिते तत्प्रियानेत्रे, राजंश्चित्रमिदं महत् ॥ १ ॥ इति श्रुत्वा राजा दक्षिणाभिमुखीभूयोपविष्टः, मनसि चिंतितवांश्च ' पूर्वस्या दिशो राज्यमस्मै दत्तमिति ।' ततः सूरिः गम्भीरीभूय द्वितीयं श्लोकमपठत्–अपूर्वेयं धनुर्विद्या, भवता शिक्षिता कुतः ? । मार्गणौघः समभ्येति, गुणो

याति दिगंतरं ॥ २ ॥ ततो नृपः पश्चिमाशाभिमुखो भूत्वा उपविष्टः । तदा पुनः सूरिणाभिमुखीभूय तृतीयः श्लोकोऽपाठि—सरस्वती स्थिता वक्त्रे, लक्ष्मीः करसरोरुहे । कीर्त्तिः किं कुपिता राजन् !, येन देशांतरं गता ? ॥ ३ ॥ ततो नृप उत्तराभिमुखो भूत्वा स्थितः । तदा पुनः सूरिणा सन्मुखीभूय चतुर्थः श्लोकोऽपाठि—सर्वदा सर्वदोऽसीति, मिथ्या संस्तूयसे बुधैः । नारयो लेभिरे पृष्ठं, न वक्षः परयोषितः ॥ ४ ॥ ततस्तुष्टो नृपः सद्यः सिंहासनादुत्थाय चतसृणामपि दिशां राज्यं सूरये ददौ । तदा सूरिणा प्रोचे—'मम राज्येन किमपि कार्यं न ' । नृपेणोचे—' तर्हि यूयं किं याचध्वे ? । ' सूरिणोक्तं—' यदाहमागच्छामि तदा ममोपदेशः श्रोतव्यः । ' राज्ञोक्तं—' एवं प्रमाणमस्तु । ' ततः सिद्धसेनाचार्यः स्वस्थानं गतः ॥

अथान्यदा सूरिर्महाकालप्रासादे गत्वा शिवपिंडिकोपरि पादौ कृत्वा सुप्तः । तत्पूजकादिबहुलोकैरुत्थापितोऽपि नोत्थितः । तदा लोकैर्गत्वा राजा विज्ञप्तः—' स्वामिन् ! कश्चिद्भिक्षुरागत्य शिवपिंडिकोपरि पादौ कृत्वा सुप्तोऽस्ति, उत्थापितोऽपि नोत्तिष्ठति । ' राज्ञोक्तं—' निहत्य दूरीक्रियतां । ' ततो राज्ञ आदेशात्ते कशादिप्रहारैस्तं ताडयंति स्म । ते प्रहाराश्चांतःपुरे राज्ञीनां शरीरे लगंति स्म । कोलाहलो जातः । राजापि सविस्मयः सखेदश्च सन् किं जातमिति पृच्छति स्म । केनाप्युक्तं—' स्वामिन् ! कश्चिद्भिक्षुर्महाकालप्रासादे ताड्यते, तत्प्रहारा अत्रांतःपुरे लगंति । ' तदा राजा स्वयं महाकालप्रासादे गतः, आचार्यो दृष्ट उपलक्षितश्च । पृष्टं च—' किमेतत् ? महादेवशिरसि कथं पादौ स्थापितौ ? महादेवस्तु महान् देवः स्तवनार्हः । ' आचार्यैरुक्तं—' महादेवस्तु अन्य एवास्ति, यो महादेवोऽस्ति तस्य स्तुतिमहं करिष्याम्येव, श्रूयतां सावधानतया ' इत्युक्त्वा कल्याणमंदिरस्तोत्रं तेन कर्तुमारेभे । एकादशे काव्ये क्रियमाणे भूकंपानंतरं धूमनिर्गमे लिंगस्य द्विधा भवनादादौ तेजःपुंजः प्रसृतः ।

ततो धरणेंद्रसहिता श्रीपार्श्वनाथमूर्त्तिः प्रादुर्बभूव। तदाचार्यः स्तोत्रं पूर्णीकृत्य जगौ–'अयं हि श्रीपार्श्वनाथः पूर्वमत्रैव अवंतीसुकुमालसुतेन महाकालाभिधानतो लोके प्रसिद्धं स्वपितुर्नलिनीगुल्मविमान[गमन]कायोत्सर्गस्थाने नव्यं प्रासादं कारयित्वा प्रतिष्ठापितः, ततः कियत्यपि काले गते मिथ्यादृष्टिभिस्तमाच्छादितं कृत्वा रुद्रलिंगं स्थापितं, अधुना मत्स्तुत्या तत्स्फुटितं, श्रीपार्श्वदेवश्च प्रकटीभूतः।' एतच्छ्रवणाद्विक्रमराजस्य चेतसि चमत्कारगर्भितः प्रमोदः समुत्पन्नः, इहैव च राज्ञो जिनोक्ततत्त्वरुचिरूपोत्तमसम्यक्त्वरत्नप्राप्तिरभूत्।

ततो राजा श्रीपार्श्वनाथप्रासादमाश्रित्य पूजादिव्ययार्थं शतं ग्रामान् ददौ, पुनराचार्यसमीपे सम्यक्त्वमंगीचकार, जैनश्रावकश्च जातः। ततः सिद्धसेनाचार्यैस्तदनुवर्तिनोऽन्येऽपि अष्टादश राजानः प्रतिबोधिताः। ततस्तस्य गुणगणरंजितेन विक्रमराजेन सुखासनं दत्तं, तत्राधिरूढः प्रत्यहं स राजभवनं प्रयाति। ततो वृद्धवादिगुरुणा श्रुतं चिंतितं च सिद्धसेनाचार्यो यत्कार्यं कर्त्तुं गतोऽभूत् तत्कार्यं तु सर्वमपि सिद्धं, परं स्वयं प्रमादपंके मग्नोऽस्ति, ततोऽहं तत्र गत्वा तं प्रतिबोधयामीति' विचिंत्योज्जयिन्यां जगमे। तत्र केनापि प्रकारेण सूरिस्तत्पार्श्वे गंतुमशक्नुवन् सुखासनवाहकरूपं विधाय तद्गृहद्वारे स्थितः। यदा स सुखासनमारुह्य राजभवनं प्रति चलितस्तदा वृद्धवादिसूरिरेकस्य यानवाहकस्य स्थाने लग्नः, वृद्धत्वान्मंदं मंदं चलति स्म। तदा सिद्धसेनाचार्यः प्राह–'भूरिभारभराक्रांतः, स्कंधः किं तव बाधति ?।' इह बाधतीति आत्मनेपदस्थाने परस्मैपदमित्यपशब्दो गर्वेण तेन न ज्ञातः। ततो गुरुभिरुक्तं–'न तथा बाधते स्कंधो, यथा बाधति बाधते ॥ १ ॥' इति श्रुत्वा स चमत्कृतः कोऽयमिति ? ततो वृद्धवादिगुरुं ज्ञात्वा सद्यः सुखासनादुत्तीर्य पादयोः पतितः, 'क्षम्यतां ममापराध' इति

पुनः पुनः शोचति । ततो गुरुभिः पुनः प्रतिबोध्य संघसमक्षं मिथ्यादुष्कृतदानपूर्वकं गच्छमध्ये गृहीतः, ततश्च श्रीसिद्धसेनदिवाकराश्चिरकालं तीर्थप्रभावनां कृत्वा प्रांते सद्गतिभाजो जाताः । इति श्रीसिद्धसेनवृत्तांतः ॥ अयं कविर्नामाष्टमः प्रभावकोऽवसेयः ॥ ८ ॥ एते प्रवचन्यादयो अष्टौ प्रभावयंति स्वतः प्रकाशकस्वभावमेव प्रवचनं देशकालादियोग्यतया साहाय्यकरणात्प्रकाशयंतीति प्रभावकाः कथिताः, एतेषां च क्रिया प्रभावना, सा च सम्यक्त्वं निर्मलीकरोतीति ॥

प्रकारांतरेणापि अष्टौ प्रभावका उक्ताः संति, तथाहि—

अइसेसइड्ढि १ धम्मकहि २, वाइ ३ आयरिय ४ खवग ५ नेमित्ती ६ । विज्जा य ७ रायगणसं-मया य ८ तित्थं पभावंति ॥१॥

स्फुटार्थेयं गाथा, नवरं अतिशेषा अवधिमनःपर्यायज्ञानामर्षौषध्यादयोऽतिशयास्ते ऋद्धिर्यस्यासौ अतिशेषर्द्धिः, क्षपकस्तपस्वी, राजसंमता नृपवल्लभाः, गणसंमता महाजनादिबहुमताः, इति प्रभावकाष्टकं व्याख्यातं ॥

अथ भूषणपंचकं व्याख्यायते—जिनेत्यादि—तत्राद्यं भूषणं जिनशासने अर्हद्दर्शनविषये कौशलं निपुणत्वं, तच्च सम्यक्त्वं भूषयतीत्यतः सम्यग्दृष्टिभिर्विशेषतस्तदुपार्जने यतितव्यं, यतोऽर्हद्दर्शने कुशलः पुमान् द्रव्यक्षेत्रकालभावाद्यनुसारेण नानाप्रकारैरुपायैरन्यमपि परं सुखेनैव प्रतिबोधयति, यथा कमलप्रतिबोधको गुणाकरः सूरिः, तत्कथा चेयं—

एकस्मिन्नगरे एको धननामा श्रेष्ठी परमश्रावको धनवान् बुद्धिमान् सर्वजनमान्यो वसति । तस्य च पुत्रः कमलनामा, स च कलावानपि धर्मे तत्त्वविचारे चारुचिमान् । पिता यदा कंचित्तत्त्वविचारं शिक्षयति तदा उत्थाय व्रजति । ततः श्रेष्ठी केनापि प्रकारेण तं बोधयितुमसमर्थः सन् चिंतयति स्म—'यदि कोऽप्याचार्योऽत्र समायाति तर्हि वरं, यतस्तत्सेवनादस्य

धर्मप्राप्तिः स्यात्' इति । अथैकदा कश्चिदाचार्यस्तन्नगरसमीपवने समवसृतः । तदा नगरलोकैः सह धनश्रेष्ठी वंदनार्थं गतः, गुरुभिर्धर्मोपदेशो दत्तः, ततो देशनांते सर्वे लोकाः स्वस्थानं गताः । तदा धनश्रेष्ठी आचार्यं प्रत्येवं विज्ञपयति स्म-' स्वामिन् ! मत्पुत्रः कमलनामा अत्यंतं धर्मविचारे अज्ञोऽस्ति, स च गीतार्थैर्भवद्भिः कथंचिद्बोधनीयः । ' प्रतिपन्नं चाचार्यैस्तद्वचः । ततः श्रेष्ठ्यपि गृहमागत्य पुत्रमुक्तवान्-' अहो ! अत्र गीतार्था गुरवो वने समायाताः संति, त्वया तत्र गत्वा तद्वचः श्रोतव्यं ' इति पित्रा प्रेरितः कमलोऽपि तत्र गत्वा अधोदृष्टिरेव गुरोः पुरतो न्यषीदत् । आचार्यैश्च सप्तनययुक्तद्रव्यगुणपर्यायविचारगर्भिता देशना दत्ता । ततो देशनांते आचार्यैः पृष्टं-' भो भद्र ! इयत्यां वेलायां त्वया किमप्यवबुद्धं ? । ' कमलेनोक्तं-' किंचिन्नवबुद्धं । ' पुनराचार्यैः पृष्टं-' किं ज्ञातं ? । ' सोऽवादीत्-' एतन्निकटवर्तिबदरीवृक्षमूलस्थितबिलान्मत्कोटका अष्टोत्तरशतं निर्गत्यान्यत्र बिले प्रविष्टाः, एतद् ज्ञातं । ' पुनराचार्योऽभाणीत्-' अरे ! अस्मदुक्तं किमपि ज्ञातं ? । ' तेनोक्तं-' न हि । ' ततोऽयोग्योऽयमिति विचिंत्याचार्या मौनमाधाय तस्थुः । कमलश्चोत्थाय स्वगृहं गतः ॥

ततो द्वितीयदिने वंदनार्थमागतस्य तत्पितुरेतच्चेष्टितं निवेद्याचार्या अन्यत्र विजह्रुः । अथैकदा अन्ये आचार्यास्तत्रैव वने समवसृताः । तदागमनं श्रुत्वा श्रेष्ठिना तत्रागत्य प्राक्तनवृत्तांतमुक्त्वा पुनः पुत्रबोधार्थं पूर्वोक्तरीत्यैव विज्ञप्तिः कृता, तैरप्युक्तं-' वरं, युष्मत्पुत्रोऽत्र प्रेषणीयः, भोस्त्वया गुरूणां पुरतोऽधोदृष्ट्या न स्थातव्यं, गुरुसंमुखमेवावलोकनीयं, तेषु चदत्सूपयोगो देय इति शिक्षणीयश्च । ' ततः श्रेष्ठिनाऽऽचार्यवचनं प्रतिपद्य गृहमागत्य च पुत्रस्तथैव शिक्षितो मुक्तश्च तदंतिके । सोऽपि तत्र गत्वा गुरूणां मुखमालोकयन्नुपविष्टः, गुरुभिरुक्तं-' भोः कमल ! किंचित्तत्त्वस्वरूपमपि जानासि ? । ' स

आह–'तत्त्वत्रयं जाने, मनोऽभीष्टमशनं पानं शयनं च।' पुनराचार्यैर्विहस्योक्तं–'इयं तु ग्राम्यवाक्, परं यद् ज्ञेयं यच्च हेयं यच्चोपादेयं तदपि किंचिज्जानासि ?।' कमलेनोक्तं–'तत्तु न जानामि, यूयमेव ब्रूत। अहं श्रोष्यामि।' अथाचार्यास्तं प्रतिबोधयितुं द्विना घटीयावत् तत्त्वनिर्णयात्मिकां देशनां दत्त्वा निवृत्ताः, कमलं प्रति पप्रच्छुः–'किं तत्त्वं त्वयाऽवबुद्धं ? इति।' कमल आह स्म–'भो गुरवः! युष्मासु वदत्सु भवदीया कृकाटिका अष्टोत्तरशतवारान् अध उपरि च परिस्फुरंती मयोपलब्धा, अन्यत्तु भवदुक्तं भवंत एव जानंति।' इति तदुक्तं श्रुत्वा खिन्ना आचार्या–'अहोऽधस्य दर्पणदर्शनं कारितं' इति विचिंत्य श्रेष्ठिने तच्चेष्टितं निवेद्य चान्यत्र विजह्रुः॥

अथैकदा द्रव्यक्षेत्रकालभावाद्यनुसारेण परं प्रति बोधनकुशला अन्ये आचार्यास्तत्रागताः, नागरिकास्तथैव तानपि वंदितुं गताः, देशनांते च धनश्रेष्ठी गुरुं प्रत्युवाच–'स्वामिन्! मत्पुत्रो धर्मविचारेऽत्यंतमज्ञोऽस्ति, पूर्वमागताभ्यामाचार्याभ्यां भृशं बोधितोऽपि न बुद्धः, पूर्वमनेन मत्कोटकगणना कृता, पश्चाच्च कृकाटिकापरिस्फुरणगणना कृता। ततः केनाप्युपायेन भवद्भिरयं प्रतिबोध्यो येनास्य मिथ्यात्वतमोध्वंसकसम्यक्त्वरत्नावाप्तिः स्यात्, भवतां च महान् लाभः संपद्येत' इति। तदा आचार्या ऊचुः–'युष्मत्पुत्रस्य लौकिकव्यवहारे प्रज्ञा वर्त्तते न वा ?।' श्रेष्ठ्यवोचत्–'अयं हि धर्मविचारं विनान्यत्र निपुणोऽस्ति।' तदाचार्यैरुक्तं–'तर्हि अयं सुबोधोऽस्ति, अवसरेऽत्र प्रेषणीयः।' तदनंतरं श्रेष्ठी तत उत्थाय स्वगृहं गत्वा, पुत्रग्रमक्षमाचार्यगुणानकथयत्–'अहो! आचार्यास्त्रिकालदर्शिनः सर्वेषां सुखदुःखप्रवृत्तिं विदंति, हे पुत्र! त्वयापि प्रष्टव्याः'। ततः प्रतिपन्नं कमलेन पितृवचनं। अवसरे स तत्र गत्वा तांश्च नत्वोपाविशत्। आचार्यैश्चैतद्भावमाराधयितुकामा ऊचुः–'भोः

कमल! त्वत्करतले मणिबंधे मत्स्यमुखसंयुक्ता द्राघीयसी धनरेखा दृश्यते।' कमलेनोक्तं-'किमस्याः फलं?।' सूरिभिरुक्तं-'मच्छेण य सहसधणं' इत्यादि। पुनरपि त्वत्कररेखादर्शनेन वयं विद्मस्तव शुक्लपक्षे जन्म, तत्सामयिका एते ग्रहा अपि भविष्यंति।' ततश्चमत्कृतः कमलः सपद्युत्थाय स्वगृहाज्जन्मपत्रिकामादाय गुरुं दर्शितवान्, गुरुणापि ग्रहास्तथैवैनं दर्शिताः, अमुकवत्सरे तव परिणयनं जातं, अमुकवत्सरे तव तापार्त्तिरभूत् इत्यादि चोक्तं। तत इत्थं गुरुवचः श्रुत्वा कमलो गृहमागत्य पितरमवादीत्-'अहो! पूज्यास्त्रिकालदर्शिन' इति। अथ स प्रत्यहं गुरुं वंदनार्थमायाति। पूज्या अपि तस्मिन्नेव नगरे चतुर्मासीं तस्थुः। प्रत्यहं सुभाषितैः कौतुककथाभिश्च कमलचित्तमाराधयामासुः। कौतुककथांतरे धर्मविचारमपि प्रस्तावयंति स्म। एवं च कियता कालेन कमलः सविशेषं धर्मज्ञो बभूव, क्रमेण गुरूणां पार्श्वे द्वादश व्रतानि जग्राह। गुरुप्रसादेन पितुः सकाशादप्यधिकतरो दृढधर्मा स समजनि। तत आचार्या अन्यत्र विजह्रुः, कमलश्च चिरकालं श्राद्धधर्मं प्रपाल्य प्रांते सद्गतिभाग्जातः। एवमन्यैरपि सम्यग्दृष्टिभिर्बहुभव्यजनोपकारकारणं जिनेंद्रशासने कुशलत्वं रक्षणीयं, यतः स्वकीयं सम्यक्त्वरत्नं जगति निःसपत्नशोभामादध्यादिति अर्हद्दर्शननिपुणत्वे कमलप्रतिबोधकसूरिदृष्टांतः ॥ १ ॥

तथा द्वितीयं भूषणं श्रीजिनशासनप्रभावना, श्रुतादिबलेन बहुजनमध्ये जिनेंद्रशासनोद्दीपनविधानमित्यर्थः, सा चाष्टधा प्रभावकभेदेन प्रागेवोक्ता, यत्पुनरिहोपादानं तदस्याः स्वपरोपकारकत्वेन तीर्थंकरनामकर्मनिबंधनत्वेन च प्राधान्यख्यापनार्थं। किं च सद्भूतार्थप्रकाशकारकाणि रागद्वेषापहारकाणि च यानि वचनानि तेषां पौनःपुन्येनोपादानमपि न दुष्टं, सद्बोधवृद्धिहेतुत्वात्। उक्तं च प्रशमरतिप्रकरणे श्रीमदुमास्वातिवाचकैः—

ये तीर्थंकरवर्णिता, भावास्तदनंतरैश्च परिकथिताः । तेषां बहुशोऽप्यनुकीर्त्तनं भवति पुष्टिकरमेव ॥ १ ॥
यद्वदुपभुक्तमपि, मद्भेषजमासेव्यतेऽर्त्तिनाशाय । तद्वद्रागार्त्तिहरं, बहुशोऽप्यनुयोज्यमर्थपदं ॥ २ ॥
यद्वद्विषघातार्थं, मंत्रपदे न पुनरुक्तदोषोऽस्ति । तद्वद्रागविषघ्नं, पुनरुक्तमदुष्टमर्थपदं ॥ ३ ॥
वृत्त्यर्थं कर्म यथा, तदेव लोकः पुनः पुनः कुरुते । एवं विरागवार्त्ता-हेतुरपि पुनः पुनश्चित्यः ॥ ४ ॥
इत्यतः पुनः प्रभावनोपादानमिहादुष्टमेवेति ध्येयं ॥ २ ॥

तथा तृतीयं भूषणं तीर्थसेवा । तीर्थं च द्विविधं द्रव्यतो भावतश्च । तत्र द्रव्यतः शत्रुंजयादि, भावतस्तु ज्ञानदर्शनचारित्रधारका अनेकभव्यजनतारकाः साध्वादयः । तस्य द्विविधस्यापि तीर्थस्य सेवा पर्युपासना, इयं च विधिना क्रियमाणा भव्यात्मनां सम्यक्त्वं भूषयति, परंपरया सिद्धिपर्यवसानफला च संपद्यते । यदुक्तं श्रीभगवत्यंगे द्वितीयशतस्य पंचमोद्देशके-'तहारूवं णं भंते ! समणं वा माहणं वा पज्जुवासमाणस्स किंफला पज्जुवासणा ? गोयमा ! सवणफला, से णं भंते ! सवणे किंफले ? णाणफले, से णं भंते ! णाणे किंफले ? विण्णाणफले, एवं विण्णाणेणं पच्चक्खाणफले, पच्चक्खाणेणं संयमफले संयमेणं अणण्हयफले, अणण्हएणं तवफले, तवेणं वोदाणफले, वोदाणेणं अकिरियाफले, से णं भंते ! अकिरिया किंफला ? गोयमा ! सिद्धिपज्जवसाणफला पन्नत्तेति' अस्यार्थः-हे भदंत ! तथारूपमुचितस्वभावं श्रमणं वा साधुं, माहणं वा श्रावकं पर्युपासमानस्य सेवमानस्य जंतोः पर्युपासना- तत्सेवा किंफला कीदृक्फलप्रदायिनी प्रज्ञप्तेति ? प्रश्नः, अथोत्तरं-गौतम ! श्रवणफलेति सिद्धांतश्रवणफला, तत्किं फलं ? नाणफलेति श्रुतज्ञानफलं, श्रवणाद्धि श्रुतज्ञानमवाप्यते । एवं प्रतिपदं

प्रश्नः कार्यः, विण्णाणफलेत्ति विशिष्टज्ञानफलं, श्रुतज्ञानाद्धि हेयोपादेयविवेककारि विज्ञानमुत्पद्यते एव। पच्चक्खाणफलेत्ति विनिवृत्तिफलं, विशिष्टज्ञानो हि पापं प्रत्याख्याति। संयमफलेत्ति कृतप्रत्याख्यानस्य हि संयमो भवत्येव। अणण्हयफलेत्ति अनाश्रवफलः संयमवान् किल नवं कर्म नोपादत्ते। तवफलेत्ति अनाश्रवो हि लघुकर्मत्वात्तपस्यतीति। वोदाणफलेत्ति व्यवदानं कर्मनिर्जरणं, तपसा हि पुरातनं कर्म निर्जरयति, अकिरियाफलेत्ति योगनिरोधफलं, कर्मनिर्जरातो हि योगनिरोधं कुरुते, सिद्धिपज्जवसाणफलेत्ति सिद्धिलक्षणं पर्यवसानफलं सकलफलपर्यंतवर्त्ति फलं यस्याः सा तथा। इत्थं तीर्थसेवायाः सिद्धिफलत्वं विज्ञाय सम्यक्त्विभिस्तत्र प्रवर्त्तितव्यं ॥ ३ ॥

तथा चतुर्थं भूषणं स्थैर्यं, जिनधर्मं प्रति चलितचित्तस्य परस्य स्थिरत्वापादनं स्वस्य वा परतीर्थिकसमृद्धिदर्शनेऽपि सुलसावज्जिनप्रवचनं प्रति निःप्रकंपत्वं, सर्वप्रकारैर्दृढधर्मत्वमित्यर्थः, दृढधर्मैव च पुमान् श्रीपरमेश्वरप्रणीतागमे प्रशस्यते। यदुक्तमागमे-' चत्तारि पुरिसज्जाया पन्नत्ता, तं जहा-पियधम्मे नाम एगे नो दढधम्मे १ दढधम्मे नाम एगे नो पियधम्मे २ एगे पियधम्मे वि दढधम्मे वि ३ एगे नो पियधम्मे नो दढधम्मे ४ इत्यादि। अत्र तृतीयभंगस्यैव सर्वोत्कृष्टत्वमुक्तमिति। प्राक्सूचितसुलसावृत्तांतस्त्वयं—

अस्मिन् जंबूद्वीपे भरतक्षेत्रे मगधदेशे राजगृहं नाम नगरं, तत्र प्रसेनजिद्भूपतेश्चरणसेवातत्परः स्वोचितकलाकौशलवान् नागनामा सारथिः परिवसति स। तस्य पतिव्रतत्वादिप्रवरगुणालंकृता प्रधानजिनधर्मानुरागिणी सुलसा नाम प्रियाऽऽसीत्। एकदा नागसारथिः कुत्रापि गृहे कंचिद्गृहस्थं प्रभूततरप्रमोदेन स्वकीयोत्संगे पुत्रान् लालयंतं विलोक्य, स्वयं पुत्राभाव-

दुःखेन पीडितमानसः सन् करतले मुखं विन्यस्य चिंतयति स्म–' अहो मंदभाग्योऽहं यन्ममैकोऽपि पुत्रो नास्ति, धन्योऽयं यदेतस्य गृहे हृदयानंदजनकाः पुत्राः संतीति । ' तदैवं चिंतासमुद्रे मग्नं स्वपतिं विलोक्य सुलसा विनयान्विता मधुरवाण्या प्रोवाच–' स्वामिन् ! भवच्चित्ते का चिंता अद्य प्रादुर्भूता ? । ' सोऽवादीत्–' प्रिये ! अपरा तु कापि चिंता नास्ति, परमेका पुत्राभावचिंताऽस्ति, सा चात्यंतं मे मनो व्यथयति । ' ततः पुनः सुलसा प्राह–' स्वामिन् ! चिंतां मा कार्षीः, पुत्रोत्पादनार्थं सुखेनापरकन्यापाणिग्रहणं विधेहि । ' तदा नागो जगाद–' हे प्राणप्रिये ! ममास्मिन् जन्मनि त्वमेव प्रियाऽसि, त्वद्व्यतिरिक्ताः स्त्रियो मनागप्यहं न प्रार्थये, त्वत्कुक्षिसंभवमेव च पुत्ररत्नं वांछामि, तस्मात् हे कांते ! त्वमेव कंचिद्देवमाराध्य पुत्रं याचस्व । ' ततः सुलसा प्राह–' हे नाथ ! वांछितार्थसिद्धये अन्यं देवसमूहं मनसा वचसा कायेन च जीवितांतेऽपि नाराधयामि, परं सर्वेष्टसिद्धिकारणे श्रीमतामर्हतामाराधनं करिष्ये, पुनराचाम्लादितपःप्रभृतीनि विशेषतो धर्मकृत्यानि विधास्ये ' इति । अथैवं मधुरवाक्यैः कांतं संतोष्य, सा सती त्रिसंध्यं त्रिजगन्नाथं पूजयामास, अपराणि च धर्मकृत्यानि विशेषतश्चकार । एवं क्रियत्यपि काले गते एकदा इंद्रसभायां धर्मकर्मतत्परत्वे सुलसायाः प्रशंसाभूत्, तदैको देवस्तत्परीक्षां कर्तुं पृथिव्यां समागत्य साधुव्रतैर्द्रिद्रोऽपि साधुमुद्रां विधाय सुलसागृहं प्राविशत् । ततः सुलसा मुनिं स्वगृहागतं विलोक्यार्हदर्चाप्रसक्तापि सहसोत्थाय भक्त्या तत्पादप्रणतिं विधाय स्वगृहागमनकारणं पप्रच्छ । सोऽप्याचख्यौ–' ग्लानसाधो रोगच्छेदनाय लक्षपाकतैलं युज्यते, तदर्थमिहागतोऽस्म्यहं । ' तत् श्रुत्वातिसंतुष्टहृदया साऽपवरकांतः प्रविश्य लक्षपाकमहातैलकुंभं यावदुत्पाटितवती तावद्दिव्यप्रभावेण स कुंभो भग्नः, ततो मनागपि चित्ते दैन्यमबिभ्राणा सा सती पुनर्द्वितीयं कुंभं यावदुत्पाटयितुं लग्ना तावत् सोऽपि

भग्नः, एवं दिव्यप्रभावात्रयो घटा भग्नास्ततोऽपि सा हृदये विषादं न दध्रे, किं तु केवलमित्थं जजल्प–'अहो मंदभाग्याहं यन्ममेदं तैलं ग्लानस्य महात्मनः साधोरुपकाराय न जातमिति।' ततः स देवस्तस्या अभंगुरं भावं दृष्ट्वा सविस्मयः सन् स्वदिव्यरूपं प्रादुर्विधायैनां जगाद–'हे कल्याणि! इंद्रेण स्वसभायां तव श्राद्धत्वं प्रशंसितं, ततस्तत्परीक्षार्थमहमत्रागतः, इह पुनस्त्वमिंद्रकृतवर्णनादप्यधिकं धर्मस्थैर्यं निरीक्ष्य तुष्टोऽस्मि, ततो मत्तः कमपीष्टार्थं प्रार्थयस्वेति।' तदा सुलसापि मधुरवाण्या तं देवं प्रति बभाषे–'हे देव! यदि त्वं तुष्टोऽसि तदा पुत्ररूपं मे वांछितं वरं देहि।' ततः स देवोऽपि तस्यै द्वात्रिंशतं गुटिका दत्त्वाऽब्रवीत्–'त्वया एता गुटिकाः क्रमेण भक्षणीयास्तव महामनोज्ञाः सुता भविष्यंतीति।' तदनंतरं मदुचिते कार्ये जाते त्वया पुनरहं स्मरणीयः' इत्युक्त्वा देवो दिवं ययौ। अथ सुलसया चिंतितं–'एतासां गुटिकानां क्रमाद्भक्षणेनैयंतो बाला भविष्यंति, तेषां च बहूनां मलमूत्राद्यशुचि को मर्दयिष्यति? तस्मादेताः सर्वा अपि गुटिका एकत्र संयोज्य भक्षयामि, येन द्वात्रिंशल्लक्षणोपेत एक एव पुत्रो भवेत्' इति विचिंत्य सा तथैव ता गुटिका आश्नात्, परं दैवयोगात्तस्याः कुक्षौ समकालं द्वात्रिंशद्गर्भाः प्रादुरासन्। ततो गर्भाणां महाभारमसहिष्णुः सा कृशांगी कायोत्सर्गं कृत्वा तं सुरमस्मार्षीत्। तदा स देवोऽपि स्मृतमात्रः सन् सद्यस्तत्रागत्येदमब्रवीत्–'किमर्थं त्वयाहं स्मृतः?।' तदा सापि सर्वं निजवृत्तांतं जगाद, ततो देवः प्राह–'हे भद्रे! त्वया न सम्यक् कृतं। अथ यद्यपि ते अमोघशक्तिधारकाः पुत्रा भविष्यंति, परं ते द्वात्रिंशदपि समानायुष्कतावशात्समकालमेव मरणं प्राप्स्यंति। या पुनस्तव शरीरे गर्भव्यथा विद्यते तामहमपहरामि, त्वं विषादं मा कृथाः।' इत्युक्त्वा तद्व्यथां हृत्वा देवः स्वस्थानं गतः। अथ सुलसापि स्वस्थदेहा सती सुखेन गर्भान् बिभ्राणा पूर्णे काले

द्वात्रिंशल्लक्षणोपेतान् द्वात्रिंशतं सुतान् प्रासूत। नागोऽपि महताडंबरेण तेषां जन्मोत्सवं चक्रे। ते च क्रमेण वर्द्धमाना यौवनवयः संप्राप्ताः। तदा श्रेणिकस्य राज्ञो जीवितव्यमिव ते सर्वदा पार्श्ववर्त्तिनो बभूवुः। अन्यदा श्रेणिको राजा पूर्वप्रदत्तसंकेतां चेटकभूपतेः पुत्रीं सुज्येष्ठां प्रच्छन्नतयाऽऽनेतुं वैशाल्या अधः सुरंगां दापयित्वा रथारूढान् द्वात्रिंशतमपि नागरथिनः सुतान् सार्धे गृहीत्वा सुरंगामार्गेण वैशालीं प्राविशत्। सुज्येष्ठापि तत्र प्राग्दृष्टचित्रानुमानतो मगधेश्वरमुपलक्ष्यात्मनोऽतिप्रियां चेल्लणानाम्नीं लघुभगिनीं प्रति सर्वमपि तद्वृत्तांतमुक्त्वा तद्वियोगमसहमाना पूर्वं तामेव श्रेणिकस्य रथे समारोप्य स्वयं निजरत्नाभरणकरंडकं समानेतुं यावद्गता तावत्सुलसात्मजा राजानं प्रत्यूचुः–'स्वामिन्! अत्र शत्रुगृहेऽस्माकं चिरं स्थातुं न युक्तं' ततस्तत्प्रेरितो राजा चेल्लणामेव समादाय सद्यः पश्चाद्वलितः। अथ सुज्येष्ठापि स्वरत्नाभरणकरंडकमादाय यावत्तत्रागता तावत् श्रेणिकं नैक्षिष्ट। तदासावपूर्णमनोरथा भगिन्या वियोगदुःखेन पीडिता च सती उच्चैःस्वरेण–'हा चेल्लणा ह्रियते' इति पूच्चकार। तत् श्रुत्वा क्रोधाकुलश्चेटको राजा स्वयमेव यावत्सन्नद्धो भवति, तावत्पार्श्वस्थो वैरंगिकभटो राजानं निवार्य स्वयं कन्यायाः प्रत्यावृत्त्यर्थमचलत्। ततः स भटः सद्यस्तत्र गत्वा सुरंगाया निर्गच्छतः सुलसासुतान् सर्वानपि समकालमेकबाणेनैवावधीत्। ततः परं सुरंगायाः संकीर्णत्वेन स यावद् द्वात्रिंशतं रथानाकर्षयत् तावत् श्रेणिको बहुमार्गमुल्लंघ्य गतः, ततश्च वैरंगिको भटः पूर्णापूर्णमनोरथः सन् ततः प्रत्यावृत्त्य चेटकभूपाय तं वृत्तांतं निवेद्य स्वगृहं गतः।

अथ श्रेणिकभूपः शीघ्रं राजगृहमागत्यातिप्रीत्या चेल्लणां गांधर्वविवाहेन परिणीतवान्। ततो नागसुलसे राज्ञो मुखात्स्वं पुत्रमरणवृत्तांतं श्रुत्वा तद्दुःखपीडिते अत्यर्थं विलेपतुः, तदा शोकसमुद्रे मग्नयोस्तयोर्बोधनाय श्रेणिकोऽभयकुमारयुक्त-

स्तत्रागत्येत्थमब्रवीत्–' भो युवां विवेकिनौ स्थः, भवद्भ्यामीदृक् शोको न कार्यः, यतोऽस्मिन् संसारे ये केऽप्यमी भावा दृश्यंते ते सर्वेऽपि विनश्वराः संति, मृत्योः सर्वसाधारणत्वात्। तस्मात् शोकं विमुच्य सद्धर्मसाधनं धैर्यमालंबनीयं।' अथैवं वैराग्यसाराभिर्वाग्भिरेतौ प्रबोध्य राजा अभयकुमारमंत्रियुक्तः स्वगृहं ययौ। ततस्तौ दंपती अपि तं सर्वं पूर्वकृतदुष्कर्मणां विपाकं मत्वा विगतशोकौ भूत्वा विशेषतो धर्मकर्मणि प्रयत्नवंतौ बभूवतुः।

अथान्यदा चंपापुर्यां श्रीवीरस्वामी समवसृतः, पर्षदो मिलिताः, भगवता देशना प्रारब्धा, तदा श्रीवीरप्रभोरुत्तमश्रावको दंडच्छत्रकाषायांबरधारको अंबडनामा परिव्राट् तत्रागत्य जगत्प्रभुं नत्वा उचितस्थाने उपविश्य धर्मदेशनां शुश्राव। ततो देशनांते अंबडो भक्त्या प्रभुं नत्वेत्यवोचत्–' स्वामिन्नधुना मम राजगृहं प्रति गमनेच्छा वर्त्तते।' तावत्स्वामिनोक्तं– ' भो देवानुप्रिय! तत्र गतेन त्वया नागरथिनः प्रियां सुलसानाम्नीं श्राविकां प्रति अस्माकमादेशान्मधुरवाण्या धर्मशुद्धिः पृष्टव्या ' इति। ततः सोऽपि भगवद्वाक्यं तथेति प्रतिपद्याकाशमार्गेण गच्छन् राजगृहं प्राप्य पूर्वं सुलसाया गृहद्वारे क्षणं स्थित्वेत्थमचिंतयत्–' अहो! यां प्रति त्रिजगत्स्वामिना धर्मशुद्धिप्रश्नः कारितः सा सुलसा कीदृशी दृढधर्मिणी भविष्यति? अहमस्याः परीक्षणं कुर्वे।' एतद्विचिंत्य स वैक्रियलब्ध्या सद्यो रूपांतरं विधाय तद्गृहं प्रविश्य सुलसात एव भिक्षामयाचिष्ट। सा तु सत्पात्रं विनान्यस्मै अशनादिकं न प्रयच्छामीति स्वयं प्राक्कृतां प्रतिज्ञामविस्मरंती तस्मै याचमानाय स्वहस्तेन भिक्षां न ददौ। ततोऽसौ तद्गृहान्निःसृत्य पुराद्बहिः पूर्वस्यां दिशि चतुर्मुखं चतुर्भुजं ब्रह्मसूत्राक्षमालाभ्यां विराजितं हंसवाहनं सावित्रीसमन्वितं पद्मासनासीनं रक्तवर्णं एवंविधं साक्षाद्ब्रह्मरूपं विधाय चतुर्मुखैश्चतुर्णां वेदानां ध्वनिं कुर्वन् तस्थौ।

तदा 'अहोऽद्य पुराद्बहिः पूर्वदिग्भागे साक्षाद्ब्रह्मा समागतोऽस्तीति' लोकमुखात्प्रवृत्तिं श्रुत्वा केचिन्नागरिकास्तद्भक्त्यर्थं केचित्पुनः कौतुकविलोकनार्थं, एवं बहवो जनास्तत्र संप्राप्ताः, परं सम्यक्त्वेऽतिनिश्चलचित्ता सुलसा तु स्वव्रतरक्षणार्थं तद्वार्त्तां श्रुतामप्यश्रुतामिव कृत्वा तत्र नागमत्। ततस्तामनागतां मत्वा अंबडो द्वितीयेऽह्नि दक्षिणस्यां दिशि गरुडासनं पीतांबरं शंखचक्रगदाशार्ङ्गधनुर्धरं लक्ष्मीगोपिकादिभिर्विविधभोगलीलां कुर्वाणं विष्णुरूपं विधाय पुराद्बहिस्तस्थौ। तदापि मिथ्यादृक्संसर्गोद्विभ्यती सुलसा तत्र न जगाम। अथासौ तृतीयेऽह्नि पश्चिमायां दिशि व्याघ्रचर्मासनासीनं वृषभवाहनं त्रिनयनं चंद्रशेखरं प्रवहत्सुरसरिद्भूषितजटाधरं गजचर्मांबरं भस्मोद्धूलितदेहं एककरस्थितत्रिशूलं अपरकरधृतकपालं हृदि रुंडमालं पार्वतीमंडितार्धांगं साक्षान्महेशरूपं विधाय सकलजगज्जनोत्पादिका मदीयैव शक्तिरस्ति, मद्व्यतिरिक्तो न कोऽप्यन्यो जगदीश्वरोऽस्तीत्यादि पौरजनानां पुरो ब्रुवन् पुराद्बहिस्तस्थौ। तदा जनमुखादेतदीश्वरागमनवार्त्तां श्रुत्वापि शुद्धश्राद्धधर्मानुरक्तया सुलसया तु तद्दर्शनं मनसापि न प्रार्थितं। ततोऽसौ चतुर्थे दिने उत्तरस्यां दिशि अत्यद्भुतं सतोरणं चतुर्मुखं समवसरणं कृत्वा अष्टमहाप्रातिहार्यविराजितं साक्षाज्जिनरूपं निर्माय तस्थौ। तत्रापि सुलसां विना बहवो लोकास्तद्वंदनार्थं गताः, तेभ्यश्चासौ धर्मोपदेशं श्रावयामास। अथास्मिन्नवसरेऽपि एनां सुलसामनागतां मत्वा अंबडस्तस्याः क्षोभार्थं तद्गृहे एकं पुरुषं प्रैषीत्। सोऽपि तत्र गत्वा तामुवाच–'हे सुलसे! तवातिवल्लभः श्रीमानर्हन् वने समवसृतोऽस्ति, तन्नमनार्थं त्वं कथं न गच्छसि?।' तदा सा प्राह–'हे महाभाग! अस्मिन् भूतले अधुना श्रीमन्महावीरस्वामिनं विहायापरस्तीर्थकृन्नास्त्येव, वीरस्वामिनस्त्वन्यत्र देशे विहारश्रवणात् सांप्रतं कुतोऽत्रागमनसंभवः?' इति। अथैवं श्रुत्वा स पुनः प्राह–'हे मुग्धेऽयं

पंचविंशो जिनोऽधुना समुत्पन्नोऽस्ति, अतः स्वयं तत्र गत्वा त्वं किं न वंदसे ?।' सा प्राह–'हे भद्र ! इह क्षेत्रे पंचविंशो जिनः कदापि न संभवेत्, तस्मात् कोऽप्ययं मायावान् पुरुषः कपटाटोपैर्मुग्धान् जनान् वंचयति।' तदा स पुनराचख्यौ–'हे भद्रे ! यत्त्वयोक्तं तत्सत्यं, परं यद्येवं कृतेऽपि शासनोन्नतिर्जायेत तर्हि अत्र को दोषः ?।' सावोचत्–'एतादृग्वार्त्ताकथनेन त्वं तु मुग्धो दृश्यसे, परं ज्ञानदृष्ट्या चिंतय, असद्व्यवहारेण का शासनोन्नतिः ? किं तु प्रत्युत लोकोपहासादपभ्राजनैव जायते' इति। ततश्च स पुमानुत्थाय पश्चाद्गत्वा अंबडस्याग्रे सर्वं तद्वृत्तांतमवादीत्। तदा अंबडोऽपि अनुत्तरं सुलसाया धर्मे स्थैर्यं ज्ञात्वा–'अहो यद्वीरस्वामिना सभासमक्षं स्वयमेषा धर्मशुद्धिप्रश्नेन संभाविता तद्युक्तमेव, यत इत्थं मया चालिताप्येषा न मनसापि चलिता' इति विचिंत्य तं प्रपंचं संहृत्य स्वमूलरूपेण स सुलसाया गृहं प्राविक्षत्। ततस्तमागच्छंतं दृष्ट्वा सुलसापि साधर्मिकभक्त्यर्थं सद्यः समुत्थाय तत्संमुखं गत्वा–'हे त्रिजगद्भर्तुर्वीरस्योपासक ! ते स्वागतं विद्यते ?' इति प्रश्नपूर्वकं तत्पादप्रक्षालनं कारयित्वा तं प्रति स्वगृहचैत्यं वंदयामास। अंबडोऽपि आदृतः सन् विधिना चैत्यवंदनं विधाय तामूचे–'हे महासति ! अस्मिन् भरते त्वमेवैका पुण्यवत्यसि, यतस्त्वां प्रति श्रीवीरस्वामिना स्वयं मन्मुखेन धर्मशुद्धिप्रश्नः कारितोऽस्ति।' एतत् श्रुत्वातिशयानंदसंपन्ना सा भगवद्विचरणदिगभिमुखीभूय शिरस्यंजलिं कृत्वा श्रीवीरप्रभुमेव हृदि निधाय प्रशस्तवाण्या [वीरम]स्तवीत्। ततोऽम्बडो विशेषतस्तदाशयपरिज्ञानार्थं पुनस्तामवोचत्–'मयात्रायातमात्रेण लोकमुखादस्मिन् पुरे ब्रह्माद्यागमनवार्त्ता श्रुता, तत्र तेषां दर्शनार्थं त्वं किं गता न वा ?।' तदा सा प्राह–"हे धर्मज्ञ ! ये श्रीजिनधर्मानुरक्तास्ते पुरुषाः सकलरागद्वेषपरिविजेतृनिखिलभव्यजनोपकर्तृसर्वज्ञसर्वातिशयसमन्वितस्वतेजोविनिर्जितसहस्रकिरणश्रीमन्महावीरस्वामिनं

देवाधिदेवं विहाय अन्यान् रागद्वेषमोहाभिभूतान् अत एव निरंतरं स्त्रीसेवानिरतान् शत्रुवधबंधनादिक्रियातत्परान् आत्मधर्मानभिज्ञान् खद्योतोपमान् ब्रह्मादीन् देवान् द्रष्टुं कथमुत्सहेरन् ? यथा येन पुरुषेण परमाह्लादजनकं पीयूषपानं कृतं तस्य क्षारोदकपानेच्छा कथं जायते ? पुनर्येन बहुविधमणिरत्नादिव्यवसायो विहितः स पुमान् काचशकलादिव्यापारं कर्तुं कथमिच्छति ? अतस्त्वं जिनोक्तभावान् जानन् मन् श्रीवीरजिनोपदिष्टमद्धर्मरतां मां कथमेवं पृच्छसीति।" अथांबडोऽपि इत्थं धर्मेऽतिस्थिरं सुलसाया वाक्यं निशम्य तामत्यर्थं श्लाघयित्वा स्वकृतब्रह्मादिरूपनिर्माणप्रपंचं तदग्रे निवेद्य मिथ्यादुःकृतं दत्त्वा यथारुचिरन्यत्रागमत् ।

तस्यांबडस्य श्रीवीरस्वामिपार्श्वे गृहीतद्वादशव्रताः सप्त शतानि शिष्या आसन् । ते चैकदा कांपिल्यपुरात्पुरिमतालपुरं यांतस्तृषा व्याकुलीभूता मार्गे गंगामहानदीं प्राप्तास्तत्रान्यं कमपि जलप्रदायकजनमपश्यंतः स्वयं च परिगृहीतादत्तादानविरमणव्रताः संतोऽन्योऽन्येभ्य इत्थं प्रोचुः-' भो देवानुप्रियाः ! अस्माकं सप्तशतीमध्यादेकः कश्चित्स्वव्रतभंगं विधाय चेज्जलपानं कारयति तर्हि अवशिष्टानां सर्वेषामपि व्रतरक्षणं स्यादिति । ' परं स्वस्वव्रतभंगभिया न केनापि तद्वचः प्रतिपन्नं । ततस्तन्नादेयं जलमनादाय सर्वेऽपि तत्रैवानशनं गृहीत्वा हृदि श्रीमहावीरं ध्यायंतः, अंबडाख्यं स्वगुरुं च नमंतः समाधिना कालं कृत्वा पंचमं स्वर्गं प्राप्ताः ॥

अंबडस्तु स्थूलहिंसां परित्यजन् नद्यादिषु केलिमकुर्वन् नाट्यविकथाद्यनर्थदंडमसमाचरन् अलाबुदारुमृत्पात्रवर्जितपात्राणि अपरिगृह्णन् गंगामृत्तिकां मुक्त्वान्यविलेपनमकुर्वन् कंदमूलफलान्यभुंजन् आधाकर्मादिदोषदुष्टमाहारमसेवन् (समानः) अंगुली-

यकमात्रालंकरणं धारयन् गैरिकादिधातुरक्तवस्त्राणि परिदधत् पुनर्वहन्निर्मलं केनापि गृहस्थेन दत्तं वस्त्रेण च सम्यग् रीत्या गलितं अर्द्धाढकप्रमितं जलं पातुं, दर्व्यादि शोद्धुं वा गृह्णन्, तादृगेवाढकप्रमितं जलं स्नानार्थं गृह्णन् श्रीमज्जिनप्रणीतशुद्धधर्मे एव चैकमतिं बिभ्रत् स्वकीयं सकलमपि जन्म सफलीकृत्य प्रांते आमन्नमद्रतिः सन् मारिकीं संलेखनां कृत्वा ब्रह्मलोकं प्राप्तः । तत्र दिव्यानि देवसुखान्यनुभूय क्रमेण मानवभवं प्राप्य संयमाराधनपूर्वकं सिद्धिं यास्यति ।

सुलसा श्राविका च हृदयांभोजे एकं परमेश्वरमेव बिभ्राणा सर्वोच्चमस्थैर्यभूषणेन सम्यक्त्वं भूषयित्वा तीर्थंकरनामकर्मोपार्जितवती अत्रैव भरतक्षेत्रे आगामिचतुर्विंशतिकायां चतुस्त्रिंशदतिशयसमन्वितो निर्ममो नाम पंचदशस्तीर्थंकृद्भावी । एवमन्येऽपि भव्यात्मानो दिव्यमात्मीयसम्यक्त्वरत्नं विभूषयितुं धर्मस्थैर्यप्रयत्नं कुर्वंतु, येन त्रिजगत्शेखरपदप्राप्तिर्भवेत् ।

|| इति सम्यक्त्वस्थैर्ये सुलसाख्यानकं ४ ||

तथा पंचमं भूषणं भक्तिः, प्रवचनविनयवैयावृत्त्यादिविधानमित्यर्थः । इयं च सद्भावेन विधीयमाना सम्यक्त्वं सुतरां भूषयति, क्रमेण प्रवरतरदेवनरसंपदो महानंदसंपदश्च दायिका संपद्यते । अत्र बाहुसुबाह्वादिदृष्टांतो यथा—

बाहुसाधुना समुल्लसद्भावेन श्रीमद्गुर्वादिपंचशतसाधूनां आहारानयनादिभक्तिं कुर्वता बहुतरं भोगकर्मोपार्जितं, सुबाहुसाधुना च तेषां विश्रामणादिभक्तिं कुर्वता निःसपत्नं बाहुबलमुपार्जितं । ततो द्वावप्येतद्भक्त्या स्वसम्यक्त्वं भूषयित्वा प्रांते समाधिपरिणामप्राप्तानि देवसुखानि भुक्त्वा ऋषभस्वामिनः पुत्रत्वेनोत्पन्नौ । तत्राद्यो भरतः स हि चक्रवर्तिपदं प्राप्तः द्वितीयस्तु बाहुबली, तेन चक्रवर्तिनोऽपि अधिकतरं महाबलं प्राप्तं, ततस्तौ द्वावपि निरुपमनरसुखानि भुक्त्वा चारित्रं समाराध्य मुक्ति-

भाजो पभूनतुः । निस्तरतस्त्वेतत्प्रबंधो ग्रंथांतरादवसेयः । इत्थं प्रवचनभक्तेर्महाफलानि मत्वा भव्यैर्नित्यं तत्र प्रवर्त्तितव्यं ॥ ५ ॥ एतानि पंच सम्यक्त्वस्य भूषणानि उद्दीपका गुणाः कीर्त्तितानि, एतैर्गुणैः सम्यक्त्वमलंक्रियते इति भावः ॥

अथ लक्षणपंचकं व्याख्यायते-उपशम इत्यादि, तत्रोपशमो महापराधकारिण्यपि सर्वथा कोपपरित्यागः, स च कस्य-चिन्तिस्मणिनः कषायपरिणतेः कटुकफलावलोकनाद्भवति, कस्यचित्पुनः स्वभावादेवेति । अयं चात्मगतसम्यक्त्वस्योपलक्षकत्वाद्विवेकिभिर्यत्नतो धार्यः । किं च क्रोधोदयान्नष्टमपि कार्यमुपशमादेव पुनः प्रादुर्भवति, नान्यथा । उक्तं च–

कोहेण य हारवियं, उप्पन्नंतं च केवलं नाणं । दमसारेण य रिसिणा, उवसमजुत्तेण पुणो लद्धं ॥ १ ॥

स्पष्टार्थेयं, अस्या भावार्थस्तु दमसारर्षिकथानकादवसेयस्तच्चेदं—

अस्मिन् जंबूद्वीपे भरतक्षेत्रे कृतांगला नाम नगरी आसीत् । तत्र सिंहरथो राजा, तस्य सुनंदा नाम पट्टराज्ञी, तत्कुक्षिसंभवो दमसारः पुत्रः, स च बालत्वे एव द्वासप्ततिकलानिपुणः पित्रोर्हृदयानंदजनकोऽतीवेष्टः संजातः, यौवने च पित्रा विशिष्टराजकन्यापाणिग्रहणं कारयित्वा युवराजपदे स्थापितः, सुखेन कालं गमयति स्म । एकदा तन्नगरासन्नप्रदेशे भगवान् श्रीमहावीरस्वामी समवसृतः, देवैः समवसरणं विहितं, पर्षदो मिलितास्तदा सिंहरथराजापि सपुत्रः सपरिजनो महर्द्ध्या वंदनार्थं समागतः, छत्रचामरादिराजचिह्नानि दूरे विमुच्य परमेश्वरं त्रिःप्रदक्षिणीकृत्य परमभक्त्या वंदित्वोचितस्थाने उपविष्टः, स्वामिना तस्यां नरसुरपर्षदि धर्मोपदेशो दत्तः, पर्षत्प्रतिगता, ततो दमसारकुमारो भगवंतं नमस्कृत्य विनयेनेत्यवादीत्–' स्वामिन् ! भवदुक्तः सर्वविरतिरूपो धर्मो मे रुचितोऽतोऽहं देवानुप्रियाणां समीपे प्रव्रज्यां ग्रहीष्यामि । नवरं मातापितरावापृच्छे।'

किमहं भव्योऽभव्यो वा ? चरमोऽचरमो वा ? मम केवलज्ञानं भविष्यति न वेति' अथैवं विचार्य स मुनिर्यत्र श्रीवीरस्वामिनः स्थिता आसन् तत्रागत्य भगवंतं त्रिःप्रदक्षिणीकृत्य वंदित्वा पर्युपास्ते स्म । तदा श्रमणो भगवान् श्रीमहावीरो दमसारं प्रत्येवमवादीत्–'भो दमसार ! अद्य ध्यानं ध्यायतस्तव हृदयकमलेऽयमध्यवसायः समुत्पन्नः, अहं स्वामिनं पृच्छामि किमहं भव्योऽभव्यो वा ? इत्यादि, सत्योऽयमर्थः ? ' मुनिः प्राह–'एवमेव' इति । ततः स्वामी प्राह–'भो दमसार ! त्वं भव्योऽसि नोऽभव्यः, पुनस्त्वं चरमशरीरोऽसि नोऽचरमः, तव केवलज्ञानं तु प्रहरमध्ये समागतमस्ति, परं कषायोदयेन तद्विलंबो भविष्यति । ' दमसारः प्राह–'स्वामिन् ! कषायं परिहरिष्यामि । ' ततस्तृतीयपौरुष्यां स मुनिर्भगवदाज्ञां गृहीत्वा मासक्षपणपारणके भिक्षार्थं युगमात्रया दृष्ट्या ईर्यापथं विलोकयन् यत्र चंपानगरी तत्र संप्राप्तः, तदानीं शीर्षे सूर्यस्तपति, पादयोरधस्तात् ग्रीष्मातपेन तप्ता वालुकाऽपि प्रज्वलति, तत्पीडया व्याकुलीभूतो मुनिर्नगरद्वारे स्थित्वा चिंतयति स्म–'सांप्रतं घर्मातपो दुःसहो यदि कोऽप्यत्र नगरीवास्तव्यजनो मिलति तर्हि तं प्रति निकटमार्गं पृच्छामि ।' तस्मिन् समये कोऽपि मिथ्यादृष्टिः किंचित्कार्यं विधातुं गच्छन् तत्रायातः, सोऽपि सन्मुखमिलितं [ महामंगलभूतमपि ] तं साधुं विलोक्यापशकुनं मे जातमिति चिंतयन् पुरद्वारे स्थितः, तदा तं मिथ्यात्विनं प्रति साधुना पृष्टं–'भो भद्र ! अस्मिन् पुरे केन मार्गेणाशुगृहाणि प्राप्यंते ? । ' तेन चिंतितं–'एष नगरस्वरूपं न जानाति, ततोऽहमेनं महादुःखे पातयामि, येन मदंतदुःशकुनस्य फलं न भवेदिति । ' एतद्विचिंत्य स भणति स्म–'भोः साधोऽमुना मार्गेण व्रज येन गृहस्थानां गृहाणि शीघ्रः प्राप्नुयाः' इति । ततः सरलस्वभावः स साधुस्तद्दर्शिते एव मार्गे चलितः, परं स मार्गोऽतीव विषमोऽपथसदृशो यत्र

पदमात्रमपि चलितुं न शक्नोति। सर्वगृहाणां पश्चाद्भागा एव दृष्टिपथे आयांति, कोऽपि जनः संमुखोऽपि न मिलति। तदै-
तन्मार्गस्वरूपं विलोक्य कोपानलेन प्रज्वलितः स साधुश्चिंतयति स्म–"अहो एतन्नगरलोका दुष्टाः, यतोऽमुना पापिष्ठेन
निःप्रयोजनमेवाहं एतादृशे दुःखे पातितः, एतादृशा हि दुष्टाः प्राणिनः शिक्षायोग्याः, यदुक्तं–मृदुत्वं मृदुषु श्लाघ्यं, काठि-
न्यं कठिनेषु च। भृंगः क्षणोति काष्ठानि, कुसुमानि दुनोति न ॥१॥ ततोऽहमप्येतान् दुष्टलोकान् कष्टे पातयिष्यामीति।" एवं
विमृष्य कोपाकुलः स साधुः क्वापि छायाविनि प्रदेशे स्थित्वोत्थानश्रुतं गुणयितुमारब्धवान्। तस्य श्रुतस्य मध्ये उद्वेगजनकानि
सूत्राणि संति, यत्प्रभावाद् ग्रामो वा नगरं वा जनपदं वा सुवसमपि उद्वसं भवेत्। अथ स साधुः कोपेन यथा यथा श्रुतं
गुणयति स्म तथा तथा नगरेऽकस्मात्परचक्रादित्रासप्रादुर्भावात् सर्वेऽपि नगरलोका भयभीताः शोकाकुलाः संतः सर्वे स्व-
धनधान्यादि त्यक्त्वा केवलं निजजीवितमेव गृहीत्वा प्रतिदिशं नष्टाः, राजापि राज्यं त्यक्त्वा नष्टः, नगरं च शून्यं कृतं।
तस्मिन्नगरे पतनस्खलनपलायनादिक्रियाजनितविविधदुःखैर्दुःखितान् नगरलोकान् विलोक्य कोपान्निवृत्तः साधुश्चिंतयति
स्म–"अहो किमेतन्मया कृतं? निःकारणमेवैते सर्वेऽपि लोका दुःखिनः कृताः, परं सर्वज्ञवचनं कथमन्यथा भवेत्? तस्मा-
त्स्वामिना यत्प्रागुक्तं तदेव जातं, मया मुधैव कोपं कृत्वा अधुनोत्पद्यमानं केवलज्ञानं हारितमिति।" तत एवं पश्चात्तापं
कुर्वन् अतिकरुणारसमग्नः स साधुः सर्वलोकानां स्थिरीकरणाय समुत्थानश्रुतं परावर्तयितुमारब्धवान्। तन्मध्ये बहून्याह्लाद-
जनकानि सूत्राणि संति, यत्प्रभावादुद्वसमपि ग्रामादिकं सद्यः सुवसं स्यात्। अथ यथा यथा स तत्सूत्रं परावर्तितवान् तथा
तथा प्रमुदिताः सर्वेऽपि लोका नगरमध्ये समागताः, राजापि सहर्षः स्वस्थानं प्राप्तः, भयवार्तापि नष्टा, स्वस्थीभूतश्च

गर्वलोकः । ततः तपःशोषितशरीरः परमोपशमरसनिमग्नो दमसारमुनिस्तत्राहारमगृहीत्वैव पश्चाद्वलितः प्राप्तश्च सविनयं स्वामिसमीपं । तदा स्वामिना प्रोक्तं–" भो दमसार ! अद्य चंपायां नगर्यां भिक्षार्थं गच्छतस्तव मिथ्यादृष्टिवचनात्क्रोधः समुत्पन्न इत्यादि यावदुपशांतकोपस्त्वमिह संप्राप्तः, अयमर्थः समर्थः ? । ' स प्राह–' तथैवेति । ' पुनः स्वामिनोक्तं–' भो दमसार ! योऽस्माकं श्रमणो वा श्रमणी वा कषायमुद्वहति स दीर्घसंसारं करोति, यस्तूपशमं दधाति तस्य संसारोऽल्पो भवति । ' एतद्वचो निशम्य मुनिः प्राह–' भगवन् ! महामुपशमसार प्रायश्चित्तं देहि । ' तदा स्वामिना तपःप्रतिपत्तिरूपं प्रायश्चित्तं दत्तं । ततो दमसारमुनिः स्वामिसमीपेऽभिग्रहं गृहीतवान्–' यदा मे केवलज्ञानं भविष्यति तदाहमाहारं ग्रहीष्यामीति । ' एवमभिग्रहं गृहीत्वा दमसारमुनिः संयमेन तपसा चात्मानं भावयन् विचरति स्म । ततस्तस्य साधोः प्रमादजनितं दोषं निंदतो गर्हमाणस्य च शुभाध्यवसायेन सप्तमे दिवसे केवलज्ञानं समुत्पन्नं । देवैर्महिमा कृतः । तदनंतरं दमसारर्षिर्बहून् जनान् प्रतिबोध्य द्वादश वर्षाणि यावत् केवलपर्यायं पालयित्वा प्रांते संलेखनां कृत्वा सिद्धिं गतः । इति उपशमोपरि दमसारदृष्टांतः । एवमन्यैरपि सम्यक्त्विभिर्निखिलाभ्यंतरतापनिवारके स्वपरोपकारके परमोपशमरसे निमज्जनीयं, यथा परमानंदसुखश्रेणयः समुल्लसेयुः ॥ इति उपशमाख्यं प्रथमं लक्षणं ॥ १ ॥

तथा प्रवरतरदेवनरसुखानां परिहारेण केवलं मुक्तिसुखाभिलाषः संवेगः । सम्यग्दृष्टिर्हि नरेंद्रसुरेंद्राणां दिव्यान्यपि विषयसुखानि अनित्यत्वाद् दुःखानुबंधित्वाच्च दुःखतया मन्यमानो नित्यानंदस्वरूपं मोक्षसुखमेव सुखत्वेन मन्यते वांछति चेति । इदं द्वितीयं लक्षणं २ । तथा नारकतिर्यगादिसांसारिकदुःखेभ्यो निर्विण्णता निर्वेदः, सम्यग्दर्शनी हि जन्मादिदुःखा-

विगहने संसारकारागारे गुरुतरकर्मदण्डपाशिकैस्तथा तथा कदर्थ्यमानः प्रतिकर्तुमक्षमो ममत्वरहितश्च सन् दुःखेन भवविरक्तो भवति। इदं तृतीयं लक्षणं॥

एतौ च संवेगनिर्वेदौ मुक्तिपदप्रापकत्वात् सुदृष्टिजनैर्दृढप्रहारिवत् सर्वदाऽऽश्रयणीयौ। दृढप्रहारिवृत्तान्तस्त्वयं—

माकंदिनगर्यां सुभद्रः श्रेष्ठी वसति। तस्य दत्तनामा पुत्रः, स च शैशवे बालैः सह रममाणो दृढप्रहारेण तान्मारयति, तदा लोकैर्दृढप्रहारीति तस्य नाम दत्तं। अथ प्रत्यहमेवं कुर्वंतं तं दृष्ट्वा लोकाः श्रेष्ठिने उपालंभं ददुः। ततः श्रेष्ठिना बहुधा वारितोऽपि स क्रूरत्वाद् बालान् मारयत्येव। तदा लोकै राज्ञे तत्स्वरूपं कथितं। ततो राजादेशात् श्रेष्ठिना स्वगृहात् स निष्कासितः। अथातिक्रूरस्वभावः स बालः क्वापि निवासमलभमानश्चौरपल्ल्यां गतः। तत्र कुसंसर्गाच्चौरो जातः। एकदा एकस्य दरिद्रब्राह्मणस्य गृहे स चौर्यार्थं प्रविष्टः, तदा शृंगाभ्यामाघ्नंती चौर्यांतरायं कुर्वती सौरभेयी तत्संमुखं धाविता। सा च तेन निर्दयेन सद्यः खड्गेन हता। ततो जागृतो ब्राह्मणः करेण यष्टिमुत्पाट्य संमुखं गतः, सोऽपि तथैव मारितः, तदनु पूत्कारं कुर्वाणा सगर्भा ब्राह्मण्यपि तेन मारिता। पश्चाद्भूमौ लुठन् तद्गर्भस्तेन हस्तस्तदा कुतोऽपि शुभोदयात् तस्य मनसि वैराग्यं समुत्पन्नं, स चौरो निर्वेदगुणयुक्तः सन् चिंतयति स्म–'आः किमिदं पापं मया पापिष्ठेन कृतं? धिग्मां नरजन्मनि एतादृग्घोरपापकारिणं।' इत्यादि विचिंत्य पंचमुष्टिमयं लोचं कृत्वा स चारित्रं जग्राह। ततो यावदेतत् पापं मे स्मृतिमायास्यति तावन्मयाऽन्नं पानं च न ग्राह्यमित्यभिग्रहं गृहीत्वा तत्रैव पुरे पूर्वप्रतोल्यां स कायोत्सर्गेण तस्थौ। तन्नगरलोकैर्लेष्टुयष्टिप्रहारैराहन्यमानोऽपि क्षमामेवाकरोत्, मनागपि चेतसि न चुक्षोभ। सार्द्धमासानंतरं च न कोऽपि तत्पापं स्मारयति स्म। ततो

द्वितीयप्रतोल्यां स कायोत्सर्गेण तस्थौ। तत्रापि तथैव जातं। एवं यावच्चतुर्थप्रतोल्यां, तदेवं दुःखमयसंसारविरक्तः परमसंवेगरससंसक्तश्च सन् षड्भिर्मासैः सर्वमपि तत्पापं समूलमुन्मूल्य केवलज्ञानं प्राप्य तत्क्षणं सिद्धिं जगाम। इति संवेगनिर्वेदयोरुपरि दृढप्रहारिकथा। एतां कथां निशम्यान्यैरपि आत्महितार्थिभिर्यत्नेनैतौ धार्यौ ॥ इति द्वितीयतृतीयलक्षणे ॥ २-३ ॥

तथा दुःखितेषु प्राणिषु अपक्षपातेन दुःखनिराकरणेच्छाऽनुकंपा, पक्षपातेन तु केवलं दुष्टस्वभावानां व्याघ्रादीनामपि स्वपुत्रादौ करुणास्त्येव, परं वस्तुतः सा करुणा न भवतीत्यत उच्यते 'अपक्षपातेनेति' सा चानुकंपा द्विधा-द्रव्यतो भावतश्च। तत्र द्रव्यतोऽनुकंपा कमपि दुःखिनं दृष्ट्वा सत्यां शक्तौ तस्य दुःखप्रतिकारविधानेन भवति। भावतस्तु आर्द्रहृदयत्वेनेति। इयं च द्विधाप्यनुकंपा इंद्रदत्तमाश्रित्य सुधर्मभूपवत् सम्यक्त्विभिर्निरंतरं समाश्रयणीया। इह सुधर्मभूपतेः कथानकं चेदं—

पंचालदेशे वरशक्तिनाम नगरं। तत्र करुणार्द्रांतःकरणः परमधार्मिको जैनमतानुसारी सुधर्मा नाम राजा राज्यं शास्ति। तस्य नास्तिकमतानुयायी जयदेवनामा मंत्र्यस्ति। एकदा ग्रामांतरादागतेन केनचिच्चरेण आस्थानमंडपे उपविष्टस्य राज्ञोऽग्रे विज्ञप्तिः कृता-' स्वामिन्! महाबलनामा सीमालभूपतिः सांप्रतं ग्रामघातमार्गघातादिभिःकारैरत्यंतं लोकान् पीडयति। स च महादुष्टो भवंतमंतरेण केनापि साधयितुमशक्योऽस्ति।' तत् श्रुत्वा राज्ञा मंत्रिमन्मुखं दृष्टं। तदा मंत्रिणोक्तं-' स्वामिन्नसौ वराकस्तावद्गर्जति यावद्भवता नाक्राम्यते। यदुक्तं-तावद्गर्जंति मातंगा, वने मदभरालसाः। शिरोऽवलग्नलांगूलो, यावन्नायाति केसरी ॥ १ ॥' इत्यादि मंत्रिवचः श्रुत्वा राज्ञा चिंतितं-" यो निजमंडलस्य कंटको भवति सोऽवश्यं निराकरणीयः, अन्यथा

राज्ञो नीतिभंगप्रसंगः स्यात् । नीतिशास्त्रे च दुष्टनिग्रहः शिष्टपालनं च राज्ञो धर्म इत्यादिश्रवणात्, तस्मादतः परमत्रार्थे विलंबो न कार्यः ।" एवं विचिंत्य राजा सद्यः स्वसैन्यं संमेल्य निजशत्रोर्महाबलस्योपरि प्रस्थितः, क्रमेण तद्देशे गत्वा, संग्रामे तं जित्वा, तत्सर्वस्वं गृहीत्वा महतानंदेन निजनगरसमीपं संप्राप्तः । ततः प्रवेशसमये महाजनेन महोत्सवे क्रियमाणे बहुसैन्यपरिवृतो भूपतिर्यावन्मुख्यप्रतोलीपार्श्वे समागतस्तावत् सा प्रतोली पतिता, ततोऽपशकुनमिति ज्ञात्वा व्याघुट्य नगरबाह्येऽवस्थितो भूपः, ततो मंत्रिणा तत्कालं तत्स्थाने एव नवीना प्रतोली कारिता । अथ द्वितीयदिने राज्ञः पुरप्रवेशसमये सापि तथैव पतिता । एवं तृतीयदिवसेऽपि जातं । ततो बहिःस्थित एव भूपतिर्मंत्रिणं प्रति पृष्टवान्–'भो जयदेव ! एषा प्रतोली कथं पुनः पुनः पतति ? अथ केनोपायेन स्थिरा भविष्यति ? ।' तदा मंत्रिणा झटिति कंचिन्निमित्तज्ञं पुरुषमापृच्छय राज्ञे उक्तं–"हे महाराज ! मया पृष्टेनैकेन नैमित्तिकेनेत्थमुक्तं–अस्याः प्रतोल्या अधिष्ठायिका काचिद् देवता कुपिताऽस्ति, सा प्रतिदिनं प्रतोलीं पातयति । यदि राज्ञा मातृपितृभ्यां वा स्वहस्तेनैकं मनुष्यं हत्वा तद्रक्तेन प्रतोली सिच्यते तदा सा स्थिरा भविष्यति, नान्यैः पूजाबलिनैवेद्यादिभिः ।" एतद्वचनं श्रुत्वा राजा प्राह–"यदीदृग्जीववधेनेयं प्रतोली स्थिरा भवेत् तर्हि अनया प्रतोल्या अनेन नगरेण च मम किमपि प्रयोजनं नास्ति । यदुक्तं–क्रियते किं सुवर्णेन, शोभनेनापि तेन च । कर्णः स्त्रुटति येनांग–शोभाहेतुर्निरंतरं ॥१॥ तस्माद् यत्राहं तत्र नगरमिति ।" ततो मंत्रिणा ईदृशं राज्ञो निश्चयं विज्ञाय सर्वानपि महाजनानाकार्योक्तं–"भो लोकाः ! श्रूयतां, मनुष्यवधं विनैषा प्रतोली स्थिरा न भवति, मनुष्यवधादिकं तु नृपादेशं विना कर्त्तुमशक्यं, तस्माद्भवतां विचारे यत्समायाति तत्कुर्वंतु ।" ततो महाजनेन नृपाग्रे आगत्य भणितं–'स्वामिन् ! वयं सर्व-

मप्येतत्कार्यं करिष्यामो भवद्भिस्तूष्णीं कृत्वा स्थातव्यं।' राज्ञोक्तं-'प्रजाभिर्यत् पापं पुण्यं च क्रियते तस्य षष्ठो भागो मामपि समेति, तस्मादेतत्पापकार्ये सर्वथा मेऽभिलाषो नास्ति।' ततः पुनरपि महाजनेनात्याग्रहेणोक्तं-'स्वामिन्! पापभागोऽस्माकं पुण्यभागो भवतामित्यस्मद्वचोऽवधार्य सांप्रतं भवद्भिः किमपि न जल्पनीयं।' तदा राजा तु मौनमाधाय स्थितः। ततो महाजनेन प्रतिगृहं द्रव्यस्योद्ग्रहणिकां कृत्वा तेन द्रव्येण कांचनमयः पुरुषो निर्मापितः। पश्चात् तं पुरुषं शकटे संस्थाप्य कोटिद्रव्यपत्रिकां च तदग्रे मुक्त्वा नगरमध्ये उद्घोषितं-'यदि मातापितरौ स्वहस्तेन पुत्रस्य गलमोटनं कृत्वा देवतायै बलिं प्रयच्छेतां, तर्हि ताभ्यामयं कांचनमयः पुरुषः कोटिद्रव्यं च दीयते' इति। अथ तत्रैव नगरे महादरिद्रो वरदत्तनामा ब्राह्मणोऽस्ति, तद्भार्या रुद्रसोमा, सा निष्करुणा, तयोः [redacted] पुत्राः संति। तेन वरदत्तेन तामुद्घोषणां श्रुत्वा स्वभार्या पृष्टा-"हे प्रिये! लघुपुत्रमिंद्रदत्तं दत्त्वा इदं द्रव्यं गृह्यते तर्हि वरं, यतो द्रव्यप्राप्तौ सर्वे गुणा भविष्यंति। उक्तं च-यस्यास्ति वित्तं स नरः कुलीनः, स पंडितः स श्रुतवान् गुणज्ञः। स एव वक्ता स च दर्शनीयः, सर्वे गुणाः कांचनमाश्रयंति ॥ १ ॥ पुनर्हे भद्रे! धनमाहात्म्यं पश्य-पूज्यते यदपूज्योऽपि, यदगम्योऽपि गम्यते। वंद्यते यदवंद्योऽपि, तत्प्रभावो धनस्य च ॥ २ ॥ तथा हे प्रिये! एतद्धने गृहमागते सति बहुभिर्ब्राह्मणभोजनादिधर्मकृत्यैरेतत् पापं सद्यः परिहरिष्यावहे, ततोऽत्रार्थे कापि चिंता न कार्येति।" तदा तयापि धनलुब्धया निष्करुणतया तद्वचस्तथेति प्रतिपन्नं। ततो वरदत्तेन पटहं धृत्वा प्रोक्तं-'महामिदं द्रव्यादि दीयतां, अहं मत्कुक्षिजं पुत्रं दास्यामि।' तदा महाजनेन भणितं-'यदि त्वं भार्यासहितः पुत्रस्य गलमोटनं कृत्वा देवतायै बलिं दद्यास्तर्हीदं सर्वं तुभ्यं दीयते नान्यथा।' वरदत्तेन तत् सर्वं प्रतिपन्नं। तदा पार्श्वस्थेनेंद्रदत्तेन तां

पितुः प्रवृत्तिं श्रुत्वा मनसि चिंतितं–"अहो स्वार्थ एव संसारे प्रियोऽस्ति, परमार्थतः कोऽपि कस्यचित् वल्लभो नास्ति। यदुक्तं–'वृक्षं क्षीणफलं त्यजंति विहगा' इत्यादि। पुनरचिंति–'यो दरिद्रो भवति तस्य प्रायः करुणा न भवन्त्येव। उक्तं च–बुभुक्षितः किं न करोति पापं, क्षीणा नरा निष्करुणा भवंति। आख्याहि भद्रे! प्रियदर्शनस्य, न गंगदत्तः पुनरेति कूपं ॥१॥ इत्यादि।" ततो वरदत्तेन द्रव्यं गृहीत्वेत्थं विचिंतयन्नेव स पुत्रो महाजनायार्पितः, महाजनेन च मद्रवचंदनपुष्पतांबूलतिलककुंडलकेयूरकटकमुक्ताफलहारप्रभृतिविभूषणैर्भूषयित्वा राजसमीपमानीतः, तदा राज्ञापि सालंकारं मातापितृसमन्वितं बहुभिर्नगरलोकैर्वेष्टितं विकसितवदनमिंद्रदत्तं दृष्ट्वा चमत्कृतेन भणितं–'रे माणवक! सांप्रतं विषादावसरे त्वं प्रमुदितजनवद्विकसितवदनः कथं दृश्यसे? मरणात् किं न बिभेषि?' तेन भणितं–"हे देव! यावद्भयं नागच्छति तावद्भेतव्यं, आगते तु निःशंकैः सोढव्यं। यदुक्तं–तावदेव हि भेतव्यं, यावद्भयमनागतं। आगतं तु भयं दृष्ट्वा, प्रहर्तव्यमशंकितैः ॥ १ ॥" पुनरपींद्रदत्तेनोक्तं–"भो राजन्! एकं नीतिवाक्यं ब्रवीमि, भवद्भिः सर्वलोकैश्च सावधानतया श्रोतव्यं। लोके हि पितृसंतापितः शिशुर्मातृशरणं गच्छति, मात्रोद्वेजितः पितृशरणं गच्छति, उभाभ्यामुद्वेजितो राज्ञः शरणं गच्छति, राज्ञापि संतापितो महाजनशरणं गच्छति, परं स्वामिन्! यत्र मातापितरौ पुत्रस्य गलमोटनादि कुरुतः, राजा प्रेरको भवति, महाजनो द्रव्यं दत्त्वा हननार्थं गृह्णाति, तत्र परमेश्वरं विना कस्य शरणं प्रतिपद्यते? कस्याग्रे च स्वदुःखं निवेद्यते? [उक्तं च–माता यदि विषं दद्यात्, पिता विक्रीण(णी)ते सुतं। राजा हरति सर्वस्वं, शरणं कस्य जायते? ॥ १ ॥] तस्माद्भो राजन्! परमेश्वरमेव शरणीकृत्य धीरत्वेन मरणदुःखं सोढव्यं।" एवं तद्वचः श्रुत्वाऽतिकरुणारसमग्नेन राज्ञोक्तं–"भो लोकाः! किमर्थं भवद्भिरेष

बालहननादिप्रयासो विधीयते ? ईदृक्पापहेतुनाऽनेन नगरेण अनया प्रतोल्या च मम प्रयोजनं नास्त्येव, यतोऽस्मिन् संसारे ये केऽपि प्राणिनः संति ते सर्वेऽपि जीविताथिनो विद्यंते, परं मरणं कोऽपि न वांछति, तस्माद् आत्महितं वांछता पुरुषेण कस्यापि हिंसा न कर्त्तव्या, सर्वेष्वपि जीवेषु अनुकंपा रक्षणीयेति । " अथैवं सधैर्यमनुकंपातत्परं राजानं सत्त्ववंतं च माणवकं दृष्ट्वा तुष्टया प्रतोल्यधिष्ठायकदेवतया द्वयोरुपरि पुष्पवृष्टिः कृता, तत्क्षणमेव च सा प्रतोली निर्मिता । ततः प्रमुदितः सर्वोऽपि लोकः सत्यमनसा राज्ञो गुणान् वर्णयन् दयामयं श्रीजिनधर्मं चानुमोदयन् स्वस्वस्थानं संप्राप्तः, राजापि महतोत्सवेन तयैव प्रतोल्या पुरं प्रविश्य निजमंदिरं समाजगाम । इंद्रदत्तोऽपि सहर्षं स्वगृहं गतः, सर्वेऽपि जनाः सुखिनो जाताः, तदा बहुभिर्भव्यात्मभिर्दयामयः श्रीजिनधर्मः प्रतिपन्नः । इत्यनुकंपायां सुधर्मभूपदृष्टांतः । एवमन्यैरप्यात्मधर्मोपलक्षिका सर्वसुखश्रेणिप्रतिपादिका निखिलजगज्जंतुष्वनुकंपा रक्षणीया । इत्यनुकंपाख्यं चतुर्थं लक्षणं ॥ ४ ॥

तथा पंचममास्तिक्यलक्षणं, अस्तीति मतिरस्येत्यास्तिकस्तस्य भावः कर्म वा आस्तिक्यं तत्त्वांतरश्रवणेऽपि जिनोक्ततत्त्वविषये निराकांक्षाप्रतिपत्तिः जिनवचने प्रत्यय इत्यर्थः । आस्तिक्येन हि जीवधर्मत्वेन अप्रत्यक्षमपि सम्यक्त्वं लक्ष्यते, तद्वान् आस्तिक इत्युच्यते । यदागमः–मन्नइ तमेव सच्चं, निस्संकं जं जिणेहि पन्नत्तं । सुहपरिणामो सम्मं, कंखाइविसुत्तियारहिओ ॥ १ ॥ भावार्थस्तु पद्मशेखरकथागम्यः । सा चैवं—

अस्मिन् जंबूद्वीपे भरतक्षेत्रे पृथिवीपुरं नाम नगरं । तत्र पद्मशेखरो नाम राजा राज्यं शास्ति । एकदा तन्नगरासन्नचैत्ये बहुसाधुपरिवृताः श्रीजिनधर्मसूरयः समवसृताः । राजा बहुलोकसमन्वितस्तद्वंदनार्थं गतः गुरुभिः सकलभव्योपकाराय

धर्मोपदेशो दत्तस्तदा पद्मशेखरभूपः श्रीगुरूणां समीपात्सम्यग् जीवादितत्त्वपरमार्थमवबुध्य वज्रलेपवत्स्वहृदये धारयति स्म। अन्यैरपि च बहुभिर्भव्यैः सम्यक्त्वरत्नं संप्राप्तं। ततः सर्वोऽपि नृपादिलोकः सविनयं गुरुं नत्वा स्वस्थानं प्राप्तः। गुरवोऽपि ततो विहृत्यान्यत्र गताः। अथ पद्मशेखरभूपतिः श्रीजिनोक्ततत्त्वेषु परमास्तिक्यं बिभ्राणः सुखेन कालं गमयति। तथा यः कोऽपि मंदबुद्धिः शठो जीवादितत्त्वानि न मन्यते, तं पुरुषं वरसारथिर्वृषभमिव दमयित्वा सन्मार्गमानयति। पुनर्भूपः सभायां बहुभिः प्रकारैः सकलजनानां पुरो भक्तिरागेण गुरूणां गुणान् वर्णयति। तथाहि–" श्रूयतां भो लोकाः! अस्मिन् लोके ममत्वरहिता जीवदयाप्ररूपका दुष्टवादिगणस्य जेतारो गतकषाया निरुपमोपशमरसभरपूरितहृदया रागद्वेषविमुक्ता भवविरक्ता नाशितमदनविकाराः सिद्धिरमण्यां विहितपरिचाराः परित्यक्तसकलद्रव्याः सुगृहीतचारित्रवररत्नाः सर्वेष्वपि सत्त्वेषु करुणाकरणोद्यता दुर्द्धरप्रमादसिंधुरविघातसिंहोपमा एवंविधाः श्रीगुरवः संति। ये प्राणिनो हि मनुष्यत्वादिसकलधर्मसामग्रीमवाप्यैतादृग्गुणयुक्तान् गुरून् सेवंते ते धन्याः, ये पुनस्तेषां वचनामृतं पिबंति ते धन्यतरा इत्यादि।" तथेदृग्वचनरसेन स भूपतिर्बहून् भव्यलोकान् प्रक्षालितपापकर्ममलान् विधाय जिनधर्मे स्थापयति। परं तत्रैवैको विजयो नाम श्रेष्ठिसुतस्तस्मिन् भूपवचने प्रतीतिमकुर्वाणो भणति स्म–' भो नरनाथ! यत्त्वं मुनीन् वर्णयसि तत्सर्वमपि पलालतुल्यं विद्यते, यतस्ते पवनप्रचलध्वजपटवच्चंचलं चित्तं निजनिजविषयप्रसक्तानींद्रियाणि च कथं रोद्धुं शक्नुवंति? देवादीनामपि तद्रोधनेऽशक्तत्वादिति।" एतत् श्रुत्वा राज्ञा चिंतितं–' अयं दुष्टबुद्धिर्वाचाल इत्थमसमंजसं जल्पन् अन्यान्मुग्धजनान् सुमार्गात् पातयिष्यति, अतोऽसौ केनाप्युपायेन प्रतिबोध्यः।' इति विचिंत्य स्वस्य परमसेवकं यक्षनामानं पुरुषं प्रत्येकांते आदिष्टं–" भो यक्ष!

त्वया विजयेन सार्धं मैत्रीं कृत्वा तं प्रति स्वकीयपतिविश्वासमुत्पाद्य कथमपि तस्य रत्नकरंडके ममेदं महामूल्यं रत्नाभरणं प्रक्षेपणीयमिति।" तदा यक्षेणापि राज्ञो वचनं तथेति प्रतिपद्य विजयेन सार्द्धं महामैत्री विहिता, तं प्रति सुतरां विश्वासश्चोत्पादितः। तत एकदावसरं विज्ञाय तदाभरणं विजयस्य रत्नकरंडके क्षिप्त्वा राजानं प्रति सर्वोऽपि वृत्तांतो निवेदितः। तदनंतरं च राज्ञा पुरमध्ये इत्थं वारत्रयमुद्घोषणा कारिता–'श्रूयतां भो लोकाः! अद्यैकं महामूल्यं राज्ञो रत्नाभरणं न लभ्यते, तत्केनापि चेद्गृहीतं भवेत्तर्हि शीघ्रं समर्पणीयं, नो चेत्पश्चादपि ज्ञाते सति तद्ग्राहकोपरि महादंडः पतिष्यतीति।" एवमुद्घोषणां कारयित्वा सर्वपौरजनानां गृहशोधनार्थं स्वसेवकाः समादिष्टाः। ततो गृहशोधनं कुर्वद्भिस्तैर्विजयस्य गृहे रत्नकरंडकमध्यस्थितं राज्ञो रत्नाभरणं विलोक्य पृष्टं–'भोः किमेतदिति?।' स प्राह–'अहं न जानामि।' पुनस्तैरुक्तं–'भोः स्वयमेवैतद्भूषणं चोरयित्वा न जानामीति कथं भणसि?।' तदा विजयो भयात् किमपि वक्तुमशक्नुवन् मौनमाधाय स्थितः, ततस्तैरपि स बंधनैर्गाढं बध्ध्वा नृपसमीपमानीतः। नृपेण च–'भवद्भिरस्य वधो न कर्त्तव्य' इति प्रच्छन्नमादिश्य सभासमक्षं 'चौरोऽयमतो हंतव्य' इत्युक्त्वा वधकेभ्यः समर्पितः, तदा तत्स्वजनसंबंधिप्रभृतयः सर्वेऽपि जनाः पश्यंति, परं प्रत्यक्षमेव चौरं ज्ञात्वा कोऽपि तं न मोचयति। ततो जीवितव्यनिराशो विजयो दीनवचनैर्यक्षं प्रति भणति स–'भो मित्र! त्वं कथमपि राजानं प्रसन्नीकृत्य केनचित्प्रचंडेनापि दंडेन मह्यं जीवितव्यं दापय।' तदा यक्षोऽपि तद्वचोऽवधार्य राजानं विज्ञपयति स–'स्वामिन्! यथायोग्यं दंडं कृत्वा एनं मम मित्रं मुंच, सकलकल्याणाश्रयं जीवितव्यं च देहि।' ततश्च राजा कुपित इव क्रूरदृष्टिं कृत्वा प्राह–'यद्ययं मद्गृहाच्चैलेन पूरितं पात्रं गृहीत्वा बिंदुमात्रमपि भूमावपातयन् सकलेऽपि

नगरे भ्रांत्वा तत्पात्रं मत्पुरो मुंचति तर्ह्येनं जीवंतं रक्षामि, नान्यथेति।' अयं च नृपादेशो यक्षेण विजयाग्रे प्रोक्तः। विजयेनापि मरणभयाद्भीतेन स्वजीवितव्यस्य कृते सर्वमपि तत्प्रतिपन्नं। ततः पद्मशेखरभूपतिः सर्वानपि स्वपौरजनानाकार्यैवमादिदेश-'भो लोका! अद्य पुरमध्ये स्थाने स्थाने वीणावेणुमृदंगादिविविधवादित्राणि वादयत, तथाऽतिमनोहारिरूपधारिणं [सर्वेंद्रियसर्वस्वापहारिणं] पण्यांगनागणं प्रतिगृहं नर्त्तयतेति।' लोकैरपि भूपवाक्यात्तथैव कृतं। अथ विजयः शब्दरूपादिविषयाणामतिरसिकोऽपि मरणभयाज्जितेंद्रियविकारो निरुद्धमानमश्च सन् तत्तैलपूर्णं पात्रं सकलेऽपि पुरे भ्रामयित्वा पश्चान्नृपसभायामागत्य तत्पात्रं यत्नेन नृपपुरतो मुक्त्वा नृपं प्रति प्रणामं कृतवान्। ततो भूपः किंचिद्विहस्य विजयं प्रति बभाषे-'भो विजय! एतेषु गीतनृत्यादिषु अत्यंतं प्रवर्त्तमानेषु सत्सु तडिच्चपलानि मनइंद्रियाणि त्वया कथं रुद्धानि?।' स नत्वा प्राह-'स्वामिन्! मरणभयात्, यदुक्तं-'मरणसमं नत्थि भयं ति।' ततो राजा प्राह-'भो विजय! विषयतृषितेन त्वया यद्येकभवस्य मरणभयेनेत्थं प्रमादो हतस्तर्ह्यनंतभवभ्रमणभीरवो ज्ञाततत्त्वा मुनीश्वरा अनंतानर्थजनकं प्रमादं कथं सेवंते?।' एतन्नृपवचनं श्रुत्वाऽपगतमोहोदयः स विजयोऽपि विज्ञातजिनधर्मपरमार्थः सन् श्रावकधर्मं प्रतिपन्नवान्। ततो राजात्मसाधर्मिकत्वेन तस्य बहुमानं कृत्वा महताडंबरेण तं गृहं नीतवान्। तदानंदितः सर्वोऽपि लोकः प्रतिपदं राज्ञो गुणान् गीतवान्। एवं पद्मशेखरो राजा बहून् भव्यान् जिनधर्मे स्थापयित्वा प्रतिदिनं सद्धर्ममहिमानं विस्तार्य चिरं राज्यं प्रपाल्याराधितपरमास्तिक्यः सुरराजभवनं संप्राप्तः। इत्यास्तिक्ये पद्मशेखरदृष्टांतः। एतच्चरित्रं भव्यात्मभिः सम्यक् स्वहृदये परिभाव्यास्तिक्ये विशेषतो यत्नः कर्त्तव्यो यथा सुखेन निःश्रेयसाधिगमः संपद्यते। इत्यास्तिक्यनाम पंचमं लक्षणं॥ ५॥ एतानि

उपशमादीनि पंच सम्यक्त्वस्य लक्षणानि, एतैः परस्थं परोक्षमपि सम्यक्त्वं सम्यगुपलक्ष्यते इति भावः।

अथ षड्विधा यतना व्याख्यायते-परतीर्थिकादिवंदनेत्यादि, परतीर्थिकाः परिव्राजकभिक्षुभौतिकादयः परदर्शनिनः, आदिशब्दात् रुद्रविष्णुसुगतादयः परतीर्थिकदेवाः, तथार्हत्प्रतिमालक्षणाः स्वदेवा अपि दिगंबरादिभिः कुतीर्थिकैः स्वीकृताः, भौतिकादिभिर्वा परिगृहीता महाकालादयस्तेषां सर्वेषां वंदनं स्तवनं १ नमस्करणं च शिरसाभिवादनं २ एतद् द्वयमपि सम्यक्त्विभिर्न कर्त्तव्यं, तत्करणे हि तद्भक्तानां मिथ्यात्वादेः स्थिरीकरणं स्यात्। प्रवचनसारोद्धारवृत्तौ तु वंदनं शिरसाभिवादनं, नमस्करणं प्रणामपूर्वकं प्रशस्तध्वनिभिर्गुणोत्कीर्त्तनमित्युक्तं। अन्यत्र पुनरेवं दृश्यते-वंदणयं करजोडण, सिरनामण-पूयणं च इह नेयं। वायाइ नमुक्कारो, नमंसणं मणपसाओ य ॥१॥ त्ति। २। तथा परतीर्थिकैः पूर्वमसंभाषितेन सता सम्यग्दृष्टिना तैः सहालपनमीषद्भाषणं ३ संलपनं च पुनः पुनः संभाषणं ४ तद् द्वयमपि वर्जनीयं, तत्संभाषणे हि तैः सह परिचयः स्यात्, ततश्च तेषां विनष्टाचारश्रवणादिभिर्मिथ्यात्वोदयोऽपि केषांचिज्जायते इति। तैः प्रथमं संभाषितेन तु असंभ्रमं लोकापवादभयात् किंचित्स्वल्पं वाच्यमपीति ४। तथा तेभ्यः परतीर्थिकेभ्योऽशनपानखादिमस्वादिमवस्त्रपात्रादिकं सुदृष्टिना न दातव्यं, तद्दाने हि आत्मनोऽन्येषां च पश्यतां जनानां तेषु बहुमानसद्भावान्मिथ्यात्वप्राप्तिः स्यात्। इह हि परतीर्थिकानामशनादिदानमनुकंपां विहाय प्रतिषिद्धं, अनुकंपागोचरापन्नं तु तेभ्योऽपि दानं दातव्यं। यत उक्तं-सव्वेहिं पि जिणेहिं, दुज्जयजियरागदोसमोहेहिं। सत्ताणुकंपणट्ठा, दाणं न कहं पि पडिसिद्धं ॥ १ ॥ ति। ५। तथा तेषामेव परतीर्थिकदेवानां तत्परिगृहीतजिनबिंबानां च पूजादिनिमित्तं गंधपुष्पादिकं सम्यग्दर्शिभिर्न प्रेषणीयं, आदिशब्दाद्विनयवैयावृत्त्ययात्रास्नात्रादिकं च

तेषां न कर्तव्यमिति । एतत्करणे हि लोकानां मिथ्यात्वं स्थिरीकृतं स्यात् ६ । एताभिः परतीर्थिकादिवंदनवर्जनप्रभृतिभिः षड्भिर्यतनाभिर्यतमानो भव्यात्मा भोजनृपपुरोहितधनपाल इव सम्यक्त्वं नातिक्रामति । इह धनपालवृत्तांतस्त्वेवं—

अवंतीनगर्यां सर्वधरो नाम राज्ञः पुरोहितो वसति स्म । तस्य धनपालशोभनाख्यौ द्वौ पुत्रौ । तौ च पांडित्यादिगुणयुक्तत्वेन राज्ञो बहुमाननीयावभूतां । अथैकदा तन्नगर्यां सिद्धसेनाचार्यसंतानीयाः श्रीसुस्थिताचार्याः पुस्तकांतरे श्रीउद्योतनसूरिशिष्याः श्रीवर्द्धमानसूरयो बहुभव्यजनप्रबोधार्थं समागताः, तदा सर्वधरस्यापि तत्र गमनागमनतो गुरुभिः सह प्रीतिर्जाता । एकदा तेन गुरवः पृष्टाः–' स्वामिन् ! गृहांगणभूमौ कोटिद्रव्यं निहितमासीत् तद् बहुधा गवेषितमपि न प्राप्तं, अथ कथं तत्प्राप्तिः स्यात् ? ' । तदा गुरुभिः किंचिद्विहस्य प्रोक्तं–' यदि लभ्यते तदा किमु ? । ' ततः सर्वधरेणोक्तं–' स्वामिन्नर्द्धं विभज्य दीयते । ' तदा गुरुभिस्तद्गृहं गत्वा केनचित्प्रयोगेण तत्कालं सर्वमपि द्रव्यं प्रादुष्कृत्य दर्शितं, ततः सर्वधरेण तस्य पुंजद्वयं विधाय गुरवो विज्ञप्ताः–' स्वामिन्नर्द्धं द्रव्यं गृह्यतां । ' गुरुभिरुक्तं–' द्रव्येणास्माकं किमपि प्रयोजनं नास्ति, ईदृशं तु सदपि द्रव्यमस्माभिः परित्यक्तं । ' विप्रेणोक्तं–' तर्हि कथमर्धं याचितं ? । ' गुरुभिरूचे–' गृहसारस्यार्द्धं दीयतां । ' तेनोक्तं–' मद्गृहेऽपरं किं सारमस्ति ? । ' गुरुभिरूचे–' भवतः सारभूतं पुत्रद्वयं विद्यते, तन्मध्यादेकः पुत्रो दीयतां ? । ' एतद् श्रुत्वा विप्रो विषादपरः सन् मौनमाधाय स्थितः । गुरवस्त्वन्यत्र विजह्रुः । अथ स विप्रो गुरूपकारं स्मरन्नपि तान् प्रत्युपकर्तुमशक्नुवन् शल्यपीडित इव कालं गमयन् कियता कालेन रोगपीडितः संजातः । तदा पुत्राभ्यामंत्यावस्थोचितां धर्मक्रियां विधाय पितरं मानसदुःखेन दुःखितं विज्ञाय पृष्टं–' भोः तात ! भवच्चित्ते यद्वर्त्तते तन्निवेदय । ' तदा पित्रा सर्वमपि

वृत्तांतं निवेद्य प्रोक्तं–'भोः पुत्रौ! भवतोर्द्वयोर्मध्ये एकश्चारित्रं गृहीत्वा मामनृणं कुरुतां ?।' एतद्वचः श्रुत्वा धनपालस्तु भीतः सन् अधोमुखीभूय स्थितः, तदा शोभनेनोचे–'भोः ताताहं दीक्षां ग्रहीष्यामि, त्वमनृणी भव चेतसि च परमानंदं धारय।' एतत्सुतवचो निशम्य सर्वधरविप्रो देवलोकं गतः। ततो मृतक्रियां कृत्वा शोभनेन श्रीवर्धमानसूरिशिष्यश्रीजिनेश्वरसूरिगुरूणां पार्श्वे दीक्षा गृहीता। अथ धनपालो रुष्टः सन् तद्दिनादेव जैनधर्मद्वेषी बभूव। अवंत्यां साधूनामागमनमपि निषिद्धवान्। ततस्तत्रत्यश्रीसंघेन गुरूणां पार्श्वे लेखं संप्रेष्येदं निवेदितं–'स्वामिन्! यदि शोभनाय दीक्षां नादास्यस्तर्हि गच्छः शून्यस्तु नाभविष्यत् गच्छस्य रत्नाकरोपमत्वात्। शोभनदीक्षणे हि तद्भ्राता धनपालपुरोहितो मिथ्यामतितया रुष्टः सन् भूयसीं धर्महानिं करोति।' अथैतद्वृत्तांतं विज्ञायाचार्याः शोभनं गीतार्थं ज्ञात्वा शुभे दिने वाचनाचार्यं विधाय मुनियुगलेन सहोपद्रवशांत्यर्थं उज्जयिनीं प्रति प्रेषयामासुः। शोभनाचार्योऽपि गुर्वाज्ञया ततो विहृत्य क्रमेण उज्जयिन्यां समेतः, तत्र पुरप्रतोलीं पिहितां दृष्ट्वा रात्रौ बहिरेव स्थितः, प्रातः प्रतिक्रमणं विधाय यावत्पुरमध्ये प्रविष्टस्तावद्धनपालः संमुखं मिलितः, तेन च जैनधर्मद्वेषिणा शोभनमनुपलक्ष्येत्थमुपहासवचः प्रोक्तं–'गर्दभदंत! भदंत! नमस्ते।' एवं श्रुत्वा शोभनेन भ्रातरमुपलक्ष्यापि तदुक्तियोग्यमेव प्रतिवचः प्रोक्तं–'कपिवृषणास्य! वयस्य! सुखं ते?' इति श्रुत्वा पुनर्धनपालेनोक्तं–'कुत्र भवेद्भवदीयनिवासः?' शोभनेनोक्तं–'यत्र भवेद्भवदीयनिवासः।' अथ धनपालो भ्रातुर्वच उपलक्ष्य लज्जितः सन् कार्यार्थं बहिर्जगाम। शोभनस्तु पुरमध्ये चैत्येषु जिनवंदनं विधाय यावच्चैत्येभ्यो बहिरागतस्तावत्संघोऽपि संमील्य गुरोः पदकमलं प्रणम्याग्रे उपविष्टः। तदा शोभनोऽपि शोभनवाण्या धर्मदेशनां दत्त्वा सर्वसंघसंयुक्तो भ्रातुर्गृहं गतः, भ्रात्रा च सन्मुखमा-

गत्य परमविनयेन प्रणम्य रम्या चित्रशालिका निवासाय तस्मै दत्ता। भातृकलत्रादिभिश्च भोजनसामग्री क्रियमाणा शोभनेन वारिता, आधाकर्मिकाहारः साधूनामग्राह्य इति गुर्वाज्ञास्मरणात्। ततः शोभनाज्ञया साधुभिराहारानयनार्थं श्रद्धालुगृहेषु गम्यमाने धनपालोऽपि तत्सार्थं चचाल। तस्मिन्नवसरे कस्मिंश्चित् श्रद्धालुगृहे एकया कयाचिन्निःस्वश्राविकया साधूनां पुरो दधिभांडं मुक्तं, तदा साधुभिः सा पृष्टा–'इदं दधि शुद्धमस्ति ?।' तयोक्तं–'दिनत्रयस्यास्ति।' मुनिभिरुक्तं–'तर्हि अयोग्यमिदं, जिनागमे निषिद्धत्वात्।' एतत् श्रुत्वा धनपालेन ते पृष्टाः–'इदं दधि अयोग्यं कथं ?।' तैरुक्तं–'निजभ्राता पृच्छनीयः।' तदा धनपालो दधिभांडं समादाय शोभनाचार्यसमीपं गत्वेति पप्रच्छ–'इदं दधि कथमशुद्धं ? लोकैस्तु दधि अमृततुल्यं गीयते, यद्यस्मिन् दध्नि जीवान् दर्शयसि तर्हि अहमपि श्रावक एव भवामि, अन्यथा त्वं मुग्धजनानां वंचक एव।' एतद्भ्रातृवचः श्रुत्वा शोभन उवाच–'अहं तत्र जीवान् दर्शयामि, परं त्वया स्ववचः पालनीयं।' ततो धनपालेन तदंगीकृते शोभनाचार्योऽलक्तकं समानाय्य दधिभांडमुखे मुद्रां दापयित्वा पार्श्वे चैकं छिद्रं कारयित्वा क्षणं यावत्प्रचण्डमातपे मोचितवान्। ततो दधिभांडस्य छिद्रेण निःसृत्यालक्तके स्थिताः शुभ्रा जंतवः, तान् स्वयं दृष्ट्वा धनपालाय दर्शिताः। धनपालोऽपि तांश्चलतो जंतून् दृष्ट्वा मनसि विस्मितः सन् धन्यो जगति जैनधर्म इति पुनः पुनरब्रवीत्। तस्मिन्नेवावसरेऽस्य चेतसि तत्त्वरुचिरूपं सम्यक्त्वं प्रादुर्भूतं। ततोऽसौ गुरूणां पार्श्वे सम्यक्त्वमूलानि द्वादश व्रतानि प्रपन्नवान्, तदासौ देवमर्हंतं गुरुं सुसाधुं धर्मं च जिनेंद्रभाषितमेव प्रमाणयन् हृदि केवलं पंचपरमेष्ठिध्यानं कुर्वन् परमश्रावको बभूव। अन्यं धर्मं चेतस्यपि न दधार। अथ शोभनाचार्य इत्थं भ्रातरं प्रतिबोध्य गुरुसमीपं गतः। धनपालस्तु

षड्भिर्यतनाभिर्यतमानः सुखेन सम्यक्त्वादिधर्ममाराधयन् कालं गमयति स्म। तस्मिन्नवसरे केनचिद् दुष्टविप्रेण भोजनृपायोक्तं–'हे महाराज! धनपालो भवत्पुरोहितो जिनं विनान्यं कमपि देवं न नमति।' नृपेणोचे–'एवं तर्हि तत्परीक्षां करिष्ये।' अथैकदा भोजराजो महाकालदेवगृहे गत्वा सपरिकरो रुद्रं नमश्चकार, परं धनपालो न रुद्रं नमति स्म। किं तु स्वकरमुद्रिकायां स्थितं जिनबिंबमेव नमस्कृतवान्। ततो भोजस्तत्स्वरूपं विज्ञाय स्वस्थानमागत्य धूपपुष्पादिपूजासामग्रीमानाय्य धनपालं प्रतीत्यादिदेश–'भो धनपाल! देवपूजां कृत्वा शीघ्रमागच्छ।' ततो धनपालो नृपाज्ञया सद्य उत्थाय पूजासामग्रीं च गृहीत्वा प्रथमं भवान्या मंदिरं प्रविष्टः। तत्रशङ्कितः सन् बहिर्निःसृत्य रुद्रमंदिरं गतस्तत्रापीतस्ततो विलोक्य सद्यो निःसृत्य विष्णुमंदिरं प्रविष्टः, तत्र च स्वोत्तरीयवस्त्रं परिच्छद्‌रूपेण निधाय बहिर्निर्गत्य च श्रीऋषभदेवजिनालये गत्वा प्रशांतचित्तः सन् पूजां विधाय राजद्वारं समेतः। राज्ञा तत्पृष्ठत एव हेरका मुक्ता आसन्, तन्मुखात्प्रागेव सर्वोऽपि वृत्तांतस्तेन ज्ञातः। ततो धनपालः पृष्टः–'त्वया देवपूजा कृता?।' तेनोक्तं–'महाराज! सम्यक्तया कृता।' भूपेनोक्तं–'भवान्याः पूजामकृत्वैव चकितः सन् कथं तद्‌गृहाद्बहिर्निर्गतः?।' तेनोचे–'रुधिरलिप्तायुधहस्तां ललाटतटे कृतभ्रूकुटिं महिषमर्दनक्रियां कुर्वतीं भवानीं दृष्ट्वा भीतः सन्नहं सद्यो बहिर्निर्गतः, सांप्रतं युद्धसमयोऽस्ति न तु पूजासमय इति विभाव्य तत्पूजापि न कृता।' पुनर्भूपेनोक्तं–'रुद्रपूजा कथं न कृता?।' तेनोचे–'अकण्ठस्य कण्ठे कथं पुष्पमाला?, विना नासिकायाः कथं गंधधूपः?। अकर्णस्य कर्णे कथं गीतनादा?, अपादस्य पादे कथं मे प्रणामः? ॥ १ ॥' पुनर्भूपतिरुवाच–'विष्णोः पूजामकृत्वा तत्संमुखं वस्त्रं निधाय कथं त्वं झटिति बहिर्निर्गतः?।' धनपाल उवाच–'स्वास्त्रियमुत्संगे निधाय स स्थितोऽभूत्,

तदा मया चिंतितं, सांप्रतमेते अंतःपुरे स्थिताः संति, अतो नायं पूजासमयः, यः कश्चित्सामान्योऽपि पुमान् यदा स्वस्त्रियाः समीपे तिष्ठति तदा सत्पुरुषस्तत्समीपे न प्रयाति, एते तु त्रिखंडस्वामिनोऽतोऽधुना एषां पार्श्वे मद्गमनमयुक्तं, इति विचार्य दूरत एव पश्चाद्वलित्वा चतुःपथे गच्छतामपि जनानां दृष्टिपातवारणाय तत्संमुखं मया वस्त्रं निहितं।' पुनर्नृपेणोक्तं–'मदाज्ञां विनैव त्वया ऋषभदेवपूजा कथं कृता ?।' तेनोचे–'राजन् ! भवता देवपूजाकरणाज्ञा दत्ताभूत्, देवत्वं तु मया ऋषभदेवस्वामिन्येव दृष्टमतस्तस्यैव पूजा कृता, तस्य देवत्वस्वरूपवर्णनं चेदं–

'प्रशमरसनिमग्नं दृष्टियुग्मं प्रसन्नं, वदनकमलमंकः कामिनीसंगशून्यः। करयुगमपि यत्ते शस्त्रसंबंधवंध्यं, तदसि जगति देवो वीतरागस्त्वमेव ॥ १ ॥' पुनर्धनपालेनोक्तं–'हे राजन् ! यो रागद्वेषयुक्तः सोऽदेवस्तत्र देवत्वाभावात् संसारतारकत्वमपि नास्ति, देवस्तु संसारतारक एव भवेत्, तादृशः श्रीजिनराज एवैकोऽस्ति लोके, अतो मुक्त्यर्थं सुधीभिः स एव सेव्यः।' इत्थं विविधयुक्तियुक्तं धनपालवचो निशम्य भोजभूपतिः कुदेवे संदिग्धचित्तः सन् तत्प्रशंसां चकार।

अन्यदा राज्ञा मिथ्यात्विविप्रगणप्रेरितेन यज्ञः कारयितुमारब्धः, तत्र यज्ञकर्तृभिर्होमार्थं वह्नौ प्रक्षिप्यमाणमजं पूत्कुर्वंतं दृष्ट्वा राज्ञा धनपालः पृष्टः–'अहो ! अयमजः किं वक्ति ?।' तेनोक्तं–'राजन् ! श्रूयतां, यदयं वक्ति–नाहं स्वर्गफलोपभोगरसिको नाभ्यर्थितस्त्वं मया, संतुष्टस्तृणभक्षणेन सततं साधो न युक्तं तव। स्वर्गं यांति यदि त्वया विनिहता यज्ञे ध्रुवं प्राणिनो, यज्ञं किं न करोषि मातृपितृभिः पुत्रैस्तथा बांधवैः ? ॥१॥' इति श्रुत्वा राजांतःकुपितः सन् तूष्णींभूय स्थितः। अथैकदा राज्ञा एकं महत्सरोवरं कारितमासीत्, तद्वर्षाकाले निर्मलजलैर्भृतं श्रुत्वा पण्डितपंचशत्यादिपरिकरेण सह तद्दर्शनार्थं

जग्मे । तत्र पण्डितैः स्वस्वबुद्ध्यनुसारेण नवीनकाव्यैः सरोवर्णनं कृतं, धनपालस्तु तूष्णींभूय स्थितः । ततो राज्ञा धनपालायोक्तं–'त्वमपि सरोवर्णनं कुरु ।' तदा स उवाच काव्यं–'एषा तडागमिषतो बत दानशाला, मत्स्यादयो रसवती प्रगुणा सदैव । पात्राणि यत्र बकसारसचक्रवाकाः, पुण्यं कियद्भवति तत्र वयं न विद्मः ॥ १ ॥'

एतद्धनपालवचः श्रुत्वा राजातीव चुकोप, चित्ते चैवं चिंतयति स्म–'अहोऽयं महादुष्टो मम कीर्त्तिकारणमस्य दृष्टयोरपि न सुखायते । किं चेदग्वचनैरुपलक्षितोऽयं मम गुरुरूपो द्वेषी विद्यते । अन्यथा यदपरैर्विप्रैर्वर्णितं तस्यायं स्वकीयो निंदां कथं कुर्यात् ? अथाहमेवास्य कंचित्प्रतीकारं करिष्ये, तत्रान्यैः प्रतीकारैरलं, केवलमस्य चक्षुषी एव दूरीकुर्वे ।' एवं मनसि विचिंत्य (निश्चित्य) राजा तूष्णींभूतः सन् तत उत्थाय यावद्वाराचतुष्पथे समायातस्तावदेका वृद्धा कन्यकावलंबितकरा संमुखमागता, तां दृष्ट्वा राजोवाच–'भो विद्वज्जनाः ! श्रूयतां–'██ कंपावै सिर धुणै, बुड्ढी कहा कहेइ ?'। इति श्रुत्वा कश्चित्पण्डित उवाच–'हकारंतां यमभडां, नन्नंकार करेइ ॥ १ ॥' तदावसरज्ञो धनपालो विद्वान् जगाद–'भो राजन् ! इयं वृद्धा यत्किंचिद्वक्ति तत् श्रूयतां ! यथा–किं नंदिः किं मुरारिः किमु रतिरमणः किं नलः किं कुबेरः, किं वा विद्याधरोऽसौ किमथ सुरपतिः किं विधुः किं विधाता ? । नायं नायं न चायं न खलु न हि न वा नापि नासौ न चैष, क्रीडां कर्तुं प्रवृत्तो यदिह महितले भूपतिर्भोजदेवः ॥ १ ॥ अत्र पूर्वार्द्धे वृद्धां प्रति कन्यायाः प्रश्नः, उत्तरार्द्धे चोत्तरं ।' ततो भूप एतत्काव्यं श्रुत्वा हृष्टचित्तः सन् इदमब्रवीत्–'भो धनपाल ! अहं तुष्टो मार्गयस्व यथोचितं वांछितं वरं ।' तदा धनपालः सरोवर्णनसमयोद्भवं राज्ञो दुरभिप्रायं स्वबुद्धिबलेन ज्ञात्वेत्थं प्रोवाच–'राजन् ! वांछितं यदि ददासि तर्हि प्रसद्य नेत्रद्वयं मह्यं देहि ।'

इदं वचः श्रुत्वा राजातिविस्मितः सन् चिंतयति स्म–'या वार्त्ता कस्यापि पुरो मया न प्रकाशिता सानेन कथं ज्ञाता ? किमस्य हृदि ज्ञानं वर्त्तते ? ।' इत्यादि विमृश्य बहुधा दानसन्मानादिभिर्नृपेण धनपालः पूजितः, पृष्टश्च–'कथं ज्ञातस्त्वया मदभिप्रायः ?' इति । तदा धनपालो जगाद–'श्रीजिनधर्मसेवनोद्भूतबुद्धिबलादिति ।' एवं श्रुत्वा राजा जिनधर्मप्रशंसां चकार । धनपालोऽपि विख्यातं जैनधर्मं पालयामास । ततो धनपालेन–जत्थ पुरे जिणभवणं, समयविऊ साहु सावया जत्थ । तत्थ सया वसियव्वं, पवरजलं इंधणं जत्थ ॥ १ ॥ इत्यादि श्राद्धधर्मविधिप्रकरणऋषभपंचाशिकाद्यो ग्रंथा विहिताः । महती जिनशासनोन्नतिश्च कृता । एवं यावज्जीवं षड्भिर्यतनाभिः सम्यक्त्वादिधर्ममाराध्य प्रांते संयमं प्रपाल्य धनपालो देवत्वं प्राप्तः । इति यतनासु धनपालवृत्तांतः । एतेन व्याख्याता षड्विधापि यतना ।

अथ षडाकारा व्याख्यायंते–राजाभियोग इत्यादि, तत्राभियोजनमनिच्छतोऽपि व्यापारणमभियोगः, राज्ञो नृपतेरभियोगो राजाभियोगः । एतावता सम्यक्त्ववतो यत् कार्यं प्रतिषिद्धं तन्नृपाग्रहकारणवशादिच्छां विना द्रव्यतः समाचरन्नपि भव्यजनः कोशावेश्यादिरिव सम्यक्त्वादिधर्मं न नाशयति । कोशावृत्तांतस्त्वयं–"पाटलीपुरनगरे पुरा श्रीस्थूलभद्रमुनिपार्श्वे गृहीतसम्यक्त्वमूलद्वादशव्रता कोशा नाम वेश्या परिवसति स्म । सा चैकदा रथिकोपरि तुष्टेन भूपेन तस्मै दत्ता । ततः सा कोशा तमंतःकरणेऽनिच्छन्त्यपि नृपादेशवशादंगीचकार । परं तस्य रथिनोऽग्रे सर्वदा स्थूलभद्रमुनिं वर्णयामास । तथाहि–'संसारेऽस्मिन् समाकीर्णे, बहुभिः शिष्टजंतुभिः । स्थूलभद्रसमः कोऽपि, नान्यः पुरुषसत्तमः ॥१॥ इति ।' एतत् श्रुत्वा सारथिनाऽस्या रंजनार्थं गृहोद्याने गत्वा तया सह गवाक्षे उपविश्य स्वविज्ञानं दर्शयामास । तदित्थं–पूर्वं स्वबाणेनाम्रलुंबिकां

विध्याध, ततोऽन्यबाणेन तं बाणं, तमपीतरबाणेनेत्येवं स्वहस्तपर्यंतं बाणश्रेणीं कृत्वा आम्रलुंबिकां करेणाकृष्य तस्यै दत्त्वा तत्संमुखं ददर्श । ततः सा कोशाप्यधुना मे विज्ञानं पश्येत्युक्त्वा स्थालमध्ये एकं सर्षपराशिं कृत्वा तत्र पुष्पाच्छादितां सूचीं विन्यस्य तदुपरि देवीव चारुगत्या नृत्यं चकार, परं न सूचीमुखेन पादयोर्विद्धा, न च सर्षपराशिरपि मनाग् विकीर्णः । तत इत्थं तस्याश्चातुर्यं विलोक्य स प्राह–'हे सुभगेऽहमधुना तव विज्ञानेन तुष्टोऽस्मि, वद त्वं, किं तुभ्यं ददामि ? ।' सा जगाद–'भो मया किं दुष्करं विहितं ? यत्त्वं रंजितोऽसि ? अभ्यासेन हि अस्मादधिकमपि कृत्यं किमपि दुष्करं नास्ति । अन्यच्च–[न दुक्करं अंबयलुंबितोडणं, न दुक्करं सरिसवनच्चियाइं । तं दुक्करं तं च महाणुभावं, जं सो मुणी पमयवणंमि वुच्छो ॥ १ ॥] सुकरं नर्त्तनं मन्ये, सुकरं लुंबिकर्त्तनं । स्थूलभद्रो हि यच्चक्रे–ऽशिक्षितं तत्तु दुष्करं ॥ २ ॥' इति । पुनरपि सा प्रोचे–'शकडालमंत्रिपुत्रः श्रीस्थूलभद्रो द्वादश वर्षाणि मया सार्द्धं पुरा भोगान् भुक्त्वा पश्चाद्गृहीतचारित्रोऽत्रैव चित्रशालायां शुद्धशीलभाक् स्थितः, तदानीं यदेकैकमपि विकारकारणमन्यस्य लोहमयशरीरस्यापि पुंसो व्रतनाशकारकं स्यात्, तानि सर्वाण्यपि षड्रसभोजन १ चित्रशालानिवास २ यौवनवयो ३ जलदागमकाल ४ प्रभृतिविकारकारणानि तं महामुनिं गिरिं सिंहस्फाला इव क्षोभयितुमक्षमाणि बभूवुः, तथा तस्मिन् मुनीश्वरे मदीया हावभावादिविकारा अपि पानीये प्रहारा इव विरागिणि हारा इव निरर्थकतां भेजुः, [यदुक्तं–वेश्या रागवती सदा तदनुगा षड्भी रसैर्भोजनं, शुभ्रं धाम मनोहरं नववपुर्नव्यो वयःसंगमः ॥ कालोऽयं जलदागमस्तदपि यः कामं जिगायादरात्, तं वंदे युवतीप्रबोधकुशलं श्रीस्थूलभद्रं मुनिं ॥ १ ॥] तथा पुनर्निजव्रतमक्षतं रक्षितुमिच्छन्मानवो यत्र स्त्रीसमीपे एकमपि क्षणं स्थातुं न समर्थस्तत्र श्रीस्थूलभद्रो भग-

यान् अक्षतव्रतः सन् सुखेन चतुर्मासीं तस्थौ । अतः किं बहु वर्ण्यते ? श्रीस्थूलभद्रसमोऽतिदुष्करकार्यकर्त्ता क्षितौ कोऽपि नरो नास्तीति । " अथैवं स्थूलभद्रमुनेर्वर्णनं निशम्य प्रतिबुद्धो रथिकः कोशां पुनः पुनः नत्वा स्तुत्वा च 'त्वयाहं संसाराब्धौ निमज्जन् रक्षितः' इत्यादि वदन् सद्यो गुरुपार्श्वे गत्वा व्रतं जग्राह । कोशापि निजसम्यक्त्वरत्नयुक्ता सती चिरं श्राद्धधर्मं प्रपाल्य सद्गतिभाग्बभूव । इति राजाभियोगे कोशादृष्टांतः १ ॥ "

तथा गणः स्वजनादिसमुदायस्तस्याभियोगो गणाभियोगः, एतावता सम्यक्त्विनो यत् कर्त्तुमयोग्यं तत्स्वगणस्याग्रहवशाद् द्रव्यतः कुर्वन्नपि सुदृष्टिर्विष्णुकुमारादिरिव सम्यक्त्वादिधर्मं नातिक्रामति । यथा विष्णुकुमारेण गच्छस्यादेशाद्वैक्रियरूपरचनादिप्रकारेणात्यंतजिनमतद्वेषी नमुचिर्नाम पुरोहितः स्वकीयचरणप्रहारेण हत्वा सप्तमनरकातिथिर्विहितः स्वयं च मुनिना तत्पापमालोच्य स्वकीयं सम्यक्त्वादिधर्मं सम्यगाराध्य च परमसुखिना संजातमिति । एवमग्रेऽपि भावनापूर्वकमुदाहरणान्युपयुज्य वाच्यानि २ । तथा बलं नाम बलवतः पुरुषस्य हठप्रयोगस्तेनाभियोगो बलाभियोगः ३ । तथा सुरस्य कुलदेवतादेरभियोगः सुराभियोगः ४ । तथा कांतारमरण्यं तत्र वृत्तिर्वर्त्तनं निर्वाहः कांतारवृत्तिः, यद्वा कांतारमपि पीडाहेतुत्वादिह पीडात्वेन विवक्षितं, ततः कांतारेण पीडया वृत्तिः, प्राणवर्त्तनरूपा कांतारवृत्तिः कष्टेन निर्वाह इति यावत् ५ । तथा गुरवो मातापितृप्रभृतयः, यदुक्तं-माता पिता कलाचार्य, एतेषां ज्ञातयस्तथा । वृद्धा धर्मोपदेष्टारो, गुरुवर्गः सतां मतः ॥ १ ॥ तेषां निग्रहो निर्बंधो गुरुनिग्रहः ६ । एते षट् श्रीजिनशासने आकारा अपवादाश्छिडिका इति यावत् । इदमत्र तात्पर्य-प्रतिपन्नसम्यक्त्वस्य जंतोर्यत्परतीर्थिकवंदनादिकं प्रतिषिद्धं तद्राजाभियोगादिभिरेतैः षड्भिः कारणैर्भक्तिवियुक्तो

द्रव्यतः समाचरन्नपि सम्यग्दृष्टिः सम्यक्त्वं नातिचरतीति। किं चैते हि अल्पसत्त्वान् जंतूनाश्रित्यापवादाः प्रोक्ताः संति, न तु महासत्त्वान्। यदुक्तं—

न चलंति महासत्ता, सुभिज्जमाणाओ सुद्धधम्माओ।
इयरेसिं चलणभावे, पइन्नभंगो न एएहिं ॥ २१ ॥

व्याख्या—महासत्त्वाः पुमांसो राजादिभिः शुद्धधर्मात्सुभिद्यमानाश्चलत्वं प्राप्यमाणा अपि संतो न चलंति, परमितरेषामल्पसत्त्वानां कदाचिच्चलनभावे सति एतैराकारैः प्रतिज्ञाभंगो न भवति। एतदर्थमेते आकारा आगमे संगृहीता इति गाथाक्षरार्थः।

अथ षड् भावना व्याख्यायंते-इदमित्यादि, इदं सम्यक्त्वं पंचाणुव्रतत्रिगुणव्रतचतुःशिक्षाव्रतरूपस्य पंचमहाव्रतरूपस्य च चारित्रधर्मस्य मूलमिव मूलं कारणमित्यर्थः, कीर्त्तितं कथितं तीर्थकरादिभिरिति सर्वत्र संबंधः, यथा हि मूलरहितो वृक्षः प्रचंडवातप्रकंपितः सन् क्षणादेव निपतति, एवं धर्मतरुरपि सुदृढसम्यक्त्वमूलविहीनः कुतीर्थिकमतमारुतांदोलितः सन् स्थिरत्वं नासादयेदिति तस्य मूलसादृश्यमुक्तं १। तथेदं सम्यक्त्वं धर्मस्य द्वारमिव द्वारं प्रवेशमुखमित्यर्थः, यथा हि अकृतद्वारं नगरं समंतात्प्राकारवलयवेष्टितमपि अनगरमेव भवति जनप्रवेशनिर्गमाभावात्, एवं धर्ममहानगरमपि सम्यक्त्वद्वारशून्यं सत् अशक्यप्रवेशं स्यादिति तस्य द्वारतुल्यत्वमुक्तं २। तथा प्रतिष्ठते प्रासादोऽस्मिन्निति प्रतिष्ठानं, सम्यक्त्वं किल धर्मस्य

प्रतिष्ठानमिव प्रतिष्ठानं, यथा हि पयःपर्यंतपृथ्वीतलगतगर्त्तापूरकपीठरहितः प्रासादः सुदृढो न भवति, तथा धर्मदेवगृहमपि सम्यक्त्वरूपप्रतिष्ठानवर्जितं निश्चलं न भवेदिति तस्य प्रतिष्ठानसाम्यमुदितं ३। तथा सम्यक्त्वं धर्मस्याधार इवाधार आश्रय इति यावत्। यथा भूतलमंतरेण निरालंबमिदं जगन्न तिष्ठति, एवं धर्मजगदपि सम्यक्त्वलक्षणाधारं विना नावतिष्ठते इति तस्याधारसादृश्यं गदितं ४। तथा सम्यक्त्वं धर्मस्य भाजनमिव भाजनं पात्रमित्यर्थः। यथा हि कुंडादिभाजनविशेषवर्जितं क्षीरादिवस्तुवृंदं विनश्यति, एवं धर्मवस्तुनिवहोऽपि सम्यक्त्वभाजनमंतरेण विनाशमासादयेदिति तस्य भाजनसाम्यं प्रोक्तं ५। तथा सम्यक्त्वं धर्मस्य निधिरिव निधिः, यथा हि प्रधाननिधिं विना महार्हमणिमौक्तिककनकादि द्रव्यं न प्राप्यते, तथा सम्यक्त्वमहानिधानस्याप्राप्तौ सत्यां निरुपमसुखश्रेणिसंपादकं चारित्रधर्मवित्तमपि न लभ्यते। इति तस्य निधिसादृश्यमुदितं ६। इत्येताभिः षड्भिर्भावनाभिर्भाव्यमानमिदं सम्यक्त्वं सद्यः प्रवरतरमोक्षसुखसाधकं भवतीति।

अथ षट् स्थानानि व्याख्यायंते—अस्ति जीव इत्यादि, अस्ति विद्यते जीवः प्रतिप्राणि स्वसंवेदनप्रमाणसिद्धचैतन्यस्यान्यथानुपपत्तेः, तथाहि—चैतन्यमिदं न भूतानां धर्मः, तद्धर्मत्वे सति तस्य चैतन्यस्य सर्वत्र सर्वदा चोपलब्धिप्रसंगात् पृथिव्याः काठिन्यवत्। न च चैतन्यं सर्वभूतेषु सर्वदा चोपलभ्यते, लोष्ठादौ मृतावस्थायां चानुपलंभात्। नापि चैतन्यमिदं भूतानां कार्यं, अत्यंतविलक्षणत्वादेव कार्यकारणभावस्याऽनुपपत्तेः। तथाहि—प्रत्यक्षत एव काठिन्यादिस्वभावानि भूतानि प्रतीयंते, चैतन्यं च तद्विलक्षणं, ततः कथमनयोः कार्यकारणभावः? इति, तस्मान्न भूतधर्मो न च भूतकार्यं चैतन्यं। अस्ति चेदं प्रतिप्राणि स्वसंवेदनप्रमाणसिद्धं, अतो यस्येदं चैतन्यं स जीव इति, अनेन च नास्तिकमतमपहस्तितं १। तथा स च जीवो नित्य

उत्पत्तिविनाशरहितस्तदुत्पादककारणाभावात्, ततः सर्वथा विनाशाऽयोगाच्च, अनित्यत्वे हि जीवस्य बंधमोक्षादीनामेकाधिकरणत्वं न स्यात्। तथाहि-यद्यात्मा नित्यो नाभ्युपगम्यते, किं तु पूर्वापरक्षणत्रुटितानुसंधानलक्षण एव, तथा सति अन्यस्य बंधोऽन्यस्य मोक्षः, अन्यस्य क्षुधा अन्यस्य तृप्तिः, अन्योऽनुभविता अन्यः स्मर्ता, अन्यश्चिकित्सादुःखमनुभवति अन्यो व्याधिरहितो भवति, अन्यस्तपःक्लेशं सहते अपरः स्वर्गसुखमनुभवति, अपरः शास्त्राभ्यासं करोति अन्यः शास्त्रार्थं च प्राप्नोति। न चैतद्युक्तमतिप्रसंगात्। एतेन बौद्धसिद्धांतध्वांतमपध्वस्तं २। तथा स पुनर्जीवो मिथ्यात्वाविरतिकषायादिबंधहेतुयुक्ततया तत्तत्कर्माणि करोति निष्पादयति, अन्यथा प्रतिप्राणिप्रसिद्धविचित्रसुखदुःखाद्यनुभवस्यानुपपत्तेः। तथाहि-लोके विचित्रं सुखं दुःखं वा जीवेनानुभूयते, न चायं विचित्रसुखदुःखानुभवो निर्हेतुकोऽस्ति, कुतः? सर्वदा एतत्सद्भावस्याभावप्रसंगात्, तस्मादस्य सुखदुःखानुभवस्य कारणं स्वकृतं कर्मैव न त्वन्यदिति सिद्धो जीवः कर्मणां कर्त्ता इति, अनेन कापिलमतकल्पना निरस्ता। नन्वयं जीवः सर्वदा सुखाभिलाष्येवास्ति, न तु कदाप्यात्मनो दुःखमभिलषति, ततो यद्यसौ स्वयमेव कर्मणां कर्त्ता तर्हि कथं दुःखफलदानि कर्माणि करोतीति? उच्यते-यथा हि रोगी रोगनिवृत्तिमिच्छन्नपि रोगाभिभूतत्वादपथ्यक्रियायामुद्भवं भावि कष्टं जानन्नपि चापथ्यक्रियामासेवते, तद्वदेषोऽपि जीवो मिथ्यात्वाद्यभिभूतत्वात्कथंचिज्जानन्नपि दुःखफलदानि कर्माणि करोतीति न कश्चिद्दोषः ३। तथा स जीवः कृतं स्वयं निष्पादितं शुभाशुभं कर्म वेदयति स्वयमेवोपभुंक्ते अनुभव १ लोका २ गमप्रमाणत ३ स्तथैवोपपद्यमानत्वात्। तथाहि-यदि स्वकृतकर्मफलभोक्तृत्वं जीवस्य नांगीक्रियते तर्हि सुखदुःखानुभवकारणस्य सातासातवेदनीयकर्मण उपभोगोऽपि न स्यात्। तथा च सति जीवस्य सिद्धा-

काशयोरिव सुखदुःखानुभवोऽपि न स्यात्, अस्ति चायं सुखदुःखानुभवः प्रतिप्राणि स्वसंवेदनप्रमाणसिद्धः, तस्मादनुभवप्रमाणतो जीवस्य स्वकृतकर्मफलभोक्तृत्वं निष्पन्नं। तथा लोकेऽप्येष जीवः प्रायो भोक्ता सिद्धः, यतः सुखिनं कंचित्पुरुषं दृष्ट्वा लोके वक्तारो भवंति–पुण्यवानेष यदित्थं सुखमनुभवतीति। तथागमेषु जैनेषु इतरेषु च जीवो भोक्ता सिद्धः–' सव्वं च पएसतया, भुंजइ कम्ममणुभावओ भइयं ' तथा–' नाभुक्तं क्षीयते कर्म, कल्पकोटिशतैरपि। ' इत्यादिवचनात्। इत्थं च सिद्ध एष जीवः स्वकृतकर्मणां भोक्तेति। अनेन हि अभोक्तृजीववादिनां दुर्मतं निराकृतं ४। तथा पुनरस्य जीवस्यास्ति विद्यते निर्वाणं मोक्षः, अयमर्थः–विद्यमानस्यैव जीवस्य रागद्वेषमदमोहजन्मजरामरणरोगादिदुःखक्षयरूपोऽवस्थाविशेषो मोक्ष इत्युच्यते, सोऽस्य जीवस्यास्ति, न पुनरेतस्य सर्वथा नाश इति। एतेन प्रदीपनिर्वाणतुल्यमभावरूपं निर्वाणमस्तीत्याद्यसद्भूतं प्ररूपयंतः सौगतविशेषा अपास्ताः, ते हि प्रदीपस्येवास्य जीवस्य सर्वथा ध्वंस एव निर्वाणमाहुः, तथा च तद्वचः–दीपो यथा निर्वृतिमभ्युपेतो, नैवावनिं गच्छति नांतरिक्षं। दिशं न कांचिद्विदिशं न कांचित्, स्नेहक्षयात्केवलमेति शांतिं ॥ १ ॥ जीवस्तथा निर्वृतिमभ्युपेतो, नैवावनिं गच्छति नांतरिक्षं। दिशं न कांचिद्विदिशं न कांचित्, क्लेशक्षयात्केवलमेति शांतिं ॥ २ ॥ इति। एतच्चायुक्तं दीक्षाग्रहणादिप्रयासवैयर्थ्यात्, प्रदीपदृष्टांतस्याप्यसिद्धत्वात्, तथाहि–न प्रदीपवह्नेः सर्वथा विनाशः, किं तु तथाविधपुद्गलपरिणामवैचित्र्यात्त एव वह्निपुद्गला भास्वरं रूपं परित्यज्य तामसं रूपांतरं प्राप्नुवंति, तथा च विध्याते प्रदीपेऽनंतरमेव कियत्कालं तामसपुद्गलरूपो विकारः समुपलभ्यते, चिरकालं चासौ यन्नोपलभ्यते, तत् सूक्ष्मसूक्ष्मतरपरिणामभावापादंजनरजोवत्, अंजनस्य हि पवनेनापह्रियमाणस्य यत्कृष्णं रज उड्डीयते तदपि परिणामसौक्ष्म्यान्नोपलभ्यते, न पुन-

रागत्वादिति । ततो यथानंतरोक्तस्वरूपपरिणामांतरं प्राप्तः प्रदीपो निर्वाण इत्युच्यते, तथा जीवोऽपि कर्मविरहितः केवलामूर्तजीवस्वरूपलक्षणं परिणामान्तरं प्राप्तो निर्वाण इत्युच्यते, तस्माद्दुःखादिक्षयरूपा सत एव जीवस्यावस्था निर्वाणमिति स्थितं ५ । तथा अस्ति पुनर्मोक्षस्योपायः सम्यक् साधनं, सम्यग्दर्शनज्ञानचारित्राणां मुक्तिसाधकतया घटमानत्वात् । तथाहि-मिथ्यात्वाज्ञानप्राणिहिंसादिदुष्टहेतुसमुदायो यदि सकलमपि कर्मजालं समुत्पादयितुं समर्थोऽस्ति, ततस्तद्विरोधितया सम्यग्दर्शनाद्यभ्यासः सकलकर्मनिर्मूलनाय समर्थः स्यादेव । न चैवं मिथ्यादृष्टिना विहितोऽप्युपायो मुक्तिसाधको भविष्यतीति वाच्यं, तस्य मिथ्यात्विकृतोपायस्य हिंसादिदोषकलुषितत्वेन संसारकारणत्वादिति, अनेनापि मोक्षोपायाभावप्रतिपादकदुर्णयस्तिरस्कृतः ६ । एतानि जीवास्तित्वादीनि षट् सम्यक्त्वस्य स्थानानि प्रोक्तानि । सम्यक्त्वमेषु सत्स्वेव भवतीति भावः । अत्र च प्रतिस्थानकमात्मादिसिद्धये बहु वक्तव्यमस्ति, तत्तु नोच्यते ग्रंथगहनताप्रसंगादिति उक्तं सप्तषष्टिभेदैः सम्यक्त्वं ।

किं चेह ये भव्यांगिनो वस्तुमात्रसिद्धौ परस्परसापेक्षं कालादिपंचकं कारणतया प्रमाणयंति तेषामेवैतादृग्गभूतसम्यक्त्वरत्नस्वामित्वं भवति, नान्येषामेकांतवादिनां । यदुक्तं–कालो १ सहाव २ नियई ३, पुव्वकयं ४ पुरिसकारणे ५ पंच । समवाए सम्मत्तं, एगंते होइ मिच्छत्तं ॥१॥ ति ' इत्थं स्वरूपं परमात्मरूप–निरूपकं चित्रगुणं पवित्रं । सम्यक्त्वरत्नं परिगृह्य भव्या, भजंतु दिव्य सुखसंचयं च ॥१॥ प्रवचनसारोद्धारा–द्यनुसारेणैष वर्णितो मयका । सम्यक्त्वस्य विचारो, निजपरचेतःप्रमत्तिकृते ॥२॥

॥ इति श्रीजिनभक्तिसूरींद्रचरणांभोजमधुकृद्भिः श्रीजिनलाभसूरिभिः संगृहीते आत्मप्रबोधग्रंथे सम्यक्त्वनिर्णयो नाम प्रथमः प्रकाशः समाप्तः ॥ श्रीरस्तु ॥

---

# ॥ द्वितीयो देशविरतिप्रकाश आरभ्यते ॥

तत्र तावदुक्तस्वरूपसम्यक्त्वमूलकोत्तमात्मबोधप्रादुर्भावे सति केषांचिदासन्नभव्यानां यच्चारित्रमोहनीयकर्मक्षयोपशमतो देशविरत्यादिलाभः संपद्यते स प्रदर्श्यते—

सदात्मबोधेन विशुद्धिभाजो, भव्या हि केचित्स्फुरितात्मवीर्याः ।
भजंति सार्वोदितशुद्धधर्मं, देशेन सर्वेण च केचिदार्याः ॥ १ ॥

अस्यार्थः—सता सद्भूतेनात्मबोधेन विशुद्धभाजो निर्मलीभूताः केचिद्भव्याः स्फुरितमुल्लसितमात्मवीर्यं येषां ते तथाविधाः संतः सार्वोदितं सर्वज्ञप्रणीतं शुद्धं धर्मं विरतिलक्षणं देशेन भजंति, केचित्पुनरार्याः सत्पुरुषाः सर्वेण भजंति । एतावता केचिद्देशविरतिं लभंते, केचित्सर्वविरतिमित्याशयः १ ।

तत्र तावद्देशविरतिप्राप्त्यादिस्वरूपमाविष्क्रियते—

इह द्वितीयेषु कषायकेषु, क्षीणोपशांतेषु विशा तिरश्चा ।
सम्यक्त्वयुक्तेन शरीरिणैषा, लभ्येत देशाद्विरतिर्विशुद्धा ॥ २ ॥

व्याख्या—देशेन प्राणातिपातादिपापस्थानेभ्यो निवृत्तिर्देशविरतिरित्युच्यते, सा एषा विशुद्धा देशविरतिर्द्वितीयेषु अप्रत्याख्यानक्रोधमानमायालोभलक्षणेषु चतुर्षु कषायेषु क्षीणोपशांतेषु सत्सु इहास्मिन् संसारे सम्यक्त्वयुक्तेन विज्ञा मनुष्येण तिरश्चा तिर्यग्योनिकेन शरीरिणा प्राणिना लभ्येत, नान्यथेत्यर्थः, देवनारकयोस्तु एतत्प्राप्त्यसंभवादग्रहणमिति । किं च सम्यक्त्वप्राप्तिसमयभाविनी या कर्मस्थितिस्तन्मध्यात्पल्योपमपृथक्त्वलक्षणस्थितिक्षये देशविरतिः प्राप्यते, यदुक्तं प्रवचनसारोद्धारस्यैकोनपंचाशदधिकद्विशततमे द्वारे—

सम्मत्तंमि य लद्धे, पलियपुहुत्तेण सावओ होइ ।
चरणोवसमखयाणं, सायरसंखंतरा हुंति ॥ ३ ॥

व्याख्या—यावत्यां कर्मस्थितौ सम्यक्त्वं लब्धं तन्मध्यात्पल्योपमपृथक्त्वलक्षणे स्थितिखंडे क्षपिते श्रावको देशविरतो भवेत् । ततश्चरणोपशमक्षयाणामंतरा संख्यातानि सागरोपमाणि भवंति । इयमत्र भावना—देशविरतिप्राप्त्यनंतरं संख्यातेषु सागरोपमेषु क्षपितेषु चारित्रमवाप्नोति, ततोऽपि संख्यातेषु सागरोपमेषु क्षपितेषु उपशमश्रेणिं प्रतिपद्यते, ततोऽपि संख्यातेषु सागरोपमेषु क्षपितेषु क्षपकश्रेणिर्भवति, ततस्तद्भवे मोक्षः, इत्यादि ।

देशविरतेरवस्थानकालस्तु जघन्यतोऽन्तर्मुहूर्त उत्कर्षतो देशोना पूर्वकोटिरित्यवगंतव्यः । एवंरूपा देशविरतिर्येषां विद्यते ते देशविरताः श्रावका उच्यंते, यतो द्विविधाः श्रावका—विरता अविरताश्च, तत्र विरताः प्रतिपन्नदेशविरतय आनंदादयः,

अविरता अंगीकृतक्षायिकसम्यक्त्वाः सत्यकिश्रेणिककृष्णादयः, इति । इह प्रकाशे च प्रतिपन्नदेशविरतीनां श्रावकाणां स्वरूपमभिधेयं, तन्निरूपणाय तावत् श्रावकत्वस्य योग्यताभिधायिनो ये एकविंशतिर्गुणास्तेऽभिधीयंते—

धम्मरयणस्स जुग्गो, अक्खुद्दो रूववं पगइसोमो ।
लोगप्पियो अकूरो, भीरू असढो सदक्खिन्नो ॥ ४ ॥
लज्जालुओ दयालू, मज्झत्थो सोमदिट्ठि गुणरागी ।
सक्कहसुपक्खजुत्तो, सदीहदंसी विसेसन्नू ॥ ५ ॥
वुड्ढाणुगो विणीओ, कयन्नुओ पराहियत्थकारी य ।
तह चेव लद्धलक्खो, इगवीसगुणो हवइ सड्ढो ॥ ६ ॥

व्याख्या—परतीर्थिकप्रणीतानां सर्वेषामपि धर्माणां मध्ये प्रधानत्वेन यो रत्नमिव वर्तते, स धर्मरत्नं, जिनप्रणीतो धर्मो देशविरत्यादिरूपः शुभाचारस्तस्य योग्य उचितः ईदृक्स्वरूप एव श्रावको भवति । तद्यथा-अक्षुद्र इत्यादि, तत्र यद्यपि क्षुद्रस्तुच्छः, क्षुद्रः क्रूरः, क्षुद्रो दरिद्रः, क्षुद्रो लघुरित्यनेकार्थवाचकः क्षुद्रशब्दोऽस्ति तथापीह तुच्छार्थो गृह्यते, तस्यैव प्रस्तुतोपयोगित्वात्, ततः क्षुद्रस्तुच्छोऽगंभीर इत्यर्थः, तद्विपरीतोऽक्षुद्रः, स च सूक्ष्ममतित्वात्सुखेनैव धर्ममवबुध्यते १ ।

रूपवान् संपूर्णांगोपांगतया मनोहराकारः, स च तथाविधरूपसंपन्नः सदाचारप्रवृत्त्या भविकलोकानां धर्मे गौरवमुत्पादयन् प्रभावको भवति। ननु नंदिषेणहरिकेशबलप्रभृतीनां कुरूपाणामपि धर्मप्रतिपत्तिः श्रूयते, अतः कथं रूपवानेव धर्मेऽधिक्रियते ? इति चेत्सत्यं, इह रूपं द्विविधं सामान्यमतिशायि च। तत्र सामान्यं संपूर्णांगत्वादि, तच्च नंदिषेणादीनामप्यासीदेवेति न विरोधः, प्रायिकं चैतच्छेषगुणसद्भावे कुरूपत्वस्याप्यदुष्टत्वात्, एवमग्रेऽपि। अतिशायि रूपं तु यद्यपि तीर्थकरादीनामेव संभवति, तथापि येन रूपेण कस्मिंश्चिद्देशे काले वयसि वा वर्त्तमानः पुमान् रूपवानयमिति जनानां प्रतीतिमुपजनयति, तदेवेहाधिकृतं मंतव्यं २। प्रकृतिसौम्यः प्रकृत्या स्वभावेन सौम्योऽभीषणाकृतिर्विश्वसनीयरूप इत्यर्थः, एवंविधश्च प्रायेण न पापव्यापारे प्रवर्त्तते, सुखाश्रयणीयश्च भवति ३। लोकप्रियः, लोकस्य सर्वजनस्य इहपरलोकविरुद्धवर्जनेन दानशीलादिगुणैश्च प्रियो वल्लभः, सोऽपि सर्वेषां धर्मे बहुमानं जनयति ४। अक्रूरोऽक्लिष्टाध्यवसायः, क्रूरो हि परच्छिद्रान्वेषणलंपटत्वेन कलुषितमनाः सन् धर्मानुष्ठानं कुर्वन्नपि न फलभाग्भवतीत्यतोऽक्रूरत्वं युक्तं ५। भीरुः, ऐहिकामुष्मिकापायेभ्यस्त्रसनशीलः, स हि सत्यपि कारणे निःशंकमधर्मे न प्रवर्त्तते ६। अशठो निश्छद्माचारनिष्ठः, शठो हि वंचनप्रपंचचतुरतया सर्वस्यापि जनस्याविश्वसनीयो भवति, इत्यतोऽशठत्वं युक्तं ७। सदाक्षिण्यः, स्वकार्यपरिहारेण परकार्यकरणैकरसिकांतःकरणः, स हि सर्वस्यापि जनस्यानुवर्त्तनीयो भवति ८। लज्जालुरपि प्राकृतशैल्या लज्जावान्, स खल्वकृत्यसेवनवार्त्तयापि व्रीडति, स्वयमंगीकृतं सदनुष्ठानं च परित्यक्तुं न शक्नोति ९। दयालुर्दयावान् दुःखितजंतुरक्षणाभिलाषुक इत्यर्थः, धर्मस्य हि दयामूलमिति प्रतीतमेव १०। मध्यस्थो रागद्वेषविमुक्तबुद्धिः, स हि सर्वत्र रागद्वेषविवर्जिततया निश्चस्याप्यादेयवचनो

भवति ११। सौम्यदृष्टिः कस्यापि नोद्वेगकारी, स हि दर्शनमात्रेणापि प्राणिनां प्रीतिं पल्लवयति १२। गुणरागी गुणेषु गांभीर्यस्थैर्यप्रमुखेषु रज्यतीत्येवंशीलः, स हि गुणपक्षपातकारित्वात्सद्गुणान् बहु मन्यते निर्गुणांश्चोपेक्षते १३। सत्कथसपक्षयुक्तः, सत्कथाः सदाचारधारित्वात् शोभनप्रवृत्तिकथका ये सपक्षाः सहायास्तैर्युक्तः सहितो, धर्मानिषेधकपरिवार इत्यर्थः एवंविधश्च न केनचित्परतीर्थिकादिना उन्मार्गे नेतुं शक्यते। अन्ये तु सत्कथः सुपक्षयुक्तश्चेति पृथक् गुणद्वयं मन्यंते, मध्यस्थः सौम्यदृष्टिश्चेति द्वाभ्यामप्येकमेवेति १४। तथा सुदीर्घदर्शी सुपर्यालोचितपरिणामपेशलकार्यकारी, न तु औत्सुक्यभाक्, स किल प(पा)रिणामिकया बुद्ध्या सुंदरपरिणाममैवैहिकमपि कार्यमारभते ॥ १५ ॥ विशेषज्ञः सारेतरवस्तुविभागवित्, अविशेषज्ञस्तु दोषानपि गुणत्वेन गुणानपि दोषत्वेनाध्यवस्यतीत्यतो विशेषज्ञत्वमेव शोभनं १६। वृद्धानुगः वृद्धान् परिणतमतीननुगच्छति गुणार्जनबुद्ध्या सेवते इति तथोक्तः, वृद्धजनानाम(जनान)नुवर्त्तमानो हि पुमान् न कदाचिदपि विपदं प्राप्नोति १७। विनीतो गुरुजनगौरवकृत्, विनयवति हि सद्यो ज्ञानादिसंपदः प्रादुर्भवंति १८। [इह विनीताविनीतछात्रद्वयदृष्टांतो वोध्यः] कृतज्ञः स्वल्पमप्युपकारमैहिकं पारत्रिकं वाऽपरेण कृतं जानाति, न निह्नुते इति तथोक्तः, कृतघ्नो हि सर्वत्राप्यमंदां निंदां समासादयतीत्यतः कृतज्ञत्वं युक्तं १९। परहितार्थकारी परेषामन्येषां हितान् हितकारकानर्थान् प्रयोजनानि कर्त्तुं शीलं यस्य स तथा, ननु प्रागुक्तेन सदाक्षिण्येन सहास्य को भेद इति चेदुच्यते-सदाक्षिण्योऽभ्यर्थित एव करोति, अयं पुनः स्वत एव परहिताय प्रवर्त्तते इत्यनयोर्भेदः. यो हि प्रकृत्यैव परहितकरणे निरतो भवति स निरीहचित्ततयाऽन्यानपि सद्धर्मे स्थापयतीति २०। तथा लब्धलक्षः लब्धमिव लब्धं लक्षं शिक्षणीयानुष्ठानं येन

स तथोक्तः, ईदृशो हि पूर्वभवाभ्यस्तमिव सर्वमपि वंदनप्रत्युपेक्षणादिधर्मकृत्यं झटित्येवाधिगच्छति २१। तदेवमेकविंशतिगुणसंपन्नः श्रावको भवतीत्युक्ताः श्रावकगुणाः।

अथोक्तगुणवत्स्वपि भव्येषु ये देशविरतियोग्या भवंति ते निर्दिश्यंते—

जे न खमंति परीसह–भयसयणासिणेहविसयलोभेहिं।
सव्वविरइं धरेउं, ते जुग्गा देसविरईए ॥ ७ ॥

व्याख्या—ये प्रत्याख्यानावरणकषायोदयवर्त्तिनो जीवाः परीषहभय १ स्वजनस्नेह २ विषयलोभैः ३ कारणैः सर्वविरतिं धर्त्तुं न क्षमंते ते देशविरतेर्योग्या भवंति। इदमत्र तात्पर्यं–सद्धर्मसामग्रीं प्राप्य विवेकिना पूर्वं सर्वविरतिरेवादरणीया, यः पुनर्बुभुक्षातृपासहनभिक्षाभ्रमणमलधारणादिपरीषहेभ्यो भीरुतया, तथेदृशमत्यंतं प्रीतिपात्रं मातृपितृपुत्रादिपरिजनं त्यक्त्वा कथमेकाकिना भूयते? इति स्वजनस्नेहेन, तथा प्राक्तनपुण्ययोगतः प्राप्ता अमींद्रियार्थाः कथमभुक्त्वा मुच्यंते? इति विषयलोभेन वा सर्वविरतिं वरीतुं नोत्सहते स प्राणी सर्वभ्रष्टो मा भूवं, सर्वनाशे जायमाने यत्तल्लाभोऽपि श्रेयानेवेति विचिन्त्य देशविरतिं प्रतिपद्यते। उक्तलक्षणप्रतिबंधककारणाभावे तु सर्वविरतिमेव प्रतिपद्यते इत्यर्थः। यदावश्यकचूर्णिः–तिसयसुहपिवासाए, अहवा वंधयजणाणुराएण। अचयंतो बावीसं, परीसहे दुस्सहे सहिउं ॥ १ ॥ जइ न करेइ विसुद्धं, सम्मं अइदुक्करं तवचरणं। तो कुज्जा गिहिधम्मं, न य वज्झो होइ धम्मस्स ॥ २ ॥ इति, अयं हि देशविरतेः प्रतिपत्ता श्रावको जघ-

न्यादिभेदात्रिविधः, तथाहि–जघन्यो १ मध्यम २ उत्कृष्टश्च ३ । तत्र यः प्रयोजनमंतरेण स्थूलहिंसादिकं न करोति, मद्यमांसाद्यभक्ष्यवस्तूनि परित्यजति, नमस्कारमहामंत्रं धारयति, नमस्कारसहितं च प्रत्याख्यानं करोति, स जघन्यः श्रावको बोध्यः १ । तथा यो धर्मयोग्यगुणैर्व्याप्तो भवति, षडावश्यकानि च सर्वदा समाचरति, द्वादश व्रतानि च धारयति, स सदाचारवान् गृहस्थो मध्यमः श्रावको बोध्यः २ । तथा यः सचित्ताहारं वर्जयति, एकासनं (काशनकं) च करोति, ब्रह्मचर्यं च पालयति स उत्कृष्टः श्रावको बोध्यः ३ । उक्तं च–आउट्टिथूलहिंसाइ, मज्जमंसाइ चाइओ । जहन्नो सावओ वुत्तो, जो नमुक्कारधारओ ॥ १ ॥ धम्मजुग्गगुणाइन्नो, छकम्मो बारसव्वओ । गिहत्थो य सयायारो, सावओ होइ मज्झिमो ॥ २ ॥ उक्कोसेणं तु सड्ढो उ, सच्चित्ताहारवज्जओ । एगासणगभोई य, बंभयारी तहेव य ॥ ३ ॥ इति ॥

अथ द्वादशव्रतलक्षणदेशविरतिस्वरूपं निरूपयितुं तन्नामान्याभिधीयंते—

पाणिवह १ मुसावाए २, अदत्त ३ मेहूण ४ परिग्गहे चेव ५ ।
दिसि ६ भोग ७ दंड ८ समई ९, देसे १० तह पोसह ११ विभागो १२ ॥ ८ ॥

व्याख्या—प्राणिवधमृषावादादत्तादानमैथुनपरिग्रहेभ्यः स्थूलेभ्यो विरमणानि पंचाणुव्रतानि । तथा दिक्परिमाण १ भोगोपभोगमाना २ नर्थदंडविरमणानि ३ त्रीणि गुणव्रतानि । तथा सामायिक १ देशावकाशिक २ पौषधा ३ तिथिसंविभागा ४ ख्यानि चत्वारि शिक्षाव्रतानि । सर्वमीलने हि जातानि द्वादश व्रतानीति गाथार्थः ।

इयमत्र भावना–सम्यक्त्वलाभानंतरं गृहस्थः प्राणातिपाताद्यारंभनिवृत्तेः सद्गतिप्रापकत्वादीन् गुणान् जानन् सन् द्वादश व्रतानि गृह्णीयात्, तेषु प्राणिवधविरमणव्रतं सर्वसारत्वात् श्रीजिनेंद्रैः प्रथमं निर्दिष्टं, प्राणिनां वधाद्विरमणं प्राणिवधविरमणं, प्राणातिपातविरमणमहिंसेति यावत् । तत्र जीवद्रव्यस्यामूर्त्तत्वेन हिंसाऽनर्हत्वात् सर्वस्य भूतानां दशानां प्राणानां विनाशनं हिंसोच्यते । उक्तं च–पंचेंद्रियाणि त्रिविधं बलं च, उच्छ्वासनिःश्वासमथान्यदायुः । प्राणा दशैते भगवद्भिरुक्ता–स्तेषां वियोगीकरणं तु हिंसा ॥ १ ॥ तद्विपरीता त्वहिंसा, तद्रूपं यद्व्रतं तदहिंसाव्रतमुच्यते । अस्य च सर्वव्रतानां धुरि पाठो युक्त एव, जैनधर्मस्य जीवदयामूलत्वात् । यदाहुः–इक्कं चिअ इत्थ वयं, निद्दिट्ठं जिणवरेहि सव्वेहिं । पाणाइवायविरमणं, अवसेसा तस्स रक्खट्ठा ॥ १ ॥ इयं हि संपूर्णविंशतिविशोपकप्रमिताऽहिंसा साधोर्भवति । श्रावकस्य तु सपादविशोपकमात्रैवावगंतव्या । तथाहि—

थूला सुहुमा जीवा, संकप्पारंभओ अ ते दुविहा ।
सवराहनिरवराहा, साविक्खा चेव निरविक्खा ॥ १ ॥

अयमर्थः–प्राणिवधो द्वेधा स्थूलसूक्ष्मजीवभेदात्, तत्र स्थूला द्वींद्रियादयः, सूक्ष्माश्चात्र बादरैकेंद्रियाः, न तु सूक्ष्मनामकर्मोदयवर्त्तिन एकेंद्रियाः, तेषां शस्त्रादिप्रयोगेण वधाभावात् । तत्र गृहस्थानां हि स्थूलप्राणिवधान्निवृत्तिः स्यात्, न तु सूक्ष्मवधात्, पृथ्वीजलादिवधेनैव तेषां पचनपाचनाद्यशेषकर्मप्रवृत्तेः । एवं च स्थावरजीवहिंसाया अनियमेन विंशतिमध्याद्-

शविशोपकापगमे स्थिता दशविशोपका अहिंसा, ततो नियमितो यः स्थूलप्राणिवधः स द्वेधा–संकल्पजश्चारंभजश्च, तत्राद्यो मारयाम्येनमिति मनःसंकल्पाज्जायते, द्वितीयस्तु कृषिगृहाद्यारंभेषु प्रवर्त्तनाज्जायते । तत्रासौ संकल्पजात्स्थूलप्राणिवधान्निवर्त्तते, न पुनरारंभजात्, तद्व्यतिरेकेण तस्य शरीरकुटुंबाद्यनिर्वाहात् । एवं चारंभजहिंसाया अनियमेन दशमध्यात्पंचविशोपकापगमे स्थिता पंचविशोपका अहिंसा । ततो नियमितो यः संकल्पजवधः सोऽपि द्वेधा–सापराधनिरपराधभेदात् तत्रासौ सापराधस्य चौरजारादेः संकल्प्यापि वधं न वर्जयति, निरपराधस्य तु संकल्प्य वधं न करोति, एवं च सापराधहिंसाया अनियमेन पंचानां मध्यादर्द्धतृतीयविशोपकापगमे स्थिता अर्द्धतृतीयविशोपकाऽहिंसा । ततो नियमितो यो निरपराधवधः सोऽपि द्विविधः–सापेक्षनिरपेक्षभेदात् । तत्रापेक्षा आशंका, तत्सहितः सापेक्षः शंकास्थानमित्यर्थः, तद्विपरीतस्तु निरपेक्षः, तत्र श्राद्धः सापेक्षस्य हिंसां न वर्जयति, निरपेक्षस्य तु हिंसां न करोत्येव । इदमत्र तात्पर्य–कोऽपि राज्याद्यधिकारी पुमान् प्रतिपन्नद्वादशव्रतोऽपि स्वमर्मज्ञत्वात् शंकास्थानस्य कस्यचित्पुंसो निरपराधस्यापि वधं न निषेधयति, राजा वा कश्चिद्रिपुपुत्रस्यानपराधिनोऽपि वधं न वर्जयतीति । एवं च सापेक्षहिंसाया अवर्जनेनार्द्धतृतीयमध्यात्सपादविशोपकापगमे सति श्रावकाणां शेषा सपादविशोपकमात्रा दया भवतीति तत्त्वं । उक्तं च–साहू वीसं सद्धे, तससंकप्पावराहसाविक्खे । अद्धद्धओ सयाओ, विसोअओ पाणअइवाए ॥१॥ त्ति । ननु नियमितस्थानेभ्योऽन्यत्र श्रावको यथेच्छं जीववधं विधत्तामिति चेदुच्यते–उक्तेभ्यस्त्रसादिभ्यो व्यतिरिक्ते स्थावरादौ तस्य यतना भवति, न तु निर्दयत्वं । अयं भावः–यथा हि संकल्पतो निरपराधत्रसवध एव प्रत्याख्यातो नान्यत्किंचिदिति विचिन्त्य श्राद्धः पृथ्व्यादीनां तथारंभतस्त्रसादीनां निःशंकत-

योपमर्दं न विदधाति, किं तु यदि निर्वहति तदा स्थावरादीनपि न हंति। अनिर्वाहे तु धन्याः खल्वमी सर्वारंभमुक्ताः साधवो मम तु महारंभमग्नस्य क्व किल मोक्ष इति सदयहृदयत्वेन सशंक एव तत्र प्रवर्त्तते। उक्तं च–वज्जइ तिव्वारंभं, कुणइ अकामो अनिव्वहंतो य। थुणइ निरारंभजणं, दयालुओ सव्वजीवेसु ॥ १ ॥ त्ति। न चानियमिते वस्तुनि केयं यतनेति वाच्यं, यतनां विना प्राणातिपातविरमणस्य फलाभावात्। यतो व्रतं पुण्यार्थमाद्रियते न केवलं स्वोच्चारितनिर्वाहाय, पुण्यं च मनः–परिणामाद्भवति, स च यदि स्थावरादिष्वपि निर्दयस्तदा सर्वत्रापि तादृश एव, जीवसामान्यात्, ततोऽनियमितेष्वपि स्थावरादिषु यतनां कुर्यादिति। उक्तं च–जं जं घरवावारं, कुणइ गिही तत्थ तत्थ आरंभो। आरंभे वि हु जयणं, तरतमजोएण चिंतेइ ॥ १ ॥ तरतमजोएण त्ति–अल्पारंभसाध्ये कार्ये न महारंभं प्रयुंक्ते, बहुसावद्यं वा कार्यमुत्सृज्याल्पसावद्यमेव तत्कुरुते इति तरतमयोगः। अथान्वयव्यतिरेकाभ्यामहिंसायाः शुभोत्तरकालता दर्श्यते–यो रक्षति परजीवान्, रक्षति परमार्थतः स आत्मानं। यो हंत्यन्यान् जीवान्, स हंति नर आत्मनात्मानं ॥ ९ ॥ अथान्वयव्यतिरेकाभ्यामहिंसायाः फलं दर्श्यते–सुखसौभाग्यबलायु–र्धीरिमकांत्यादिफलमहिंसायाः। बहुरुक्शोकवियोगा, अबलत्वभीत्यादि हिंसायाः ॥ १० ॥ उपलक्षणमेतत्, तेन विभवस्वर्गादिकमपि यद्यद्रमणीयं तत्तत्सर्वमहिंसायाः फलं, यत्तु नरकनिपाताद्यनिष्टं तत्सर्वं हिंसायाः फलं ज्ञेयं। अथैतद्व्रतमेव दृष्टांतेन वर्ण्यते–जे य संसारजं दुक्खं, मोत्तुमिच्छंति जंतुणो। अणुकंपापरा निच्चं, सुलसु व्व हवंति ते ॥ ११ ॥ स्पष्टार्थं।

इह सुलसकथा चैवं–राजगृहनगर्यां कालिकसूकरिकनामा सौनिको वसति, स च स्वज्ञातीयगृहपंचशतीमध्ये महत्तरः, तस्य

सुलसनामैकः पुत्रः, स चाभयकुमारमंत्रिसंसर्गेण दयापरः श्रावको जातः, तत्पिता कालिकसूकरिकस्तु नित्यं पंचशतमहिषान्मारयति स्म। स च श्रेणिकेन निवार्यमाणोऽपि अभव्यत्वात्तद्वधान्न न्यवर्त्तत। ततः केवलपापनिभृतपिंडः समुत्पन्नदुर्लेश्यो मृत्वा स सप्तमं नरकं गतः, तदा स्वज्ञातीयैः संभूय सुलसाय प्रोक्तं–'अथ त्वं पितुः पदं गृहाण, कुटुंबपोषणं च कुरु।' सुलसः प्राह–'कथं करोमि?।' तैरुक्तं–'कुलक्रमागतां प्रत्यहं पंचशतमहिषमारणक्रियां समाचर।' सुलसेनोक्तं–'ईदृग्जीववधेनार्जितं धनं यूयं सर्वेऽपि भुंक्थ, तज्जन्यं पापं तु मयैकेनैव भोक्तव्यं स्यात्।' तदा ते प्राहुः–'पापं विभज्य लास्यामः।' ततस्तेषां प्रतिबोधाय सुलसेन कुठारप्रहारेण स्वचरणमेव मनाक् छित्त्वाऽऽक्रंदनं कुर्वता प्रोक्तं–'मम महती वेदना जायते, तां सद्यो विभज्य गृह्णीत।' तैरुक्तं–'वेदनाविभजनेऽस्मत्सामर्थ्यं नास्ति।' सुलसः प्राह–'यदि एतावत् सामर्थ्यमपि युष्मासु नास्ति, तर्हि नरकहेतुमनेकमहिषवधजन्यं पापं कथं विभज्य लास्यथ?।' तदा ते सर्वेऽपि मौनमाधाय स्थिताः। ततः सुलसः सर्वमपि स्वकुटुंबं प्राणिवधान्निवार्य सद्व्यवहारेण तत्पालनं कुर्वन् यावज्जीवं शुद्धं श्राद्धधर्ममाराध्य स्वर्गभाग् जातः। इति प्रथमव्रताराधने सुलसदृष्टांतः। एवमन्यैरपि सद्धर्ममूलं सर्वार्थसिद्ध्यनुकूलं एतद्व्रतं प्रयत्नतः सेवनीयं। अत्र भावनागाथा–धन्ना ते पमणिज्जा, जेहिं मणवयणकायसुद्धीए। सव्वजियाणं हिंसा, चत्ता एवं विचिंतिज्जा ॥ १ ॥ इति भावितं प्रथमं व्रतं १।

अथ द्वितीयं स्थूलमृषावादविरमणव्रतं भाव्यते–स्थूलो यो मृषावादोऽसत्यजल्पनं तस्माद्विरमणं निवृत्तिस्तद्रूपं यद्व्रतं तत्स्थूलमृषावादविरमणव्रतमुच्यते, कन्यालीकादिनिवृत्तिरूपमित्यर्थः। तथाहि—

कन्नागोभूआलियं, नासावहारं च कूडसक्खिज्जं।

थूलमलीअं पंचह, चएइ सुहुमं पि जहसत्ति ॥ १० ॥

व्याख्या—श्रावकः स्थूलं परिस्थूलवस्तुविषयमतिदुष्टाध्यवसायसंभवमलीकं मृषावादं पंचधा त्यजति । तथाहि-कन्यालीकं १ गवालीकं २ भुवलीकं ३ न्यासापहारः ४ कूटसाक्ष्यं च ५ । तत्र निर्दोषामपि कन्यां विषकन्येयमित्यादि वदतः कन्यालीकं १ । तथा बहुक्षीरामपि गामल्पक्षीरां वदतो, अल्पक्षीरां वा बहुक्षीरां वदतो गवालीकं २ । परसत्कामपि भुवमात्मादिसत्कां वदतो भुवलीकं ३ । एतानि च सर्वद्विपदचतुष्पदविषयालीकानामुपलक्षणानि बोध्यानि । ननु यद्येवं तर्हि सर्वसंग्रहार्थं द्विपदादिग्रहणमेव कस्मान्न कृतं ? इति चेदुच्यते-कन्याद्यलीकानां लोकेऽतिगर्हितत्वाद्विशेषेण वर्जनार्थं तदुपादानमिति न दोषः । तथा न्यासस्य स्थापनिकाया अपहरणमपलपनं न्यासापहारः, अस्य चादत्तादानरूपत्वेऽपि अपलापवचनप्राधान्यान्मृषावादे पाठः ४ । तथा लंचादिलोभेन मत्सराद्यभिभूतत्वेन वा प्रमाणीकृतमप्यर्थमन्यथा स्थापयतः कूटसाक्ष्यं, अस्य च परकीयपापदृढीकरणविशेषात्पूर्वेभ्यो भेदः । एवं स्थूलालीकनिषेधमुक्त्वा गृहिणां सूक्ष्मालीकयतनामाह-सुहुमंपि त्ति सूक्ष्ममपि अल्पवस्तुविषयमपि अलीकं यथाशक्ति त्यजति । सति निर्वाहे सूक्ष्ममप्यलीकं न ब्रूयात्, अनिर्वाहे पुनस्तरतमयोगेन यतनां कुर्यादिति गाथार्थः । अथ सत्यव्रतस्य प्रभावो दर्श्यते—

जे सच्चववहारा, तोसिं दुट्ठा वि नेव पहवंति ।
नाइक्कमंति आणं, ताणं दिव्वाइं सव्वाइं ॥ ११ ॥

व्याख्या—ये सत्यव्यवहाराः सत्यवादिनस्तेषां दुष्टाः क्रूरकर्माणोऽपि भूपादयो नैव कष्टं कर्तुं प्रभवंति। यथा श्रीकालकाचार्याणां दत्तपुरोहितः, तत्कथानकं तु तृतीये प्रकाशे वक्ष्यते, तथा-जलमग्निर्दिष्टं (?) कोशो, विषं माषाश्च तंडुलाः। फालं (फलं) धर्मः (?) सुतस्पर्शौ (सुतः सर्पो), दिव्यानां दशकं मतं ॥१॥ इत्येवंरूपाणि सर्वाणि दिव्यानि तेषामाज्ञां नातिक्रामंति नोल्लंघंते, आज्ञा चात्र हे जल! मा स्म मां निमज्जय, हे वह्ने! मा स्म मां ज्वालय, (हे छिद्र-शत्रो! अस्मात् दूरीभव, रे कोश भांडार! मा रिक्तो भव, रे विष! माऽस्मान् पीडय, भो माषाः! माऽस्मान् बाधयत, भोः तंडुलाः! माऽस्माकमजीर्णं कुरुत, अस्मद्धर्मः सफलो भूयात्, भोः सुत! माऽविनीतो भव, भोः सर्प! माऽस्मान् स्पृश) इत्येवंरूपा बोध्या।

अथ सत्यप्रतिपक्षस्यासत्यस्य भृशं निंद्यता दर्श्यते—

वयणम्मि जस्स वयणं, निच्चमसच्चं वहेइ वच्चरसो।
सुद्धीए जलण्हाणं, कुणमाणं तं हसंति बुहा ॥ १२ ॥

व्याख्या—यस्य वदने मुखेऽसत्यं वचनमेव सर्वजगदनिष्टत्वादपावित्र्यहेतुत्वाच्च वर्चोरसो विष्ठारसो नित्यं वहति तं पुरुषं शुद्ध्यै शुद्धिनिमित्तं जलस्नानं कुर्वंतं बुधा विवेकिनो हसंति, अहोऽस्य मूर्खत्वं यदसौ असत्यवचनान्निरंतरं मलिनात्मापि सन् त्वग्मात्रमलक्षालनसमर्थेन जलमात्रेण पावित्र्यमिच्छन् स्नानाद्यर्थमुपक्राम्यतीति। यदपरेऽप्याहुः—

चित्तं रागादिभिः क्लिष्ट-मलीकवचनैर्मुखं। जीवघातादिभिः कायो, गंगा तस्य पराङ्मुखी ॥ १ ॥ सत्यं शौचं तपः

शौचं, शौचमिंद्रियनिग्रहः । सर्वभूतदया शौचं, जलशौचं च पंचमं ॥ २ ॥ इति । किं च—

मूयत्तणंपि मन्ने, सारं सारंभवयणसत्तीओ ।
निम्मंडणं चिअ वरं, जलंतअंगारसिंगारा ॥ १३ ॥

व्याख्या—अहमेवं मन्ये सारंभमसत्यभाषणं मर्मोद्घट्टनादिना सपापं यद्वचनं तद्विषया शक्तिस्तस्याः सकाशान्मूकत्वं वाग्वैकल्यमपि सारं । अत्र दृष्टांतमाह–ज्वलद्भिर्धगधगायमानैरंगारैर्यः शरीरशृंगारस्तस्मान्निर्मंडनं मंडनाभाव एव वरं । अयमर्थः–यथा शरीरशोभार्थमपि कृतोऽङ्गारशृंगारः प्रत्युत दाहाद्यनर्थहेतुस्तथा स्वनैपुण्यप्रकाशनायापि प्रारब्धं सारंभं वचनं प्रत्युत नरकनिपातादिदुःखकारणं भवतीति तत्सकाशान्मूकत्वमपि प्रशस्यते ।

अथास्य व्रतस्य पालितस्यापालितस्य च फलं दर्शयति—

सच्चेण जिओ जायइ, अप्पडिहयमहुरगुहिरवरवयणो ।
अलिएणं मुहरोगी, हीणसरो मम्मणो मूओ ॥ १४ ॥

व्याख्या—सत्यवचनेन जीव इह लोके यशोविश्वासादिपात्रं जायते, परलोके पुनरप्रतिहतमधुरगंभीरस्वरवचनो भवति, अप्रतिहतं क्वचिदप्यस्खलितं वज्रवत्, मधुरं परिपक्वेक्षुरसवत्, गंभीरं सजलजलधरगर्जितवत्, वरं व्यक्ताक्षरत्वात् कमनीयं

वचनं यस्य सः । तथा अलीकेन पुनरिह लोकेऽविश्वासदुष्कीर्त्यादिभाजनं स्यात् । भवांतरे तु मुखरोगी हीनस्वरो मन्मनो मूकश्च भवति । यस्य वदतो वाक् स्खलति स मन्मन उच्यते । अस्य व्रतस्य वाग्विषयत्वात्तत्फलमपि वाग्विषयमेवोक्तं, अन्यथा अविराद्धेनानेन स्वर्गादिकं, विराद्धेन तु नरकादिकमपि फलं बोध्यं ।

अथास्मिन् व्रते व्यतिरेकेण दृष्टांत उच्यते—

दप्पेण अलियवयणस्स, जं फलं तं न सक्किमो वोत्तु ।
दक्खिणालीएण वि, गओ वसू सत्तमं नरयं ॥ १५ ॥

व्याख्या—दर्पेण स्वमतस्थापनाग्रहेण यदलीकं जिनमतविरुद्धभाषणं तस्य फलमनंतानंतसंसारपरिभ्रमणरूपं वयं छद्मस्थाः परिमितायुषश्च वक्तुं न शक्नुमः । यतो दाक्षिण्यं गुरुभार्यानुरोधस्तेन हेतुना प्रोक्तमलीकं दाक्षिण्यालीकं, तेनापि वसू राजा सप्तमं नरकं गतः, एतावता यदि दाक्षिण्येनाप्युक्तेनालीकेनेदृशी दुर्गतिः स्यात्तदा दर्पोक्तस्य तस्य फलं तु कथं वक्तुं शक्यमिति भावः । इह वसुकथा चैवं—

डाहलदेशे शुक्तिमत्यां नगर्यामभिचंद्रो नाम राजाभूत् । तस्य वसुनामा पुत्रः, तत्रैव च पुर्यां जिनधर्मवासितमानसः क्षीरकदंबकनामैक उपाध्यायोऽवसत् । तस्यांतिकेऽशठाचारो बाल्यादपि सत्यव्रतरक्तः स वसुकुमारो विद्याभ्यासं चकार । तदा पर्वतको नामोपाध्यायपुत्रः नारदो नाम विद्यार्थी च, एतौ द्वावपि वसुकुमारेण सार्द्धं शास्त्राभ्यासं चक्रतुः । अन्यदा

तेषु त्रिष्वपि श्रमादंगणभूमौ सुप्तेषु सत्सु उपाध्यायो व्योम्नि चारणर्षिमुखादित्थं वाचमशृणोत्–'ये एते त्रयश्छात्रा अंगणभूमौ सुप्ताः संति तेषु मध्ये एक उर्ध्वगतिं यास्यति, द्वौ तु नरकं यास्यतः।' ततः स दध्यौ–'इदं हि ऋषिवाक्यं सर्वथा मृषा न भवति, परमेतेषु नरकगामिनौ कथं ज्ञायेते? यदि वा यो दयालुर्न स्यात् स नरकं याति, तस्मात्प्रथममहमेषां दयालुत्वं विलोकयामि' इति ध्यात्वाऽसौ त्रीन् पिष्टमयान् कुर्कुटांश्चक्रे। ततः शिष्येभ्य एकैकं कुर्कुटं दत्त्वा 'भो यत्र कोऽपि न पश्यति तत्रैवैते हंतव्या' इत्यादिदेश। तदा वसुपर्वतकौ पृथक् पृथक् एकांतवने गत्वा निर्दयतया स्वं स्वं कुर्कुटं जघ्नतुः। नारदस्त्वेकांते गत्वा कुर्कुटं पुरो विमुच्येत्यचिंतयत्–"गुरुणा वयमीदृशं दारुणं कर्म किमु कारिताः?। यतो निरपराधान् जंतूनेवं कः सचेतनो हंति? यद्वा यत्र कोऽपि न पश्यति तत्रासौ हंतव्य इति जल्पतो गुरोरभिप्रायो ज्ञातः, असौ न हंतव्य एव इति। यतोऽसौ पश्यति, अहं पश्यामि, ज्ञानिनः पश्यंति, परं यत्र न कोऽपि पश्यति तत्स्थानं किमपि नास्ति। ततोऽहमेवं मन्ये कृपालुरस्माकं गुरुः शिष्यान् परीक्षितुमेवमादिशत्" इति विचिंत्य तेन कुर्कुटो न हतः, ततोऽसौ व्याघुट्य गुरुसमीपं गत्वा कुर्कुटाविघातस्य हेतुं विज्ञपयति स। गुरुणा चासावूर्ध्वगतिरिति निश्चित्य तुष्टेन सता तस्य प्रशंसा कृता। तावता च वसुपर्वतावागत्य 'हतः कुर्कुट' इत्युक्तवंतौ। गुरुणा–'अरे युवां पठितमूर्खौ धिग्!' इत्यादिदुर्वाक्यैस्तर्जितौ, स्वयं च विषण्णेन सता मनसि चिंतितं–"मयि गुरौ प्राप्तेऽपि सति एतौ यदि अधोगती भविष्यतस्तर्हि किं मे माहात्म्यं? यद्वा क्षीणायुष्के पुरुषे राजवैद्योऽपि किं करोति? पुनश्चोच्चैःस्थलोपरि जलधरस्य वृष्टिरिवानयोर्विषये ममैतावानध्यापनप्रयासोऽपि वृथा जातः, अथ नरकाधिकारणैर्गृहारंभैर्मम सृतम्" इति निश्चित्य वैराग्यात्स उपाध्यायश्चारित्रं स्वीचकार,

तत्पदं च पर्वतः पालयामास । नारदस्त्वधीतशास्त्रो यथारुचि अन्यत्रागात् । अभिचंद्रभूपोऽपि काले दीक्षां जग्राह, ततो वसुः पितृवद्वसुमतीभारं बभार ।

अथासौ सकलेऽपि भूतले सत्यवादीति प्रसिद्धिं प्राप । तदनुरोधेनैव क्वचिदपि मृषा न बभाषे । इतश्च कोऽपि भिल्लो विंध्याटव्यां मृगं प्रति बाणं मुमोच, परं तद्बाणः स्खलितः सन् अंतराऽपतत्, तदा स भिल्लो बाणस्खलनकारणमन्वेषयन् अग्रे आकाशस्फटिकशिलां करस्पर्शाद् ज्ञात्वा चिंतितवान्–'मयाऽस्याः परतश्चरन् मृगो दृष्टस्तेन च मे बाणः स्खलितः, इयं हि स्वच्छा शिला वसुभूपतेर्योग्यास्ति ।' इति विचिंत्यासौ प्रच्छन्नमागत्य वसोस्तां शिलामज्ञापयत् । वसुरपि तस्मै धनं दत्त्वा तां ग्राहयामास । ततो भूपः शिल्पिनां पार्श्वे तस्या वेदिकां घटयित्वा, तानेकांते व्यापाद्य तद्वेदिकोपरि निजं सिंहासनं न्यधात्, तदा लोकः सर्वोऽप्येवमवदत्–'अहो राज्ञः सिंहासनं सत्यप्रभावाद्व्योम्नि स्थितं । अमुं राजानं सत्येन देवा अपि सेवंते इति ।' एकदा नारदः प्रीत्या पर्वतकस्य गृहं संप्राप्तः, तदा स विप्रो निजसभायां ऋग्वेदं व्याख्याति स्म । तत्राजैर्यष्टव्यमिति सूत्रे पर्वतेन मेषार्थे प्रोक्ते सति नारदः–'आः शांतं पाप' मित्युक्त्वा स्वकर्णौ पिधाय चोक्तवान्–'हे भ्रातर्भ्रांतेनेव त्वया किमिदमुच्यते ? आवयोर्गुरुस्तु तदा अजशब्देन त्रिवार्षिकव्रीहीन् व्याख्यातवानिति ।'

अथ पर्वतो गुरूक्तं तमर्थं स्मरन्नपि 'अमीषामंतेवासिनां मयि अविश्वासो मा भूत्' इति गर्वतो नारदं प्रति बभाषे–'हे नारद ! त्वमेव भ्रांतोऽसि तन्मां भ्रांतं जल्पसि, यतो मेषार्थभाषिणो गुरोर्निघंटुः साक्ष्यस्ति ।' नारदः प्राह–"द्विधा शब्दाः–मुख्यार्थवाचिनो गौणार्थवाचिनश्च । तत्र न जायंते इत्यजा इत्येवं गौणार्थमजशब्दमत्र गुरुरुक्तवान्, न तु मुख्यार्थं ।

यदि पुनर्धीमतां निघंटूक्त्यैव शब्दार्थः प्रमाणं स्यात्तर्हि गुरुः किमर्थं क्रियते ? तस्मात् हे पर्वतक ! धर्मोपदेशकं गुरुं एतां धार्मिकीं श्रुतिं च लुंपन् त्वं स्वीयं लोकद्वयं लुंपसि।" ततः पर्वतः सक्रोधं प्राह–"भोः किमनेन वृथा शुष्कवादेन? आवयोः स्वस्वपक्षव्यलीकत्वे जिह्वाछेदः पणोऽस्तु। अत्र प्रमाणं त्वावयोः सहाध्यायी वसुनृपो भवतु।" एतत् श्रुत्वा नारदः सत्यवादित्वादक्षोभः सन् ओमित्युक्त्वा केनापि कार्येण पुरमध्ये ययौ। तदा पुत्रस्नेहविह्वला जननी रहसि पर्वतकं प्रोचे–"हे वत्स ! त्वयाऽसावात्मनाशकः पणो विहितो यतो मयापि त्वत्पितुः सकाशादजा व्रीहय इत्येवार्थः श्रुतोऽस्ति, नान्यः, तस्मादधुनापि नारदमाकार्य तदसत्यं वचः क्षमयस्व। मदो हि रोगाणामजीर्णमिव सर्वापदां मूलमस्तीति तं परिहर।" अथ सोऽवदत्–"हे मातः ! किमत्र भयं ? यतो जातस्य एकस्मिन् दिनेऽवश्यं मृत्युर्भवति, अतो यदुक्तं तदुक्तमेव, अथ यद्भाव्यं तद्भविष्यति।" ततो माता पुत्रस्यापन्निवारणाय वसुसमीपे जगाम। वसुरपि तां प्रणम्य प्रीत्या स्वागतप्रश्नपूर्वकं प्रोवाच–'हे मातरिहागमनेनाद्य त्वया मयि महान् प्रमादो विहितः, अथागमनकारणं वद, किं ते ददामि ?' तदा सापि 'चिरं जीव' इत्याद्याशीर्वचनपूर्वकं तं प्रोचे–'हे राजन् ! यथा पुत्रं जीवंतं पश्यामि तथा कुरु' वसुरूचे–'त्वत्सुतो मम सतीर्थ्यत्वाद्बंधुः, गुरुपुत्रत्वाद्गुरुश्च वर्त्तते, तमद्य को द्वेष्टि ?' इति श्रुत्वा 'एकं स्ववदनं विना त्वद्भ्रातरं कोऽपि न द्वेष्टि' इति ब्रुवाणा सा सर्वमपि सूनोर्वादं निवेद्य, प्रातस्त्वया द्वयोर्मध्ये मत्पुत्रवाक्यं सत्यं कार्यमिति प्रार्थयामास। वसुः प्राह–'अहं क्वापि मिथ्यावचनं न ब्रवीमि, ततोऽधुना कूटसाक्ष्ये गुरुवचनविपर्यये च तत्कथं वदेयं ?' सा प्रोवाच–'हे वत्स ! संप्रत्यमुना विचारेण कृतं, जीवरक्षायाः पुण्यं तेऽस्तु, मृषोक्तेः पापं मेऽस्तु' इति गाढाग्रहाद्वसुभूपस्तद्वचनं मेने। अथ प्रातःसमये वसु-

भूपे सभायां आगते सति तौ नारदपर्वतौ विवदमानौ तत्र गत्वोच्चैःस्वरेण स्वस्वपक्षं निवेदितवंतौ तदा माध्यस्थ्यशालिनः सभ्यलोका वसुं विज्ञापयामासुः–'हे वसो ! सेयं वसुमती त्वयाद्य सत्यार्थीकृता, यत्रा बालभावतस्त्वं कदापि सत्यव्रतं नामुंचः, तथा सत्यस्यैव प्रभावात् देवैरपि सेवकीभूतैरिव ते सिंहासनं व्योम्नि धार्यते। तस्मात् हे सत्यपाथोधे ! अधुना सत्योक्त्यानयोर्विवादं शमय।' अथोत्पन्नदुर्मतिर्वसुस्तेषां वचोऽश्रुत्वैव तां स्वप्रसिद्धिं चावगणय्य–'गुरुणा त्वजा मेषा व्याख्याता' इति साक्ष्यं ददौ। ततोऽयं मलिनात्मा अतिनिर्मलां मां स्वाधः चिक्षेपेत्यमर्षादिव तस्य स्फटिकमयी वेदिका सद्यः पुस्फोट। तथा कुपिता राज्यदेवता वसुं सिंहासनादधः पातयति स्म। तदा नारदोऽपि–'हे सर्वधर्मपरिभ्रष्ट ! त्वं द्रष्टुमुचितो ने'ति तं निंदन् सदसस्ततो निरगात्। पर्वतस्तु–'रे मूढ ! त्वया गूढमंत्रेण किं कृत'मिति जनैर्निंद्यमानः सर्वथा मानभ्रष्टो भूत्वा तन्नगरं तत्याज। वसुश्च राज्यदेव्या वेगात् चपेटाप्रहारेण हतो दुरितकृतसाहाय्यात्सप्तमं नरकं ययौ। ततस्तस्यापराधिनः पट्टे यो यः पुत्र उपविष्टः स स क्रमेणाष्टौ यावद्देवतया हतः। यदुक्तं–यो यः वसुरुपाविक्षत्, पट्टे तस्यापराधिनः। स स देवतया जघ्ने, यावदष्टावनुक्रमात् ॥ १ ॥ न भुक्तमाजन्म कदापि भुक्त–मन्ते विषं हन्ति यथा मनुष्यम्। कदाप्यनुक्ता वितथा तथा गी–रुक्तावसाने वसुमाजघान ॥ २ ॥ इति द्वितीये व्रते वसुनृपकथानकं। इत्थं मृषावादविपाकं निशम्य सर्वेऽपि भव्या एतत्परिहारे तत्परा भवंतु, येन सर्वेष्टसिद्धिः संपद्यते। अत्र भावना—

थोवं पि अलियवयणं, जे न हु भासंति जीवियंते वि। सच्चे चेव रयाणं, तेसिं नमो सव्वसाहूणं ॥ १ ॥ इति भावितं द्वितीयं व्रतं २ ।

अथ तृतीयं स्थूलादत्तादानविरमणव्रतं भाव्यते-स्थूलं यददत्तादानमदत्तवस्तुग्रहणं तस्माद्विरमणं विरतिस्तद्रूपं यद्व्रतं तत्स्थूलादत्तादानविरमणव्रतमुच्यते सचित्तादिस्थूलवस्तुवर्जनरूपमित्यर्थः, तथाहि—

तइयवयंमि चइज्जा, सचित्ताचित्तथूलचोरिज्जं ।
तिणमाइतणुअतेणिय-मेसो पुण मोत्तुमसमत्थो ॥ १६ ॥

व्याख्या—गृहस्थस्तृतीये व्रतेऽदत्तादानविरतिरूपे सचित्तं द्विपदचतुष्पदादिकं, अचित्तं सुवर्णरूप्यादि, उपलक्षणत्वान्मिश्रं चालंकृतस्त्रीप्रभृतिकं वस्तु, तद्विषयं स्थूलं चौर्यं त्यजेत्, स्थूलत्वं चास्य स्थूलबुद्धेरपि निंद्यत्वाच्चौर्यव्यपदेशहेतुत्वाद्वा बोध्यं । तर्हि सूक्ष्मस्य का वार्ता ? इत्याह-तृणं नडादिशलाका तदादिकं, आदिशब्दान्नदीजलवनकुसुमकरीषघनादिकं तद्विषयं तनुकं सूक्ष्मं स्तैन्यं चौर्यमेष गृहस्थो मोक्तुमसमर्थः, तद्विना मार्गादौ चतुष्पदादीनां निर्वाहाभावात् । सूक्ष्मत्वं त्वस्य सूक्ष्म वस्तुविषयत्वात् सूक्ष्मदृष्टिभिस्त्याज्यत्वाद्वा बोध्यं । अथैतच्चौर्यं यावद्भिः प्रकारैस्त्याज्यं भवति तथा दर्श्यते—

नासीकयं निहिगयं, पडिअं वीसारिअं ठिअं नट्ठं ।
परअत्थं हीरंतो, नियअत्थं को विणासेइ ॥ १७ ॥

व्याख्या—न्यासीकृतं स्थापनिकायां मुक्तं १, निधिगतं निधानस्थं २, पतितं स्वभावाद्भ्रष्टं ३, विस्मारितं क्वचिद्व्यग्रचि-

चतया मुक्तं ४, स्थितं धनस्वामिनो मरणात्केनापि न गृहीतं ५, नष्टं गतं ६ एतावद्भिः प्रकारैः परार्थं नाम परद्रव्यं हरन् निजं स्वकीयं सकलसंपत्संपादनक्षमं पुण्यलक्षणमर्थं कः सचेतनो विनाशयति ? अपि तु न कश्चिदित्यर्थः ।

किं च परार्थग्रहणे सति न केवलं तृतीयव्रतभंगः, किं त्वाद्यव्रतभंगोऽपीत्युच्यते—

जंपइ मम त्ति जंपइ, तं तं जीवस्स बाहिरा पाणा ।
तिणमित्तं पि अदिन्नं, दयालुओ तो न गिण्हेइ ॥ १८ ॥

व्याख्या—यत्सचित्ताचित्तमिश्रवस्तु प्रतिप्राणि 'इदं मम' इति जल्पति, तत्तद्वस्तु जीवस्य बाह्याः प्राणा भवंति । द्विविधा हि प्राणाः—आभ्यंतरा बाह्याश्च । तत्राभ्यंतराः श्वासादयः, बाह्यास्तु ममत्वकारणं कनकादयः, तन्नाशस्य प्राणनाशस्येव दुःखहेतुत्वात् । यत एवं ततो दयालुः प्रत्याख्यातप्राणिवधः संस्तृणमात्रमप्यदत्तं परकीयं वस्तु न गृह्णाति । इहेदं हार्दं—पूर्वं यद्गृहिणोऽदत्ततृणादिग्रहणमनुज्ञातं तन्मार्गादौ निःस्वामिकतृणाद्यपेक्षं, इह तु तन्निषेधः स स्वामिकापेक्षो द्रष्टव्यः । दृश्यंते हि परसंचिततृणादिकमप्यदत्तं गृह्णंतश्चौरवद्वधबंधनादिकं लभमानाः । ततः परपरिगृहीतं तृणादिकमप्यदत्तं गृहिणा न गृहीतव्यमिति गाथार्थः । अथ ये विचारहीनचेतसश्चौर्येण श्रियमिच्छंति तानाश्रित्योच्यते—

कुलकित्तिकलंककरं, चोरिक्कं मा करेह कइयावि ।
इह वसणं पच्चक्खं, संदेहो अत्थलाभस्स ॥ १९ ॥

स्पष्टा। नवरं व्यसनं कारागारनिवासवधबंधकरकर्त्तनादिदुःखं, किं च—

काऊण चोरविर्त्तिं, जे अबुहा अहिलसंति संपत्तिं।
विसभक्खणेण जीविय-मिच्छंता ते विणस्संति ॥ २० ॥

एषापि सुगमार्था। अथोक्तलक्षणव्यतिरिक्तानां श्लाघ्यत्वं दर्श्यते—

ते धन्ना सप्पुरिसा, जेसिं मणो पासिऊण परभूइं।
एसा पराभूइच्चिय, एवं संकप्पणं कुणई ॥ २१ ॥

व्याख्या—येषां मनः परकीयां भूतिं संपत्तिं दृष्ट्वा एषा गृह्यमाणा सती वधबंधादिकारणत्वात्पराभूतिः पराभव एवेत्येवं संकल्पनं चिंतनं करोति, ते सत्पुरुषा धन्याः सुकृतिनो बोध्याः। ते हि पराभूतेरिव परभूतेरपि दूरीभावमेव भजंतीत्यर्थः॥

अथ चौर्यस्य फलं दर्श्यते—

वहबंधरोहमच्चू, चोरिज्जाओ हवंति इह लोए।
नरयनिवासधणक्खय-दारिद्दाइं च परलोए ॥ २२ ॥

स्पष्टा। नवरं वधो लकुटादिना प्रहारः, बंधो रज्ज्वादिना बंधनं, रोधः कारागृहादौ, मृत्युः शिरश्छेदादिना। अथादत्तादानत्यागस्य दृष्टांतगर्भितं फलमुच्यते—

जं इत्थ जणपसंसाइ, परभवे सुगइमाइ होइ फलं ।
मुक्के अदत्तदाने, तं जायं नागदत्तस्स ॥ २३ ॥

गाथार्थः सुगमः । भावार्थस्तु कथानकगम्यः, तच्चेदं—

वाणारस्यां नगर्यां जितशत्रुर्नाम राजासीत् । तत्र चैको धनदत्तनामा श्रेष्ठी वसति स्म । तस्य धनश्रीर्नाम भार्या । तयोश्च नागदत्तनामा पुत्रः । स च बाल्यावस्थायामेव सद्गुरुसंयोगाज्जिनधर्मश्रद्धामवाप्य संसाराद्विरक्तः सन् अदत्तादानविरमणव्रतं जग्राह, अन्यान्यपि व्रतानि नियमांश्च प्रपन्नवान् । एकदा तन्नगरश्रेष्ठिकन्यया नागवसुनाम्न्या जिनपूजार्थं जिनालये व्रजंतं मार्गे तं नागदत्तं दृष्ट्वा तद्रूपसौभाग्यादिमोहितया सत्या 'ममास्मिन् भवेऽयमेव भर्त्ताऽस्तु' इति मनसि निश्चयं विधाय स्वजनकं प्रति चिंतितार्थो निवेदितः । ततो जनकोऽपि तन्निश्चयं विज्ञाय नागदत्तपितुर्गृहं गत्वा तदग्रे स्वकन्याभिग्रहं निवेदयामास । तदा सांसारिकभोगमनिच्छतापि नागदत्तेन सह तस्या विवाहः संयोजितः । तत एकदा तन्नगरकोट्टपालस्तां कन्यां दृष्ट्वा तद्रूपमोहितः सन् श्रेष्ठिपार्श्वे स्वपुरुषान् संप्रेष्य तां मार्गितवान् । तदा श्रेष्ठिना भणितं—'एषा कन्या तु मया नागदत्ताय दत्तास्ति, ततो नान्यस्मै पुनर्दातुं शक्यते । 'सकृत्कन्याः प्रदीयंते' इति नीतिवचनात् ।' ततः कोट्टपालः स्वपुरुषमुखात्तां प्रवृत्तिं श्रुत्वा कुपितः सन् अहर्निशं नागदत्तस्य छलान्वेषणं चकार । अथैकदा चंचलतरमश्वमारुह्य राजवाटिकां गच्छतो राज्ञः कर्णात् कुंडलमपतत्, तच्च नगरे बहुधा गवेषितमपि न क्वापि लब्धं । तस्मिन्नवसरे जिनगृहं

गच्छता नागदत्तेन मार्गे तत्कुंडलं दृष्टापि स्वयमदत्तादानस्य प्रत्याख्यातत्वात्तदगृहीत्वा जिनगृहं गत्वा जिनपूजां विधाय श्रीजिनाग्रे कायोत्सर्गेण तस्थे । तस्मिन्नेवावसरे कुतश्चिद्दैवयोगात्तत्राप्तितः समागच्छता कोट्टपालेन तत्कुंडलं दृष्ट्वा झटिति ततो गृहीत्वा दुष्टबुद्ध्या नागदत्तशिरसि कलंकप्रदानार्थं सद्यो जिनालये आगत्य कायोत्सर्गस्थस्यैव तस्य कर्णे कुंडलं निक्षिप्य तं च गाढबंधनैर्बध्वा नृपसमीपे निन्ये । नृपेण च तस्य कर्णे स्वकुंडलदर्शनाच्चौरोऽयमिति निश्चित्य कुपितेन सता कोट्टपालं प्रति तद्वधादेशो दत्तः । ततः कोट्टपालोऽपि स्ववांछितार्थं सफलीभूतं मन्यमानो हृष्टः सन् नागदत्तं प्रति चौरमिव विडंबयन् नागवसोः श्रेष्ठिपुत्र्या गवाक्षाधो यावन्निर्गतस्तावत् नागवसुकन्या शुद्धश्रद्धालोः स्वभर्तुस्तदवस्थां विलोक्य स्वमनस्यतीव दुःखमुद्वहंती श्रीजिनमतापभ्राजनानिवारणार्थं स्वभर्तृसंकटस्फेटनार्थं च सद्यः स्वगृहजिनालये आगत्य शासनसुरीमनुस्मृत्य 'यदेदमकार्यं विलयं यास्यति तदाहं कायोत्सर्गं पारयिष्ये' इति मनसि निश्चयं विधाय धर्मध्यानं कुर्वती श्रीजिनप्रतिमाग्रे कायोत्सर्गेण तस्थौ । अथ स कोट्टपालस्तं नागदत्तं स्मशाने नीत्वा यावत् शूलिकामारोपयति स्म तावत् सा भग्ना, एवं वारत्रयं जातं । तदनंतरं पुनः श्रीजिनधर्ममाहात्म्यतः शासनसुरीकृतसाहाय्यात् शूलिकास्थाने सिंहासनं जातं । ये पुनस्तदानीं खड्गप्रहाराः कृतास्ते सर्वेऽपि माल्याभरणतां प्राप्ताः, ततो विस्मितैर्लोकैः सर्वोऽप्ययं व्यतिकरो नृपाग्रे निवेदितो । नृपोऽपि तत्प्रवृत्तिश्रवणादतिविस्मितः सन् सद्यस्तत्रागत्य नागदत्तं स्वर्णसिंहासनोपविष्टं विविधमाल्यालंकारविभूषितं च समीक्ष्य स्वकृतापराधं पुनः पुनः क्षामयित्वा नागदत्तं हस्तिस्कंधे समारोप्य महोत्सवेन पुरमध्ये प्रवेशयामास । तदवसरे तादृग्धर्मप्रभावदर्शनात्सर्वलोकाः सर्वेऽपि श्रीजिनधर्मप्रशंसां चक्रुः । तदा नागवसुकन्यापि नागदत्तं तथाविधाडंबरेण स्वगवाक्षाधो

निर्गच्छंतं विज्ञाय सद्यः कायोत्सर्गं पारयामास । ततो नृपेण तं कोट्टपालमसदूषणदायकं मत्वा रुष्टेन सता तत्सर्वस्वं गृहीत्वा सेवकेभ्यो हननाज्ञा दत्ता । तदा जीवदयापरेण नागदत्तेन स जीवन्मोचितः । ततो नागदत्तो नागवसुकन्यायाः स्वस्मिंस्तथाविधं तात्त्विकमनुरागं विज्ञाय मातापितृकृतमहोत्सवेन शुभलग्ने तां परिणीतवान् । ततश्चिरकालं तया सह सांसारिकसुखान्यनुभूय प्रांते सद्गुरुसमीपे दीक्षां गृहीत्वा सम्यक् संयममाराध्य समाधिना कालं कृत्वा देवपदं प्राप्तः । इति तृतीयव्रते नागदत्तकथानकं । एवमन्यैरपि भव्यजीवैः परमात्मसंपदमिच्छद्भिरदत्तादानत्यागो विधेयः, अत्र भावना—

इणमवि चिंतेअव्वं, अदिन्नदाणाओ निच्चविरयाणं । समतिणमणिमुत्ताणं, णमो सया सव्वसाहूणं ॥ १ ॥

इति भावितं तृतीयव्रतं ३ ॥ अथ चतुर्थं स्थूलमैथुनविरमणव्रतं भाव्यते—स्थूलं यन्मैथुनं सुरतं तद्विरमणरूपं यद्व्रतं तत्स्थूलमैथुनविरमणव्रतमुच्यते, परस्त्र्यादिवर्जनरूपमित्यर्थः तच्चैवं—

ओरालिय वेउव्विय, परदारासेवणं पमुत्तूणं ।
गेही वए चउत्थे, सदारतुट्ठिं पवज्जिज्जा ॥ २४ ॥

व्याख्या—औदारिका वैक्रियाश्च ये परेषामात्मव्यतिरिक्तानां नरतिर्यक्त्रिदशानां दाराः परिणीतसंगृहीतभेदानि कलत्राणि नार्यस्तिरश्च्यो देव्यश्च, तासामासेवनमुपभोगं प्रमुच्य गेही गृहस्थश्चतुर्थे व्रते स्वदारसंतुष्टिं प्रपद्येत । यथा परदारांस्तथा वेश्यामपि वर्जयन् स्वदारैरेव तुष्येदिति भावः । ननु श्रावकाणां वैरादिदोषजनकत्वात्परदारसंसर्गस्तु न युक्तः, परं या

नदीनीरवत्सर्वसाधारणाः साधारणस्त्रियस्तदुपभोगे को दोषः ? इति चेन्नैवं, तदुपभोगस्यापि सर्वदुराचारशिक्षाया मूलत्वेनेह लोके परलोके च महादुःखहेतुत्वात्परित्याग एव युक्तः, किं च—

जंपंति महुरवयणं, वयणं दंसंति चंदमिव सोमं ।
तह वि न वीससिअव्वं, नेहविमुक्काण वेसाणं ॥ २५ ॥

व्याख्या—यद्यप्येताः श्लक्ष्णीकृतशर्करामिलितदुग्धवत् मधुरं वचनं जल्पंति, तथा चंद्रमिव सौम्यं,प्रसन्नं वदनं दर्शयंति, तथापि स्नेहविमुक्तानां स्नेहरहितानां वेश्यानां न विश्वसितव्यं विश्वासो नैव कार्य इत्यर्थः । यतः–मा जाणह जह मउअं, वेसाहिअअं समम्मसुल्लावं। सेवालबद्धपत्थर–सरिसं पडणेण जाणिहिसि ॥१॥ अथ दृष्टांतगर्भं वेश्यानामनासेव्यत्वं दर्शयते—

तह अम्मापिउमरणं, सोऊणं दुण्ह रायपुत्ताणं ।
मणसा वि न माणिज्जा, दुरभिणिवेसाओ वेसाओ ॥ २६ ॥

व्याख्या—द्वयोर्वक्ष्यमाणयो राजपुत्रयोस्तथा तेन प्रकारेण मातापितृमरणं श्रुत्वा, उपलक्षणादात्मनोस्तु तयोर्निधनदुःखावाप्त्यादिकं श्रुत्वा विवेकी दुरभिनिवेशा दुष्टाध्यवसाया वेश्या मनसापि न मानयेत्, किमुत वचनकायाभ्यामित्यर्थः । तथा च श्रूयते श्रीशांतिचरित्रे—

इह रत्नपुरं नाम नगरं। तत्र श्रीषोडशजिनेशजीवत्वादत्यद्भुतभाग्यसौभाग्ययुक्तः श्रीषेणो नाम राजा, तस्याभिनंदिता शिखिनंदिता चेति द्वे वल्लभे अभूतां। तस्य च राज्ञो द्वौ कुमारौ। तौ चोपाध्यायेन पाठितावपि चित्तस्य दुर्निवारत्वात् अनंगवीरस्य च दुर्जयत्वात् गुरुशिक्षां निरस्य निजां प्रसिद्धिं चावगणय्य त्रपाभरं च परित्यज्य तन्नगरनिवासिन्यां स्वरूपनिर्जितसुरांगनायां अनंगसेनायां गणिकायामनुरक्तौ बभूवतुः। तदा रहसि पित्रा शिक्षितौ–'हे वत्सौ! किमेतद्यौवने युवाभ्यामनुष्ठीयते ? न ह्यतः परं महत्त्वभंगस्य किमपि कारणमस्ति, यन्मुग्धहृदयाः कुलवधूरवधूय परमार्थतो निःस्नेहासु वेश्यास्वनुरागो बध्यते।' एवं पित्रा शिक्षितावपि तौ यदावगणितकशाघातौ तुरगाविव समुन्मूलितालानौ द्विरदाविव यथेष्टमेव जृंभमाणौ एकद्रव्याभिलाषित्वान्मिथःकृतरुटकबंधौ गृहीतखड्गादिप्रहरणौ निर्लज्जतया वैरिणाविव कलहायेते स्म। तदाऽसाध्यव्याधिग्रस्ताविव प्रबलपिशाचच्छलिताविव तावशक्यप्रतिकारावबुध्य तद्दुःखाद्दारद्वयसमन्वितेन भूपालेन कालकूटभक्षणात्कालः कृतः। तावपि लोकैर्निंद्यमानौ परस्परं युद्ध्यमानौ महादुःखभाजौ बभूवतुः। तदेवं वेश्याव्यसनं दुरंतमवबुध्य सुबुद्धिभिर्न समाचरणीयं। ततश्च परस्त्रीषु साधारणस्त्रीषु च कामसंसर्गं परित्यज्य सुश्रावकेण स्वदारसंतुष्टेन भाव्यं, अन्यथा कामांधत्वापत्तेः, कामांधत्वं च श्रावकाणामनुचितमेव तथाहि—

कामं कामंधेणं, न सावएणं कयावि होयव्वं ।
देहधणधम्मखयका–रिणी हि कामम्मि अइगिद्धी ॥ २७ ॥

व्याख्या—श्रावकेण कदापि काममत्यर्थं कामेन मैथुनाभिलाषेणांध इव आच्छादितविवेकदृक्त्वात्कामांधः, एवंविधेन न भाव्यं, कामांधत्वे दोषमाह—देहेत्यादि हि यस्मात्कारणात् कामेऽतिगृद्धिरतिलोलुपता देहधनधर्माणां क्षयकारिणी विद्यते इति। एवं कामांधत्वे दोषान् विज्ञाय न हि स्वदारेष्वपि अत्यंतगृद्धिर्गृहिणा कार्या। तदेवमुक्तं पुरुषानाश्रित्य शीलस्वरूपं अथ नारीः प्रतीत्य तदुच्यते—

जह नारीउ नराणं, तह ताण नरा वि पासभूयाओ।
तम्हा नारीओ वि हु, परपुरिसपसंगमुज्झंति ॥ २८ ॥

व्याख्या—इह संयमारामे चरतां मृगाणामिव नराणां नार्यः सद्गतिविघ्नहेतुत्वाद्यथा पाशभूताः संति तथा तासां नारीणामपि नराः पाशभूता भवंति, कामस्योभयात्रावलंबित्वात्। यस्मादेवं तस्माद्यथा शीलाभिलाषिणः पुरुषाः परस्त्रीसंगं वर्जयंति तथा नार्योऽपि परैः स्वभर्तृव्यतिरिक्तैः पुरुषैः सह प्रसंगं रहोऽवस्थानवक्रवीक्षणमन्मनोल्लापादिकामोद्दीपकपरिचयं परिहरंति। एतेन ब्रह्मव्रतमाद्रियमाणया स्त्रिया स्वभर्तृवर्जस्य सामान्यतः पुरुषमात्रस्य वर्जनं कार्यमिति निवेदितं।

अथ सुशीलानां दुःशीलानां चांतरं गाथाद्वयेनोच्यते—

ते सुरगिरिणो वि गुरू, जेसिं सीलेण निम्मला बुद्धी।
गयसीलगुणा पुण मुण, मणुए तणुए तिणाओ वि ॥ २९ ॥

वग्घाइया भयट्ठा, दुट्ठा वि जिआ न सीलवंताणं ।
नियछायं पि निरक्खिय, सासंका हुंति गयसीला ॥ ३० ॥

व्याख्या—ते मनुष्याः सुरगिरेर्मेरोरपि गुरवो येषां बुद्धिः शीलेन निर्मला भवति, मेरोर्लक्षयोजनमानत्वात्, तेषां तु यशःशरीरस्य त्रिभुवनव्यापकत्वात् । तथा गतशीलगुणान् मनुजान् तृणादपि तनुकान् लघून् जानीहि । तृणं हि लघुत्वाद्वायुना ह्रियमाणमपि क्वचिद्गिरिपाषाणादौ स्खलितमवतिष्ठते, परं कुशीललघुस्तु बहुसंचितदुःकृतप्रेरितस्त्रैलोक्यमपि भ्रमन् न लभते क्वचिदवस्थितिमित्यस्य तृणादपि लघुत्वं। तथा व्याघ्र आदिर्येषां सर्पाग्निपिशाचादीनां ते व्याघ्रादयो दुष्टा अपि जीवाः शीलवतां न भयार्था भयहेतवो न भवंतीत्यर्थः । तथा गतशीलाः पुरुषास्तु निजच्छायामपि निरीक्ष्य मास्मदुःकर्मगवेषक एषः कोऽपि पुरुषो भूदिति स्वमतिकल्पनयैव साशंकाः सभया भवंति। उक्तं च—सर्वत्र शुचयो धीराः, स्वकर्मबलगर्विताः । कुकर्मनिरतात्मानः, पापाः सर्वत्र शंकिताः ॥ १ ॥ अथ यदुक्तं शीलवतां न कुतोऽपि भयं प्रभवति तदेव विशेषत उच्यते—

जलणो वि जलं जलही वि, गोपयं विसहरा वि रज्जूओ ।
सीलजुआणं मत्ता, करिणो हरिणोवमा हुंति ॥ ३१ ॥

स्पष्टेयं, एवं शीलस्य सकलापायविध्वंसकत्वमुपदर्श्याथाभीष्टलाभनिबंधनत्वमुच्यते—

वित्थरइ जसं वड्ढइ, वलं च विलसांति विविहरिद्धीओ ।
सेवंति सुरा सिज्झंति, मंतविज्जा य सीलेणं ॥ ३२ ॥

सुबोधा । अथ शीलस्य सर्वालंकारसारता दर्श्यते—

किं मंडणेहि कज्जं, जइ सीलेण अलंकिओ देहो ।
किं मंडणेहिं कज्जं, जइ सीले हुज्ज संदेहो ॥ ३३ ॥

उत्तानार्था । शीलालंकरणे सति अन्यालंकाराणां चर्वितचर्वणन्यायेनानर्थकत्वात्, शीलं विना तु तेषां भारमात्रफलत्वादिति भावः । ननु भवतु दृढहृदयत्वात्पुरुषाणां सौशील्यं, स्त्रियस्तु तुच्छहृदयाश्चपलस्वभावाः पुरुषपराधीनाश्च, तासु कथं सुशीलत्वं संभवेदिति चेन्नैवं, न हि सर्वा अपि स्त्रिय एकस्वभावा एव भवंति, तास्वपि बहूनां सुशीलत्वादिसुधर्मानुष्ठानशालित्वस्य शास्त्रे श्रवणात् । तथाहि—

नारीओ वि अणेगा, सीलगुणेणं जयम्मि विक्खाया ।
जासिं चरित्तसवणे, मुणिणो वि मणे चमक्कंति ॥ ३४ ॥

व्याख्या—नार्योऽप्यनेकाः सुभद्रासीताद्रौपद्यादयः शीलगुणेन जगति विख्याताः प्रसिद्धिपात्रं जाताः, यासां चरित्र-

स्यात्यद्भुताचारस्य श्रवणे सति आस्तामन्यः सामान्यलोकः, मुनयोऽपि मनसि चमत्क्रियंते, चमत्कारचिह्नं च प्रणामादिकमपि कुर्वंति । यदाहुः—अज्जाओ बंभिसुंदरि–राइमईचंदणापमुक्खाओ । कालत्तए वि जाओ, ताओ वि नमामि भावेण ॥१॥ त्ति । इह यद्यपि धर्मः पुरुषप्रभवः, ग्रंथाश्च पुरुषकर्तृकाः, पुरुषाणां च स्त्रियः पाशभूता इति व्यवहारनयमवलंबमानैः प्रायः परमर्षिभिरपि प्रमदा निंदिता एव । यदाहुः—सोअसरी दुरिअदरी, कवडकुडी महिलिआ किलेसकरी । वइरविरोअणअरणी, दुक्खखणी सुक्खपडिवक्खा ॥ १ ॥ इति । तथापि निश्चयनये विचार्यमाणे पुरुषत्वं स्त्रीत्वं वा न स्तुतिनिंदयोर्हेतुर्भवति, सौशील्यदौःशील्ययोरेव तन्निबंधनत्वात् । तथाहि—

इत्थिं वा पुरिसं वा, निस्संकं नमसु सीलगुणपुट्ठं ।
इत्थिं वा पुरिसं वा, चयसु लहुं सीलपब्भट्ठं ॥ ३५ ॥

स्पष्टा । अथ दौःशील्यस्य फलं दर्शयते—

पंडुत्तं पंडत्तं, दोहग्गमरूवया य अबलत्तं ।
दुस्सीलयालयाए, इणमो कुसुमं फलं नरओ ॥ ३६ ॥

व्याख्या—पांडुत्वं कुष्टं पांडुरोगो वा, पंडत्वं क्लीबत्वं, शेषं सुगमं । अथ सौशील्यस्य फलं दर्शयते—

अरुग्गं सोहग्गं, संघयणं रूवमाउबलमउलं ।
अन्नं पि किं आदिज्जं, सीलव्वयकप्परुक्खस्स ॥ ३७ ॥

स्पष्टार्थां । अथ चतुर्थं व्रतं दृष्टान्तेन वर्ण्यते--

चालणिजलेण चंपा, जीए उग्घाडियं कवाडतिअं ।
कस्स न हरेइ चित्तं, तीए चरिअं सुभद्दाए ॥ ३८ ॥

व्याख्या—यया सुभद्रया चालिन्या कृत्वा कूपाज्जलमाकृष्य तेन जलेन चंपानगर्याः कपाटत्रयमुद्घाटितं तस्याश्चरितं कस्य पुरुषस्य चित्तं न हरति ? अपि तु सर्वस्येत्यर्थः। एतत्सर्वं शीलस्यैव माहात्म्यं बोध्यं। इह सुभद्रावृत्तांतस्त्वित्थं-

चंपापुरे जिनदासनामा श्रावको वसति स्म। तस्यात्यंतशीलवल्लभा जिनमती नाम्नी वल्लभाऽभूत्। तयोः सुभद्राख्या सुता। सा च बाल्यादेव शुद्धसम्यक्त्वधारिका महाश्राविकाऽभवत्। तद्रूपमोहितैर्बहुभिर्मिथ्यात्विवणिक्पुत्रैः प्रार्थितापि काकेभ्यः पायसमिव मिथ्यात्विभ्यस्तेभ्यो जिनदासेन न दत्ता। अन्यदा बौद्धधर्मविशारदो बुद्धदासो नाम वणिक्पुत्रो वाणिज्यार्थं चंपातस्तत्रागात्। तेन कदापि व्यापारार्थं श्रेष्ठिगृहमागतेन तां सुभद्रां दृष्ट्वा पाणिग्रहार्थं याचिता, परं तज्जनकस्तस्मै मिथ्यादृष्टित्वान्न ददौ। तदा स कन्यार्थी दंभतो जैनमुनिसेवनया श्रावकाचारं शिक्षित्वा कपटश्रावको बभूव। श्रद्धां

विनापि नित्यं देवपूजनसाधुसेवनावश्यकादिधर्मकृत्यानि कुर्वाणः स तिष्ठति स्म । ततस्तस्य जिनदासेन सह मैत्री जाता, तदा श्रेष्ठिना मित्रत्वात्साधर्मिकत्वाच्च तस्मै सुभद्रा परिणायिता । ततः स बुद्धदासस्तया सह वैषयिकं सुखं भुंजानः सुखेन कालं गमयन् तत्र प्रभूततरं द्रव्यमुपार्ज्य स्वदेशगमनार्थमेकदा विनयेन श्वशुरमापृच्छत । तदा श्रेष्ठिनोक्तं-'हे वत्स ! त्वया साधूक्तं, परं ते मातापितरौ वैधर्मिकौ वर्त्तेते, अत उच्यते तौ महिषौ वडवामिवेमां कथं सहिष्येते ? ।' जामात्रोक्तं-'एतामहं पृथग्गृहे स्थापयिष्यामि; एतद्विषया भवद्भिः कापि चिंता न कार्या, मह्यं गमनाज्ञा दीयतां ।' श्वशुरेणोक्तं-'तव पंथानः कुशलिनः संतु ।' ततः स श्वशुरादेशात्सुभद्रया सार्द्धं यानारूढो मार्गे चलन् क्रमेण चंपां प्राप्य तां पृथगावासे स्थापयित्वा स्वयं निजगृहं गत्वा मातापितृभ्यां मिलितः । तत्र सर्वमपि पूर्ववृत्तांतमुक्त्वा स्वकार्यपरः सन् स्वगृहेऽस्थात् । अथ सा सुभद्रा तत्रस्था सती निश्छद्मवृत्त्याऽर्हतं धर्मं सिषेवे । परं तस्याः श्वश्रूर्ननांदा च तस्याश्छिद्रं ददृशतुः । एवं काले याति सति एकदा भक्तपानाद्यर्थं साधवस्तद्गृहमागता आसन् । तदा श्वश्रूननांद्राद्या बुद्धदासं प्रोचुः-'मोस्त्वद्वधूर्जैनमुनिभिः सार्द्धं रमते ।' स प्राह-'अहो एवं न वक्तव्यं, यत एषा महासती सुकुलीना जैनधर्मरक्तास्ति, नैषा कुशीला, यूयं धर्ममात्सर्येणैवं ब्रूथ, परं युष्माकमेवं वक्तुं न घटते ।' इति तद्वचः श्रुत्वाऽतिमात्सर्यं बिभ्राणास्ता विशेषतोऽस्याश्छिद्रान्वेषणं कुर्वंति स्म । अथैकदा तद्गृहे भिक्षार्थं साधुरागमत् । तस्य नेत्रे पवनांदोलितं तृणं पपात, परं जिनकल्पिकत्वात् शरीरसंस्कारविमुखः स साधुस्तत्तृणं नापनयति स्म, ततो भिक्षां प्रयच्छंती सुभद्रा तस्य चक्षुषि व्यथामाशंक्य, जिह्वाग्रेण लाघवात्तत्तृणमाचकर्ष । तदा तस्याः कुंकुमतिलकं मुनिभाले लग्नं । ततो गृहाद्बहिर्निर्ग-

च्छंतं तं मुनिं सतिलकभालं दृष्ट्वा बुद्धदासजननी पुत्रं प्रति दर्शयामास उक्तवती च-'हे वत्स! वध्वाः शीलं पश्य।' ततो बुद्धदासोऽपि तदभिज्ञानबलात् तद्वचनं प्रतिपद्य तद्दिनादेव तस्यां विरक्तो जातः।

अथ सा सती पतिं निःस्नेहं ज्ञात्वा मनसि दध्यौ-'अहो मन्निमित्तकः श्रीजिनशासने आकस्मिकोऽयमपवादः समुपस्थितः, अथ जीवितत्यागेनापि एतन्मालिन्यं चेदपाकरोमि तर्हि वरं' इति ध्यात्वा एवमभिग्रहमकरोत्-'यावदिदं मालिन्यं नो दूरीभविष्यति तावत्कायोत्सर्गं न पारयिष्यामीति।' ततो जिनपूजां विधाय शासनसुरीं मनसि निधाय संध्यायां गृहस्यैकांतदेशे सा कायोत्सर्गेण तस्थौ। तदा सम्यग्ध्यानाकृष्टा शासनसुरी प्रादुर्भूय प्रीत्या तां बभाषे-'हे वत्से! त्वत्समाहूताऽहं समेतास्मि, शीघ्रं ब्रूहि, किं ते समीहितं कुर्वे?।' एतत् श्रुत्वा सुभद्रापि कायोत्सर्गं पारयित्वा मुदितमनाः सती तां नत्वा प्राह-'हे देवि! शासनस्यायं कलंकोऽपनीयतां।' देवी प्राह-'हे वत्से! त्वं खेदं मा उद्वह, तत् कलंकापनोदार्थं जिनशासनप्रभावनार्थं च प्रातः सर्वं शुभं करिष्ये, त्वं निश्चिंता सती शयनं कुरु।' इत्युक्त्वा देवी तिरोऽभूत्। सुभद्रापि निद्रां कृत्वा प्रातर्जागृता देवगुरुस्मरणपूजनादिनित्यक्रियां चकार। अथ प्रातर्द्वारपालैराकृष्यमाणा अपि पुरप्रतोलीद्वारकपाटाः कथमपि नोद्घटंते स्म। तदा निखिलेऽपि द्विपदचतुष्पदादिभूलोके क्षुत्तृषादिना व्याकुलीभूते सति नृपोऽपि भृशं व्याकुलतां भेजे। ततो भूपतिस्तद्दैवतं कर्म मत्वा स्वयं शुचीभूय धूपोत्क्षेपपूर्वकं प्रांजलिः सन् जगाद-'श्रूयतां भो देवदानवाः! यः कोऽपि ममोपरि कुपितो भवेत् स पुष्पधूपादिबलिं लात्वा प्रसन्नो भवतु।' इति राज्ञोक्ते सति व्योम्नीत्थं वचः प्रादुर्बभूव-

जलमुद्धृत्य चालिन्या, स्नपनस्तंतुबद्धया। काचिन्महासती पुर्याः, कपाटांश्चुलुकैस्त्रिभिः ॥ १ ॥

आच्छोदयति चेच्छीघ्र-मुद्घटंतेऽखिला अपि। कपाटा द्वारदेशस्था, नो चेन्नैव कदाचन ॥ २ ॥

एतां वाचं निशम्य ब्राह्मणीक्षत्रियावैश्याशूद्रीप्रमुखा बह्व्यो नगरनार्यः कूपोपकंठे समागत्य चालिन्या वारि गृह्णानाः सूत्रतंतुत्रुटनाच्चालिन्याः पतनाच्च तज्जलमप्राप्य विमनस्कतां प्राप्ताः सत्यः स्वस्वस्थानं जग्मुः। तस्मिन् समये विनीतात्मा सुभद्रा श्वश्रूं मधुरस्वरेण जगौ-'हे मातस्त्वदाज्ञयाहं चालिन्या जलमाकर्ष्य तेन पूर्द्वारोद्घाटनं कर्तुमिच्छामि।' श्वश्रूराख्यत्-'हे जैनमुनिसेवके! तव सतीत्वं तु पुरा मया ज्ञातमेव, सांप्रतं सर्वलोकानां ज्ञापनेन किं प्रयोजनं? एताः सर्वा अपि नार्यः पूर्द्वारोद्घाटने न क्षमा जातास्तर्हि त्वं कथं क्षमा भविष्यसि?।' सुभद्रोवाच-'मातस्त्वया युक्तमुक्तं, तथाप्यहं पंचाचारेण स्वपरीक्षणं करिष्ये, एतदर्थं त्वया न निषेध्या।' एवमुक्त्वा सा महामती ननांद्रादिभिर्हस्यमानापि स्नानं कृत्वा देवपूजनगुरुनमनपूर्वकं कूपोपकंठे गत्वा नमस्कारमंत्रमुच्चार्य शासनसुरीं संस्मृत्य सूर्याभिमुखीभूयैवं प्रोवाच-'यदहं जैनी तथा शीलालंकारधारिणी अभूवं तदा चालिन्या कूपाज्जलं निसरतु।' इत्युक्त्वा सूत्रतंतुभिर्बद्धां चालिनीं कूपे मुक्त्वा तत्क्षणं जलमाचकर्ष। तदैतच्छीलमाहात्म्यं दृष्ट्वा सपरिवारो राजा प्रांजलिः सन् पुरोभूयैवमवादीत्-'हे पतिव्रते! पुरीद्वाराण्युद्घाटय सर्वलोकसंकटं च निवारय।' साप्येवं राज्ञोक्ता सती पौरलोकपरिवृता विकसन्मुखनेत्रा बंदिकृतजयजयशब्दा प्रथमं दक्षिणस्यां दिशि पूर्द्वारं प्राप्य परमेष्ठिनमस्कारमुच्चरंती त्रिभिश्चुलुकैर्द्वारमाच्छोटयामास। तदा जांगुलीमंत्रजापाद्विषार्तस्य नेत्रे इव पूर्द्वारकपाटौ सद्य उद्घटेते स्म, व्योम्नि च दुंदुभयो नेदुः, पुरीजनाश्च तां तुष्टुवुः, देवैश्च जिनधर्ममाश्रित्य जयजयारावश्चक्रे। तत इत्थं पश्चिमोत्तरप्रतोल्योरपि द्वारद्वयं समुद्घाट्य तया प्रोक्तं-'मया किलैतानि त्रीणि द्वाराण्युद्घा-

टितानि। अथ याऽपरांगना सतीत्वस्य गर्वं वहेत् सैतच्चतुर्थं द्वारं समुद्घाटयतु। परं तत् कयापि नोद्घाटितं, तच्च द्वारमद्यापि मुद्रितमस्तीति श्रूयते। श्वश्रूननांद्राद्या दुर्जनास्तदानीं श्याममुखा जाताः। तथा स्वस्त्रियः शीलं दृष्ट्वा भर्तुर्मुखं शरच्चंद्रमिव दीप्यमानं जातं। ततः पौरलोकैः स्तूयमानगुणा सा सुभद्रा सती तन्नगरस्वामिना सद्वस्त्रालंकारादिदानपूर्वकं महोत्सवेन स्वं सदनं प्रापिता। तदा च तया महासत्या प्रतिबोधितः सर्वोऽपि नृपादिलोको जैनधर्मं स्वीकृत्य तां सतीं स्तुत्वा स्वस्थानमगमत्। पश्चात्तापपरेण तत्कुटुंबेनापि तदंतिके जैनधर्मोऽगीकृतः, बुद्धदासनामा तत्पतिश्च तद्दिनादारभ्य सत्यश्रावको भूत्वा तया सह सुखेन सत्प्रीत्या कालं गमयामास। एवमुभावपि चिरं गृहस्थधर्मं प्रपाल्यांते संयममाराध्य सद्गतिभाजनं बभूवतुः। इति चतुर्थव्रते सुभद्राकथानकं। एवं शीलमाहात्म्यं श्रुत्वान्यैरपि भव्यात्मभिः सच्छीलपालने सादरैर्भाव्यं। अत्र भावना—

चिंतेअव्वं च नमो, तेसिं तिविहेण जेहिं अबंभं। चत्तं अहम्ममूलं, मूलं भवगब्भवासाणं ॥ १ ॥ इति भावितं चतुर्थं व्रतं ४।

अथ पंचमं स्थूलपरिग्रहविरमणव्रतं भाव्यते—स्थूलो यः परिग्रहस्तद्विरमणरूपं यद्व्रतं तत्स्थूलपरिग्रहविरमणव्रतमुच्यते, क्षेत्रादिनवविधपरिग्रहपरिमाणरूपमित्यर्थः। तथाहि—

> गेही गिद्धिमणंतं, परिहरिय परिग्गहे नवविहंमि।
>
> पंचमवए पमाणं, करेज्ज इच्छाणुमाणेणं ॥ ३९ ॥

व्याख्या—पंचमे परिग्रहविरत्याख्ये व्रते गेही गृहस्थोऽनंतां गृद्धिं लिप्सां परिहृत्य नवविधे परिग्रहे प्रमाणं कुर्यात्,

इदमेतावन्मम मुत्कलमिति । परिग्रहस्य नवविधत्वं तु क्षेत्र १ वास्तु २ हिरण्य ३ सुवर्ण ४ धन ५ धान्य ६ द्विपद ७ चतुष्पद ८ कुप्य ९ भेदाद्भवति । तत्र क्षेत्रं धान्योत्पत्तिभूमिस्तात्रिविधं-सेतुकेतूभयभेदात् । तत्र सेतुक्षेत्रं यदरघट्टादिजलेन सिच्यते १, केतुक्षेत्रमाकाशोदकनिष्पाद्यसस्यं २, उभयक्षेत्रं तूभयजलनिष्पाद्यसस्यमिति ३ । वास्तु गृहहट्टादि ग्रामनगरादि च, तत्र गृहं त्रिविधं, खातोच्छ्रिततदुभयभेदात्, तत्र खातं भूमिगृहादि १, उच्छ्रितं प्रासादादि २, तदुभयं भूमिगृहोपरिस्थः प्रासाद इति ३ । हिरण्यं रजतं । सुवर्णं प्रसिद्धं । धनं गणिमादिभेदाच्चतुर्विधं, तत्र गणिमं पूगिजातिफलादि १, धरिमं कुंकुमगुडादि २, मेयं घृतलवणादि ३, परीक्ष्यं रत्नवस्त्रादि ४ । धान्यं व्रीह्यादिसप्तदशविधं, यदाहुः-व्रीहिर्यवो मसूरो, गोधूमो मुद्गमाषतिलचणकाः । अणवः प्रियंगुकोद्रव-मकुष्ठकाः शालिराढक्यः ॥१॥ किं च कलायकुलत्थौ, शणः सप्तदशापि धान्यानि इति । ग्रंथांतरे चतुर्विंशतिविधमपि प्रोक्तमस्ति । द्विपदानि कलत्रदासदासीशुकसारिकादीनि । चतुष्पदानि गोमहिष्यश्वोष्ट्रादीनि । कुप्यं शयनासनरथशकटहलमृद्भांडस्थालकचोलकादिगृहोपस्कर इति । ननु कथं प्रमाणं कुर्यादित्याशंक्याह-इच्छानुमानेन स्वकल्पनानुरोधेन । अयं भावः-यदीच्छानिवृत्तिः स्यात्तदा नियमरक्षणे यावान् परिग्रहः सत्तायामस्ति ततोऽप्यूनः कार्यः, शेषं धर्मस्थाने नियुंजीत । यद्वा सत्तानुमानेन नियमं गृह्णीयादानंदादिवत् । यदि पुनर्नास्तीच्छानिरोधस्तदा सत्तातोऽप्यधिकं द्विगुणं चतुर्गुणं वा मुत्कलीकृत्य शेषं नियमयेत् । अत्र कश्चिदाह-ननु असतः परिग्रहस्य निषेधेन योऽयं व्रतांगीकारः स मरुमरीचिकावारिभिः स्नानमिव कस्य न हास्यास्पदं स्यात् ? इत्यत्रोच्यते-नैवं, भाग्ययोगेन कालांतरे इच्छानुरूपक्षेत्रादिसंपत्तावपि अधिकस्यारंभस्याभवनात्, असंपत्तौ वा इच्छानंत्यनिरोधाच्चास्त्येव व्रतस्वीकारः सफलः । यदुक्तं-परिमि-

अपुरयोसंतो, अपरिमिअणंतयं परिहरंतो । पावइ परंमि लोए, अपरिमिअमणंतयं सुक्खं ॥ १ ॥ ननु किमनेन परिग्रहपरिमाणेन ? इच्छाअधिकस्तु लाभे सति स्वयमेवेच्छा शमिष्यति, भोजने कृते बुभुक्षावत्, इति चेन्न, परिपूर्णसमृद्धिलाभे सत्यपि इच्छाया अवृत्तत्वात् । यदुक्तं-जह जह लहइ रिद्धिं, तह तह लोहो वि वड्ढए बहुओ। लहिऊण दारुभारं, किं अग्गी कह वि निज्झाइ ॥ १ ॥ अथ परिग्रहस्य सकलक्लेशमूलता दर्श्यते—

सेवंति पहुं लंघंति, सायरं सायरं भमंति भुवं ।
विवरं विसंति निवसंति, पिउवणे परिग्गहे निरया ॥ ४० ॥

व्याख्या—परिग्रहे द्रव्यादिसंचये निरता एकाग्रचित्ताः प्राणिनः प्रभुं धनस्वामिनं सेवंते, सागरं लंघंति, सादरं यथा स्यात्तथा भुवं भ्रमंति, तथा निद्धरणाद्यर्थं विवरं गिरिकंदरं प्रविशंति, पुनर्मंत्रादिसिद्धये पितृवने श्मशाने निवसंति । यत एवं दुःखहेतुः परिग्रहस्ततः संतोष एव श्रेयान् संतोषवता हि निर्धनेनापि इंद्राधिकं सुखमनुभूयते । तथाहि—

संतोसगुणेण अकिं-चणो वि इंदाहियं सुहं लहइ ।
इंदस्स वि रिद्धिं, पाविऊण ऊणोच्चिय अतुट्ठो ॥ ४१ ॥

सुगमार्था । अथोक्तलक्षणपरिग्रहप्रमाणस्वरूपस्य संतोषस्य दृष्टांतगर्भं विवेकमूलकत्वं दर्श्यते—

विवेकः सद्गुणश्रेणि—हेतुर्निगदितो जिनैः । संतोषादिगुणः कोऽपि, प्राप्यते न हि तं विना ।४२।
प्रादुर्भावे विवेकस्य, गुणाः सर्वेऽपि शोभनाः । स्वयमेवाश्रयंते हि, भव्यात्मानं यथा धनं ।४३।

श्लोकार्थः सुगमः । भावार्थस्तु धनवृत्तांतादवसेयः । स चैवं—

एकस्मिन्नगरे श्रीपतिर्नाम महाधनवान् श्रेष्ठी वसति स्म । तस्य धननामा पुत्रोऽभूत्, स च पित्रा महेभ्यगृहे परिणायितः । एकदा सर्वसूरिगुणालंकृताः श्रीसोमाचार्यास्तत्र समेताः, बहवो भव्यलोकास्तद्वंदनार्थं गताः, श्रीपतिश्रेष्ठ्यपि तत्र गतः, सूरिभिर्देशना दत्ता, तत्र च परिग्रहप्रमाणव्रतस्वरूपं विशेषतो वर्णितं, तदा देशनांते समुत्पन्नविवेकेन श्रीपतिश्रेष्ठिना सूरीणां पार्श्वे तद्व्रतं गृहीतं । अन्यैरपि श्रावकैर्विविधा नियमाः स्वीकृताः, ततस्ते सर्वेऽपि गुरुं नत्वा स्वस्वगृहं प्राप्ताः । तदनंतरं श्रीपतिश्रेष्ठिना स्वनियमितद्रव्यादतिरिक्तं द्रव्यं सद्धर्मस्थानेषु व्यापारयताऽर्हच्चैत्यनिर्मापणस्य महाफलं विज्ञायैकं महज्जिनचैत्यं कारितं, तत्र च शुभमुहूर्त्ते सत्परिकरोपशोभिता श्रीजिनेंद्रप्रतिमा स्थापिता । ततः स प्रत्यहं श्रीजिनपूजां कुर्वन् सत्पात्रेभ्यो भक्त्या दानं प्रयच्छन् क्रमेणायुषि पूर्णे सति शुभध्यानेन कालं कृत्वा सद्गतिं जगाम । तदा स्वजनैः संभूय तदंगजो धननामा तत्स्थाने स्थापितः, परं स लोभग्रस्तत्वादतिकृपणो निर्विवेकश्च सन् एवं चिंतयति स्म—'अहो ! मत्पित्रा ग्रथिलीभूतेन चैत्यनिर्मापणादिना व्यर्थ एवायं द्रव्यव्ययो विहितः, अथाहं मूलद्रव्यव्ययकारणानि निवार्य पुनर्नव्यद्रव्योत्पादने प्रयतो भवेयमिति' विचिंत्य स स्वनिवासगृहव्यतिरिक्तानि सर्वाण्यपि गृहाद्वादिस्थानानि विक्रीणीते स्म ।

दासदासीप्रभृत्युपजीविवर्गमपि सर्वं विसृजति स्म । चैत्यपूजाप्रभावनादि सद्धर्मकृत्यान्यपि वर्जति स्म । स्वयं चैकं जीर्णं वस्त्रं परिधाय स्कंधे कोस्थलकं गृहीत्वा एकाकी सन् तैलगुडादिक्रयविक्रयार्थं प्रतिग्रामं भ्रमति स्म । भोजनसमये स तैलमिश्रितजीर्णकुलत्थादिनीरसाहारं करोति स्म । अथैवं कुर्वंतं तं विलोक्य सुकुलीना सुशीला तद्भार्या बहुधा हितशिक्षां ददौ, परं स लोभाविष्टस्तत्स्वप्नेनापि न मेने । ततः कियता कालेन त एवाचार्याः पुनस्तत्र समेताः, भव्यजीवाश्च वंदनार्थं गताः । तदा गुरुभिर्देशना दत्ता, श्रावकेभ्यश्च श्रीपतिश्रेष्ठिनः प्रवृत्तिः पृष्टा । श्रावकैरुक्तं–'स्वामिन् ! स श्रेष्ठी कालधर्मं प्राप्तः, सांप्रतं तु तस्य पुत्रो धननामा विद्यते, स च लोभाभिभूतत्वादत्यंतनिर्विवेकत्वेन परित्यक्तजिनपूजादिसकलसद्धर्मकृत्यः सन् पशुरिव कालं गमयति । अथ यावदेषा प्रवृत्तिरुक्ता तावदेवैकं कोस्थलकं स्कंधे गृहीत्वा उक्तस्वरूप एव कंचित् ग्रामं प्रति गत्वरं व्रजन् स दृष्टिगोचरो जातः । तदा श्राद्धैरुक्तं–'स्वामिन् ! एष श्रीपतिपुत्रो याति ।' गुरुभिस्तं तादृगवस्थं दृष्ट्वोपकारार्थं स्वपार्श्वस्थमेकं श्रावकं मुक्त्वा स समाहूतः, परं स तत्रस्थ एव प्राह–'अहं तु द्रव्यार्थी, मम गुरुणा सह किमपि कार्यं नास्ति ।' एतत् श्रुत्वा लाभं विज्ञाय गुरुभिः स्वयं तत्र गत्वा प्रोक्तं–'हे आर्य ! त्वं श्रीपतिश्रेष्ठिनः पुत्रोऽपि तवेत्थं धर्मकर्मविमुखत्वं न घटते । अथ यदि अपरं त्वया किमपि धर्मकार्यं न स्यात्तथापि स्वपितृकारितचैत्यस्थितश्रीजिनबिंबस्य वदनकमलं दृष्ट्वा पश्चाद्भोजनं कार्यमिति नियमं स्वीकुरु ।' तदा स प्राह–'अहं स्वकार्याद्भ्रष्टो भवामि, तस्मादधुना मां मुंचत । अतः परं भवदुक्तो नियमः प्रमाणं मम' इत्युक्त्वा स स्वकार्ये लग्नः, आचार्या विहृत्यान्यत्र गताः । अथ स धनश्रेष्ठी किंचिच्छुभोदयात्प्रत्यहं प्रभुवदनकमलं दृष्ट्वा भोजनं करोति स्म । तदा तद्भार्यया चिंतितं–'यथाविधनिर्विवेकस्यास्य हृदये सदयं

समस्तगोष्ठीनिरन्तरं च सर्वमप्याकार्यं श्राद्धधर्मस्थापितवान्। स्वपितृकारितचैत्यस्य तथान्येषामपि जिनचैत्यानां विशेषतः पूजाप्रभावनादिकं चकार, अपरमपि दानादिकृत्यं वर्धमानपरिणामैः प्रवर्त्तयामास, गुरुसंयोगे च परिग्रहपरिमाणं निधानातिरिक्तं द्रव्यं धर्मस्थानेषु व्यापारितवान्। क्रमेणान्येष्वपि व्रतनियमेषु स उद्यतो बभूव। ततः सर्वमहाजनप्रभृतिलोकैर्मन्यमानः प्रवरयशोलक्ष्मीं बिभ्राणः स धनश्रेष्ठी चिरं श्राद्धधर्मं प्रपाल्य सद्गतिभाग्बभूव। इति पंचमे व्रते धनश्रेष्ठिकथानकं। एवमन्यैरपि भव्यप्राणिभिर्विवेकं हृदि निधाय परिग्रहप्रमाणविधाने समुद्यतैर्भवितव्यं, लोभादेश्च त्यागो विधेयः, येनोभयलोकेऽभीष्टसमृद्धिसिद्धिः संपद्यते। अत्र भावनागाथा–जह जह अन्नाणवसा, धणधन्नपरिग्गहं बहुं कुणसि। तह तह लहुं निमज्जसि, भवे भवे भारियतरिव्व ॥ १ ॥ जह जह अप्पो लोभो, जह जह अप्पो परिग्गहारंभो। तह तह सुहं पवड्ढइ, धम्मस्स य होइ संसिद्धी ॥ २ ॥ तम्हा परिग्गहं उ-ज्झिऊण मूलमिह सव्वपावाणं। धन्ना चरणपवन्ना, मणेण एवं विचिंतिज्जा ॥ ३ ॥ इति भावितं पंचमं व्रतं ५। एतानि पंच महाव्रतापेक्षया लघुत्वादणुव्रतान्युच्यंते।

अतः परं त्रीणि गुणव्रतानि वाच्यानि। तानि च अणुव्रतानां गुणायोपकाराय यतंते इति गुणव्रतान्युच्यंते। भवति हि अणुव्रतानां गुणव्रतैरुपकारो दिक्प्रमाणादिना हिंसादिनिषेधात्। अथ तेषु गुणव्रतेषु यत्प्रथमं दिक्प्रमाणव्रतं तदाख्यायते–ऊर्ध्वाधस्तिर्यग्दिक्षु गमनमाश्रित्य यत्प्रमाणं क्रियते, सर्वास्वपि दिक्षु सर्वेणापि जन्मना यथा प्रत्येकमेतावती भूमिराक्रमणीया नाधिकेति तद्दिक्प्रमाणव्रतमुच्यते। न च वाच्यं दिक्प्रमाणे कृते को गुण? इति, एतत्करणे हि लोभनिग्रहरूपस्य महागुणस्य संभवात्। तथाहि—

भुवणक्कमणसमत्थे, लोभसमुद्दे वि सप्पमाणंसि ।
कुणइ दिसापरिमाणं, सुसावओ सेउबंधं व ॥ ४४ ॥

व्याख्या—भुवनाक्रमणसमर्थे त्रिभुवनप्लावनक्षमे लोभसमुद्रे विसर्पति सति सुश्रावको दिक्प्रमाणं तत्पूरप्रतिघात-समर्थं सेतुबंधमिव करोति, नियमितक्षेत्रात्परतो महालाभेऽपि गमनाभावात् । अनेन व्रतेन लोभनिग्रहो भवतीत्यर्थः । अथास्य व्रते व्यतिरेकेण दृष्टांतो दर्श्यते—

करुणावल्लीयीयं, जइ कुव्वंतो दिसासु परिमाणं ।
राया असोगचंदो, ता नरए नेव निवडंतो ॥ ४५ ॥

गाथार्थः स्पष्टः, नवरं तप्तायोगोलककल्पस्य गृहिणोऽपरिमितभूमंडले भ्रमणनिषेधेनास्य व्रतस्य करुणावल्लीजीवातुलता भावनीया । इह गाथाऽशोकचंद्रदृष्टांतस्त्वेवं—

[illegible] नगरी श्रीश्रेणिकनृपसूनो अशोकचंद्रो नाम राजाभूत् । अस्य च [illegible] [illegible] [illegible] [illegible] [illegible] [illegible] [illegible] नाम्ना कूणिकोऽपि [illegible] । अन्यदा तत्र श्रीवीरस्वामी समवसृत, [illegible] [illegible] । श्रीजिनवचनामृत [illegible] [illegible] जगाम । स्वामिना देशना कृता,

ततो देशनांते स प्रभुं पप्रच्छ–'स्वामिन् ! ये चक्रिणोऽपरित्यक्तभोगाः संतो म्रियंते ते कां गतिं गच्छंति ? ।' स्वामी ऊचे–'तेषां प्रायः सप्तमनरकपृथ्वीगतिरस्ति ।' नृपोऽवादीत्–'तर्हि मयापि तत्रैव गंतव्यं ।' स्वामिनोक्तं–'न हि त्वं चक्रवर्त्यसि, अतः सा गतिस्तव कुतोऽस्तु ? त्वं तु षष्ठनरकपृथिव्यां यास्यसि ।' तदा स आत्मानं चक्रिणं मन्वानो जगाद–'स्वामिन् ! अहं न चक्रीति कथं श्रद्धीयते ? यतो मदीयापि सेनानेकहस्त्यश्वरथानां लक्षैर्भटानां कोटिभिश्च सकलं जगदुद्धर्तुं संहर्तुं वा समर्था विद्यते । तथा बहवः संबाधद्रोणखेटकर्बटपत्तनपुराकरादयो मम करदायिनो वर्त्तंते, तथा मम निरंतरव्यापारेऽपि अक्षीयमाणा भूयांसो निधयः संति, तथातिप्रचंडो मदीयः प्रतापः सर्वमपि शत्रुवर्गमाक्रम्य स्थितोऽस्ति । अथ मम किं न्यूनमस्ति ? येनाहं चक्रवर्त्ती न भवेयं ? ।' इति श्रुत्वा यथावस्थितवादी श्रीजिनः प्रत्यभाषिष्ट–'हे राजन् ! किमनया समृद्ध्या स्यात् ? चक्रादिचतुर्दशरत्नसमूहं विना चक्रित्वं कदापि न भवेत् ।' ततः स एतत्प्रभुवचः श्रुत्वा स्वस्थानं गत्वा लोहादिमयानि सप्तैकेंद्रियरत्नानि चकार, स्वस्य पद्मावतीं प्रियां च स्त्रीरत्नं कल्पयामास, तथात्मनः पट्टहस्त्यादीन्येवापरशिष्टरत्नानि निदधे । अथैवमेतानि रत्नत्वे संस्थाप्य स राजा प्राच्यादिक्रमात् सर्वदेशानाज्ञाकारिणः कृत्वा बहुसैन्यपरिवृतो वैताढ्यतले तमिस्रां गुहां संप्राप्तः। तत्र च दंडरत्नेन गुहाद्वारकपाटौ ताडितवान्, परं तौ नोद्घटितौ । ततः पुनर्दंडप्रहारे कृते सति तद्द्वारपालकः कृतमालदेवः क्रोधेन तमवादीत्–'रे ! अप्रार्थ्यप्रार्थक ! त्वं कोऽसि ? इतो याहि, स्वाद्दूरात्रैः स्वर्णां किं कदर्थयसि ? ।' सोऽप्युवाच–'भरतक्षेत्रेऽहमशोकचंद्रो नाम नवीनश्चक्रवर्त्ती जातोऽस्मि, अतः शीघ्रं द्वारमुद्घाटय ।' देवेनोक्तं–'भो ! अत्र क्षेत्रे द्वादश चक्रिणो भवंति, ते त्वभवन्, तस्मान्न त्वं चक्री, किं तु कोऽपि चाक्रि-

कोऽसि।' भूपेनोक्तं–'मत्पुण्यैरहं त्रयोदशः चक्री कृतोऽस्मि, त्वं किं न जानासि? तस्माद् द्वारमुद्घाटय, विलंबविधानेन मां मा खेदय।' तत इत्थं भूताविष्टमिवानिष्टभाषिणं तमशोकचंद्रमतिक्रुद्धो देवः प्रज्वलदनलज्वालया ज्वालयित्वा सद्यः षष्ठनरकातिथिं चक्रे। इत्यशोकचंद्रकथा। एषोऽशोकचंद्र इवान्योऽपि यः कश्चित्पुमान् दिग्गमनप्रमाणं न करोति स इत्थमैहलौकिकमपायं प्राप्य परत्र नरकादिपात्रतां याति, तस्माद्भव्यांगिभिरेतद्व्रतस्वीकारेऽलसैर्न भाव्यं। अत्र भावना–चिंतेअव्वं च नमो, साहूणं जे सया निरारंभा। विहरंति विप्पमुक्का, गामागरमंडियं वसुहं॥१॥ इति भावितं प्रथमं गुणव्रतं ६॥

अथ गुणव्रतेषु द्वितीयं भोगोपभोगमानव्रतं भाव्यते–तत्र यः सकृद्भुज्यते स भोगोऽन्नकुसुमादिः, यस्तु पुनः पुनर्भुज्यते स उपभोगः स्त्रीवस्त्राभरणादिः, तयोर्मानेन नियतप्रमाणेन निष्पन्नं व्रतं भोगोपभोगमानव्रतमुच्यते। तच्च भोजनतः कर्मतश्च भवति। तथाहि—

भोअणकम्मेहिं दुहा, बीयं भोगोवभोगमाणवयं।
भोअणओ सावज्जं, उस्सग्गेणं परिहरइ॥ ४६॥
तह अतरंतो वज्जइ, बहुसावज्जाइं एस भुज्जाइं।
बावीसं अन्नाइ वि, जहारिहं नायजिणधम्मो॥ ४७॥

ततो देशनांते स प्रभुं पप्रच्छ–'स्वामिन् ! ये चक्रिणोऽपरित्यक्तभोगाः संतो म्रियंते ते कां गतिं गच्छंति ? ।' स्वामी ऊचे–'तेषां प्रायः सप्तमनरकपृथ्वीगतिरस्ति ।' नृपोऽवादीत्–'तर्हि मयापि तत्रैव गंतव्यं ।' स्वामिनोक्तं–'न हि त्वं चक्रवर्त्यसि, अतः सा गतिस्तव कुतोऽस्तु ? त्वं तु षष्ठनरकपृथिव्यां यास्यसि ।' तदा स आत्मानं चक्रिणं मन्वानो जगाद–'स्वामिन् ! अहं न चक्रीति कथं श्रद्धीयते ? यतो मदीयापि सेनानेकैर्हस्त्यश्वरथानां लक्षैर्भटानां कोटिभिश्च सकलं जगदुदतुं संहर्तुं वा समर्था विद्यते । तथा बहवः संबाधद्रोणखेटकर्बटपत्तनपुराकरादयो मम करदायिनो वर्त्तंते, तथा मम निरंतरव्यापारेऽपि अक्षीयमाणा भूयांसो निधयः संति, तथातिप्रचंडो मदीयः प्रतापः सर्वमपि शत्रुवर्गमाक्रम्य स्थितोऽस्ति । अथ मम किं न्यूनमस्ति ? येनाहं चक्रवर्त्ती न भवेयं ? ।' इति श्रुत्वा यथावस्थितवादी श्रीजिनः प्रत्यभाषिष्ट–'हे राजन् ! किमनया समृद्ध्या स्यात् ? चक्रादिचतुर्दशरत्नसमूहं विना चक्रित्वं कदापि न भवेत् ।' ततः स एतत्प्रभुवचः श्रुत्वा स्वस्थानं गत्वा लोहादिमयानि सप्तैकेंद्रियरत्नानि चकार, स्वस्य पद्मावतीं प्रियां च स्त्रीरत्नं कल्पयामास, तथात्मनः पट्टहस्त्यादीन्येवावशिष्टरत्नानि विदधे । अथैवमेतानि रत्नत्वे संस्थाप्य स राजा प्राच्यादिक्रमात् सर्वदेशानाज्ञाकारिणः कृत्वा बहुसैन्यपरिवृतो वैताढ्यतले तमिस्रां गुहां संप्राप्तः। तत्र च दंडरत्नेन गुहाद्वारकपाटौ ताडितवान्, परं तौ नोद्घटितौ । ततः पुनर्दंडप्रहारे कृते सति तद्द्वारपालकः कृतमालदेवः क्रोधेन तमवादीत्–'रे ! अप्रार्थ्यप्रार्थक ! त्वं कोऽसि ? इतो याहि, स्वात्कारैः कर्णौ किं कदर्थयसि ? ।' सोऽप्युवाच–'भरतक्षेत्रेऽहमशोकचंद्रो नाम नवीनश्चक्रवर्त्ती जातोऽस्मि, अतः शीघ्रं द्वारमुद्घाटय ।' देवेनोक्तं–'भो ! अत्र क्षेत्रे द्वादश चक्रिणो भवंति, ते त्वभवन्, तस्मान्न त्वं चक्री, किं तु कोऽपि चाक्रि-

कोऽसि ?' भूपेनोक्तं-'मत्पुण्यैरहं त्रयोदशः चक्री कृतोऽस्मि, त्वं किं न जानासि ? तस्माद् द्वारमुद्घाटय, विलंबविधानेन मां मा खेदय।' तत इत्थं भूताविष्टमिवानिष्टभाषिणं तमशोकचंद्रमतिक्रुद्धो देवः प्रज्वलदनलज्वालया ज्वालयित्वा सद्यः षष्ठनरकातिथिं चक्रे। इत्यशोकचंद्रकथा। एषोऽशोकचंद्र इवान्योऽपि यः कश्चित्पुमान् दिग्गमनप्रमाणं न करोति स इत्थमैहलौकिकमपायं प्राप्य परत्र नरकार्त्तिपात्रतां याति, तस्माद्भव्यांगिभिरेतद्व्रतस्वीकारेऽलसैर्न भाव्यं। अत्र भावना--चिंतेअव्वं च नमो, साहूणं जे सया निरारंभा। विहरंति विप्पमुक्का, गामागरमंडियं वसुहं ॥ १ ॥ इति भावितं प्रथमं गुणव्रतं ६ ॥

अथ गुणव्रतेषु द्वितीयं भोगोपभोगमानव्रतं भाव्यते-तत्र यः सकृद्भुज्यते स भोगोऽन्नकुसुमादिः, यस्तु पुनः पुनर्भुज्यते स उपभोगः स्त्रीवस्त्राभरणादिः, तयोर्मानेन नियतप्रमाणेन निष्पन्नं व्रतं भोगोपभोगमानव्रतमुच्यते। तच्च भोजनतः कर्मतश्च भवति। तथाहि—

भोअणकम्मेहिं दुहा, बीयं भोगोवभोगमाणवयं।
भोअणओ सावज्जं, उस्सग्गेणं परिहरइ ॥ ४६ ॥
तह अतरंतो वज्जइ, बहुसावज्जाइं एस भुज्जाइं।
बावीसं अन्नाइ वि, जहारिहं नायजिणधम्मो ॥ ४७ ॥

व्याख्या—द्वितीयं भोगोपभोगमानव्रतं भोजनकर्मभ्यां द्विधा भवति। तत्र भोजनतः श्रावक उत्सर्गेण सावद्यं सचित्तं अनेषणीयं च भोज्यं परिहरति, तदशक्तस्तु सचित्तमेव परिहरतीति अनुक्तमपि द्रष्टव्यं। तह अतरंतो त्ति तथाप्यशक्नुवन्नेप श्रावको ज्ञातजिनधर्मः सन् बहुसावद्यानि भूरिपापानि द्वाविंशतिं भोज्यानि अशनादीनि परिहरति। तन्नामानि यथा—पंचुंवरि ५ महविगइं ९, हिम १० विस ११ करगे अ १२ सवमट्टी य १३। राईभोअणगं चिय १४, बहुबीअं १५ अणंत १६ संधानं १७॥ १॥ घोलवडय १८ वाइंगण १९, अमुणिअनामाणि फुल्लफलियाणि २०। तुच्छफलं २१ चलिअरसं २२, वज्जइ भुज्जाइं वावीसं॥ २॥

तत्र पंचोदुंबरी उदुंबर १ वट २ प्लक्ष ३ पिप्पल ४ काकोदुंबरी ५ फलरूपा, सा च मशकाकारसूक्ष्मबहुजीवभृतत्वाद्वर्जनीया। तथा मद्य १ मांस २ मधु ३ नवनीतानि ४ घृतादिविकृत्यपेक्षया महाविकारहेतुत्वान्महाविकृतयश्चतस्रस्ताश्च वर्ज्याः, क्रूराध्यवसायहेतुत्वात् मद्य एव तत्र तद्वर्णनिकजीवसंमूर्छनाच्च। यदुक्तं—मज्जे महुंमि मंसे, नवणीयंमि चउत्थए। उप्पज्जंति असंखा, तव्वण्णा तत्थ जंतुणो॥ १॥ इति। तथा हिमविषकरकमृत्तिकारात्रिभोजनानि प्रतीतानि। तत्र हिमकरकमृत्तिकानां बहुजीवमयत्वात् विषस्य स्वोपघातत्वान्मरणसमये महामोहोत्पादकत्वाच्च, रात्रिभोजनस्य च बहुविधजीवसंपातसंभवेन ऐहिकपारभविकबहुदोषदुष्टत्वाद्वर्जनीयत्वं बोध्यं। तथा यत्र मध्यायां मुद्रा इव बीजान्यव्यवहितानि तिष्ठंति, तत्फलं बहुबीजं पंपोटकादि, तस्य प्रतिबीजं जीवोपमर्दसंभवात्। तथानंतकायिका म्लेच्छकंदादयो द्वात्रिंशत् तेषामनंतजीवमयत्वात्। तथा संधानं प्रतीतं तस्य च बहुजीवसंसक्तिहेतुत्वात्। तथा घोलवटकानि आमगोरससंमिश्रद्विदलोपलक्षणं, तेषु

च केवलिगम्यसूक्ष्मत्रसजीवसंसक्तिसंभवात् । यदुक्तं-जइ मुग्गमासपमुहं, विदलं कचंमि गोरसे पडइ । ता तसजीवुप्पत्तिं, भणंति दहीए तिदिण उवरिं ॥ १ ॥ इति । तथा वृंताकानि प्रतीतानि, एषां बहुबीजत्वेऽपि पृथग्ग्रहणमतीव लोकविरुद्धताज्ञापनार्थं, तेषां च बहुजीवमयत्वान्निद्राबाहुल्यमदनोद्दीपनादिदोषहेतुत्वाच्च वर्जनीयत्वं । तथा स्वयं परेण वा येषां नाम न ज्ञायते तानि अज्ञातनामानि पुष्पाणि फलानि च, तेषां प्राणोपघातादिजनकत्वात् । तथा येन जग्धेन तृप्तिरल्पा आरंभस्तु महांस्तत्तुच्छफलं गंगेटककोमलफलिकादि तस्य चानर्थदंडत्वात् । तथा चलितरसं कुथितधान्यं तस्य चानंतकायत्वाद्वर्जनीयत्वं बोध्यं । न चैतावंत्येवाभक्ष्याणि, किं तूपलक्षणत्वाद्यथार्हं यथायोग्यमन्यान्यपि दिनद्वयातीतदधिपुष्पितौदनादिसंसक्तपत्रपुष्पादीनि बहुसावद्यानि वस्तूनि वर्जनीयानि । किं चाल्पसावद्येऽपि ओदनादौ इदमेतावन्मया भोक्तव्यमिति प्रमाणनियतत्वं विधेयं । तथात्यंतचेतोगृध्न्युन्मादापवादादिजनकं वस्त्रविभूषणवाहनादिकं च वर्जनीयं । शेषेऽपि प्रमाणं कार्यं तस्य विरतिपरिणतत्वादिति । अत्र केचिदज्ञानिनो वदंति-'संसारे हि शरीरमेव सारं, तच्च यथातथा वा पोष्यते, किमनया भक्ष्याभक्ष्यकल्पनयेति ? ।' तत्रोच्यते-'बहुधा पोषितस्यापि शरीरस्यासारत्वात्तदर्थं विवेकिनाऽभक्ष्यभक्षणं न विधेयमेव । यदुक्तं-अइपोसिअंपि विहडइ, अंते एअं कुमित्तमिव देहं । सावज्जभुज्जपावं, को तस्स कए समायरइ ॥ १ ॥' अथ दृष्टांतगर्भमस्य व्रतस्य फलं लेशतो दर्श्यते—

संसाईणं नियमं, धीमं पाणच्चये वि पालंतो ।
पावइ परंमि लोए, सुरभोए वंकचूलो व्व ॥ ४८ ॥

अक्षरार्थः प्रतीतो, व्याख्यार्थस्तु कथानकगम्यस्तद्यथा—

अत्रैव भारते वर्षे विमलो नाम राजाभूत्, तस्य सुमंगला नाम्नी प्रिया, तयोश्चापत्यद्वयं जातं, तत्रैकः पुष्पचूलनामा पुत्रः, द्वितीया च पुष्पचूला नाम्नी कन्यका । यौवने च पित्रैका राजकन्या पुत्राय परिणायिता । पुत्री तु कस्मैचिद्राजपुत्राय दत्ता । परं दुष्कर्मोदयाद्बाल्ये एव पत्युर्मरणात्सा वैधव्यं प्राप्ता । सा भ्रातृस्नेहात्पितुर्गृहे एवास्थात् । अथ पुष्पचूलस्तु चौर्यादिव्यसनासक्तत्वेन पौरजनानत्यंतं पीडयन् लोके वंकचूलाख्यां प्राप्तः, तद्भगिन्यापि तत्समानबुद्धित्वेन वंकचूलेति प्रसिद्धाभवत् । ततो राजा लोकवस्तस्योपालंभं बहुतरमाकर्ण्य रुष्टेन सता स पुराद्बहिः कृतः, तदा पत्नीभगिन्यावपि तत्स्नेहात्तदर्थं निर्गते । ततो वंकचूलः पत्नीभगिनीभ्यां सह निर्भयः सन् कांचिदरण्यानीं भ्रमन् धनुर्धरैर्भिल्लैर्दृष्टः, तत्र च ते आकृत्यैव तं राजपुत्रं ज्ञात्वा सादरं प्रणम्य प्रश्नपूर्वकं तद्वृत्तांतं समाकर्ण्य बहुमानतः स्वपल्लीं समानीय मूलपल्लीपतेर्मृतत्वात् तत्स्थाने तं स्थापितवंतः । ततो वंकचूलो भिल्लैः सार्धं महीतलं लुंटन् तत्र सुखेन तस्थौ । अथैकदा वर्षाप्रादुर्भावसमये कियद्भिर्मुनिभिः परिवृताः श्रीचंद्रयशःसूरयः मार्गपरिभ्रष्टास्तत्र समेताः, तदा नव्योत्पन्नांकुरसंमर्दात्सचित्तजलसंघट्टाच्च भीरव आचार्या विहारायोग्यतां ज्ञात्वा तां पल्लीं प्रविष्टाः । वंकचूलोऽपि मुनीन् दृष्ट्वा कुलीनत्वात् प्रणमति स्म । तदा गुरवो धर्मलाभाशिषं दत्त्वा तं प्रति वसतिं ययाचिरे । तेनाप्युक्तं–'स्वामिन् ! तुभ्यं वसतिं दास्यामि, परं मम सीमायां कदापि धर्मो न वाच्यः, यतो येषां हिंसासत्यचौर्यादीनां त्यागेन धर्मः संपद्यते तैरेवास्माकमाजीविका विद्यते इति ।' एवं तेनोक्ते सति गुरुभिस्तद्वचोऽंगीकृत्य तद्दर्शितनिरवद्यस्थानके स्वाध्यायध्यानादि धर्मकृत्यं कुर्वद्भिश्चतुरो मासान् यावत्तस्थे । तत्र च

तेनाहारादिनिमंत्रणायां कृतायां गुरुभिरुक्तं–'भवदीयगृहभिक्षास्माकं न कल्पते, वयं तपश्चर्ययैवेह स्थिताः सुखेन कालं गमयिष्यामः, भवतो हि उपाश्रयदानेनैव महापुण्यसंबंधो जातः। उक्तं च–जो देइ उवस्सयं मुणि-वराण तवनियमजोग-जुत्ताणं। तेणं दिन्ना वत्थन्न-पाणसयणासणविगप्पा ॥ १ ॥ पावइ सुरनररिद्धी, सुकुलुप्पत्ती य भोगसामग्गी। नित्थरइ भव-मगारी, सिज्जादाणेण साहूणं ॥ २ ॥ ततो वर्षाकालेऽतिक्रान्ते गुरुभिस्तं वंकचूलमापृच्छय विहारे क्रियमाणे सोऽपि तेषां सत्यप्रतिज्ञतादिगुणैर्हृष्टः सन् भक्त्या तान् गुरूनन्वगात्। [illegible] कियत्यपि मार्गे गते सति स चिरस्थितमुनिवियोगविह्वलः सन् गुरून् नत्वा व्यजिज्ञपत्–'स्वामिन्नितः परं परेषां सीमा विद्यते, अतोऽहं वलिष्ये, पुनर्मम भवद्दर्शनं सद्यो भवतात्।' एवं तेनोक्ते सति गुरवो मधुराक्षरैस्तं प्रोचुः–'हे सौम्य! भवत्साहाय्याद्वयमियत्कालं सुखं स्थिताः। अथ यदि तुभ्यं रोचते तर्हि प्रत्युपकर्त्तुं किंचिद् ब्रूमः।' तेनोक्तं–'भगवन्! यादृङ्मया सुखेन पालयितुं शक्यते तादृशेनैव वचसा मयि प्रसादो विधीयताम्।' तदा गुरुभिरुक्तं–'यस्याभिधानं केनापि न ज्ञायते तत्फलं त्वया न भक्षणीयं १, तथा कर्हिचित्परं प्रहर्तु-मिच्छता सप्ताष्टौ पदानि अपसर्त्तव्यं २, तथा राज्ञः पट्टदेवी मातृवद्गणनीया ३, तथा वायसामिषं कदापि न भक्षणीयं ४, एते चत्वारोऽप्यभिग्रहास्त्वयैकचित्तेन पालनीयाः, एतत्पालने तवोत्तरोत्तरं महालाभो भावी।' ततः सोऽपि गुरुवचसा नम्रीभूतः सन् महाप्रसाद इत्युक्त्वा आत्मोपकारिणस्तान् चतुरोऽपि नियमान् गृहीत्वा स्वस्थानमायातः। गुरवोऽपि विहारं कृत्वान्यत्र गताः।

अथैकदा ग्रीष्मर्तौ स पल्लीपतिर्भिल्लसेनापरिवृतः सन् कंचिद्ग्रामं हंतुमचलत्, परं कुतोऽपि तद्वृत्तांतमवगम्य स ग्रामः

पूर्वमेव पलाय्य गतः । तदा वंकचूलः सपरिच्छदो व्यर्थीभूतपरिश्रमः क्षुधातृषाभिभूतश्च सन् मध्याह्ने ततो व्यावृत्त्याटव्यां कस्यापि तरोस्तलान्निषण्णः । तत्र च क्षुधापीडितैः कियद्भिर्भिल्लैरितस्ततो भ्रमद्भिः क्वापि निकुंजे सुरभिगंधिसद्वर्णपरिपक्वफलैर्नम्रीभूतं किंपाकतरुं वीक्ष्य सद्यस्तत्फलानि समादाय वंकचूलाग्रे ढौकितानि । तेन च स्वनियमं स्मृत्वा तन्नाम पृष्टं । तैरुक्तं–' स्वामिन्नेषां नाम तु केनापि न ज्ञायते, परं स्वादुत्वमधिकं विद्यतेऽतो भक्षणीयानि । ' तेनोक्तं–' अज्ञातं फलमहं नाश्नामि, ममायं नियमोऽस्ति । ' ततः पुनस्तैः साग्रहं प्रोचे–' स्वामिन् ! सौस्थ्ये नियमाग्रहः क्रियते, सांप्रतं प्राणसंदेहे कोऽयं नियमाग्रहः ? तस्मादेतानि भक्षय । ' इति तद्वचः श्रुत्वा क्षुत्पीडितोऽपि सन् स सधैर्यं प्राह–' भो ! इदं वचो न वक्तव्यं, यदि प्राणा यांति तर्हि अधुनैव यांतु, परं स्ववाचा गुरुसमक्षं स्वीकृतो नियमः स्थिरीभवतु । ' ततस्ते सर्वेऽपि भिल्लास्तानि फलानि स्वैरं भक्षयित्वा तृप्ताः संतस्तच्छायासु स्वपंति स्म । परमेकः सेवको वंकचूलस्यानुरोधेन तानि न भुक्तवान् । अथ स्वयं शयित्वोत्थितः पल्लीशः स्वपार्श्वे सुप्तं भृत्यमुत्थाप्येति प्रोचे–' भोः ! सर्वान् शीघ्रं जागरय, यथा स्वस्थानं गच्छामः । ' तेनापि शब्देन करस्पर्शेन च सर्वेऽप्युत्थापिताः, परं कथमपि नोत्तिष्ठंति स्म । तदा तान् सर्वानपि गतप्राणान् मत्वा पल्लीशाय तत्स्वरूपं निवेदितं । सोऽपि श्रुत्वा विस्मितः सन् स्वनियमं सफलीभूतममंस्त । ततो' ऽहो गुरुवाण्या माहात्म्यं ! यत्स्वल्पयापि तयाधुनाहं जीवन् रक्षितो, मया निर्भाग्येन प्राप्तसर्वेष्टसिद्धिविधायकः कल्पतरुरिवाकस्मादुपस्थितः श्रीगुरूणां वाक्प्रसरो वृथैव वर्जितः । ' इत्यादि चित्ते विभावयन् स पल्लीशो हर्षविषादाभ्यां सह रात्रौ स्वपल्लीं संप्राप्तः । तत्र च स्वगृहचरितं द्रष्टुं प्रच्छन्नवृत्त्या गृहमध्ये प्रविश्य दीपकप्रकाशात्पुरुषवेषया स्वभगिन्या सह सुप्तां स्वभार्यां दृष्ट्वा

चिंतयामास–' एषा मे स्त्री दुराचारिणी, अयं च कोऽपि दुराचारः पुमान् विद्यते, एतौ दुष्टौ आशु मारयामीति ' विचिंत्यैकप्रहारेण तौ हंतुं यावत्खड्गमुत्पाटितवान् तावदस्य द्वितीयो नियमः स्मृतिमागतः। तदा पदसप्तकमपसरतस्तस्य क्रोधाकुलस्य खड्गो द्वारदेशे स्खलितः, खड्गसाट्कारेण च सद्यो जागृता वंकचूला ' हे भ्रातश्चिरं जीवे'त्यजल्पत्। ततो भगिनीं विज्ञायातिलज्जितः स खड्गेन सह कोपं वृण्वन् तां पुंवेषरचनाकारणं पप्रच्छ। साप्यूचे–" हे भ्रातरद्य सायंकाले त्वां द्रष्टुं नटवेषधरास्तव शत्रूणां चराः समाजग्मुः, तदा मया चिंतितं–' भ्राता तु सपरिच्छदः क्वापि गतोऽस्ति, यद्येतेऽपीदं ज्ञास्यंति तर्हीयमनाथा पल्ली शत्रुभिः पराभविष्यते, तस्मात् कोऽप्युपायः कार्यः ' इति विचिंत्याहं कैतवात्त्वद्रूपधारिणी भूत्वा सभायामुपविश्य तान् नृत्यं कारयित्वा क्षणाद्यथार्हधनदानतो विसर्ज्या(सृज्या)लस्यादपरित्यक्तपुंवेषैव भ्रातृजायया समं सुप्ता। "

एतद्वृत्तांतं श्रुत्वा वंकचूलो गुरुप्रसादादात्मानं भगिन्यादिहत्यापापादलिप्तं विभावयन् विशेषतो गुरुवाण्याः प्रशंसां चकार। अथैकदा स चौर्यार्थमुज्जयिनीं पुरीं ययौ, तत्र चार्धनिशायां कस्यापि धनिनो व्यवहारिणो गृहे प्रविष्टः, परं कपर्द(र्दिका)व्ययभ्रांत्या पुत्रेण सह विवदमानं गृहपतिं विलोक्य धिगेतादृशां धनमिति चिंतयन् ततो निर्गतः, ततः–'स्तोकं स्तोकं जनाद्याचित्वा संप्राप्तसंपत्तिलवानां द्विजानां धनेनाप्यलमिति' विचिंत्य तद्गृहाण्यपि मुक्तवान्। तदनंतरं ' या ईषद्धनलिप्सया रमणीयं स्वशरीरमनपेक्ष्य कुष्टिनमपि सेवंते, तासां वेश्यानां धनेनापि मे न कार्यमिति ' विचारयन् तद्गृहाण्यपि विमुच्य नृपगृहसमीपमागत्य चिंतयति स्म–' चौर्यमाचर्यते चेत्त–ल्लुंट्यते खलु भूपतिः। फलिते धनमक्षीण–मन्यथापि चिरं यशः ॥ १ ॥ ' इति विचिंत्य वनाद्गोधामादाय तत्पुच्छलग्नः सन् राज्ञः सौधाग्रमारुह्यावासभवने प्रविष्टः। तत्र चाद्भुतरूपधारिणी राज्ञः पट्टदेवी

दृग्गोचरमायाता। तया च कथितं–'कस्त्वं ? किमर्थमत्रायातोऽसी'ति प्रोक्तः सन् स प्रोचे–'अहं तस्करोऽस्मि, बहुतरं मणिरत्नादिद्रव्यं वांछन्निहागतोऽस्मि।' ततस्तद्रूपलुब्धया राज्या मृदुवाण्या प्रोक्तं–"हे सौम्य ! द्रव्यस्य का वार्त्ता ? एतत्सर्वं तवैवास्ति, अथ किं कंपसे ? सुस्थो भव, तव कुलदेवता तुष्टा, यदहं राज्ञः पट्टदेवी तव वश्या जातास्मि, मयाद्य सौभाग्यगर्वेण राजापि रोषितोऽस्ति, तादृश्या मया सह त्वमात्मानं सफलय, मयि तुष्टायां प्राणिनामर्थकामौ सुलभौ स्तः, मयि रुष्टायां तु सद्यो वधबंधावेव स्यातां।" इत्थं कामग्रहग्रस्तया तया लोभितः क्षोभितश्चापि वंकचूलः स्वकृतं तृतीयं नियमं स्मरन् तां नत्वा जगाद–'हे मातस्त्वं मम पूज्यासि, मयि वन्ये तस्करे राजवल्लभायास्तव का स्पृहा ?।' सा प्रोचे–'अरे वाचाल ! बाल ! मयि कामुक्यां मातृसंबंधं योजयन् त्वं किं न लज्जसे ? अथ चेन्मद्वाक्यं न मन्यसे तर्हि अद्य त्वदुपरि यमो रुष्टः।' इत्थं तया विविधवचोयुक्त्या भाषितोऽपि स यावन्न चुक्षोभ तावत्क्रोधाकुला सा नखैर्निजदेहं विदार्योच्चैः पूत्कार। अयं च सर्वोऽपि वृत्तांतो गृहद्वारं संप्राप्तेन राज्ञा कपाटविवरे कर्णं संस्थाप्य स्वयं शुश्रुवे। तावत्कलकलारावे जाते सति जाग्रतो द्वारपालकाः शस्त्राणि गृहीत्वा धाविताः। तदा राज्ञा मंदस्वरेण तेभ्यः प्रोक्तं–'भो ! निरपराधोऽयं तस्करः, सांप्रतं ईषद्बध्वा यत्नेन रक्षणीयः, प्रातःकाले च सभायां ममाग्रे आनेतव्यः।' तैरपि तथेति प्रतिपन्नं। ततो राज्ञा संभ्रमचेतसा तादृशं स्वमहिषीवृत्तांतं चिंतयता कथंचित् सा रात्रिरतिक्रांता। अथ प्रातःसमये आरक्षकैः स श्लथबंधनैर्बध्वा नृपाग्रे आनीतः, नृपेण च साक्षेपं पृष्टः सन् स स्पष्टतया सर्वमपि यथावस्थितं वृत्तांतं राज्या मधुरवाण्याहं जल्पित इत्येतत्पर्यंतमुक्त्वा मौनमभजत्। ततो विज्ञातपरमार्थो राजा तुष्टमानसः सन् एनं सत्कृत्य भूरिमुदा चालिंग्य प्रोवाच–'हे सत्पुरुष !

तव साहसेनाहं तुष्टोऽस्मि, तत एषाग्रमहिषी मया तुभ्यं प्रसादिता, त्वमेनां गृहाण।' स प्रोचे-'राजन्! या ते पट्टराज्ञी सा मे ध्रुवं माता, तस्मादेतद्वचः पुनर्न वाच्यं।' ततो राज्ञा शूलारोपणाद्युपदेशेन बहुधा क्षोभितोऽप्यसौ यदा नियमान्न चलितस्तदास्य धीरत्वेनातिसंतुष्टो राजा एनं पुत्रपदे स्थापितवान्, तां स्त्रियं च हंतुमिच्छन्नपि अस्य वचसा जीवंतीममुंचत्। ततो वंकचूलः स्वस्य भगिनीं पत्नीं च तत्रानाय्य ताभ्यां सहितः सुखेनास्थात्। तथा धर्मे संजातप्रत्ययः सन् विशेषतस्तत्रैव चित्तवृत्तिं बबंध, तान् नियमदातॄन् गुरूंश्च नित्यं सस्मार। एकदाऽस्य भाग्योदयात्त एवाचार्यास्तत्र समेताः, अयं च महताडंबरेण गुरुवंदनार्थं गतः, तत्र शुद्धं धर्मस्वरूपं श्रुत्वा तत्त्वरुचिरूपं सम्यक्त्वं स प्रपन्नवान्। तदा चोज्जयिनीपार्श्ववर्तिशालिग्रामनिवासी जिनदासाख्यः श्रावकस्तस्य परममित्रमभूत्। एकदा राज्ञा कामरूपदेशाधीशं सुदुर्जयं मत्वा तज्जयार्थं वंकचूलः समादिष्टः। तदा सोऽपि नृपादेशात्तत्र गत्वा युद्धं कृत्वा कामरूपेशं विजित्य स्वयं च वैरिकृतशस्त्रप्रहारैर्जर्जरः सन् उज्जयिनीं पुरीं समाजगाम। तत्र च राज्ञैतत्पीडया पीडितेन बहून् वैद्यानाकार्य तैरस्य चिकित्सा कारिता। परं कथमपि प्रहारा न संहिताः। तदा राज्ञा गरोपं पृष्टैर्वैद्यैर्नृपाग्रे काकमांसमौषधं प्रोक्तं। तत् श्रुत्वा राजा वंकचूलं गाढमालिंग्य साश्रुलोचनः सन् इत्थं प्रोवाच-'हे वत्स! त्वदापदं छेत्तुं ये ये प्रतीकाराः कृतास्ते सर्वेऽपि ममाभाग्याद्वृथा जाताः, अथैकं वायसामिषं भेषजं विद्यते, तद्गृहाण, येन ते शरीरे सौस्थ्यं स्यात्।' स प्रोचे-'हे नाथ! अहं सर्वथा मांसभक्षणान्निवृत्तोऽस्मि, ततो मे वायसामिषान्न कार्यं।' राज्ञोक्तं-'वत्स! जीवतो जंतोर्नियमा बहुशो भवेयुः, परं मृतो सति सर्वे यांति, तस्मादिदं भक्षय।' तदा स नृपोक्तं वचो निशम्य प्रोचे-'हे नाथ! मम जीविते स्वल्पापि तृष्णा नास्ति, एकदावश्यं मृत्युर्भावी, तस्माज्जीवितं याति

चेदधुनैव यातु, परमेतदकृत्यमहं न कुर्वे ।' ततो राजा वंकचूलस्य मित्रं शालिग्रामवर्त्ति जिनदासश्रावकमाह्वातुं निजं नरं प्रैषीत् । सोऽपि मित्रस्नेहात्सत्वरस्ततश्चलितो मार्गे च रोदनोद्यतं दिव्यं स्त्रीद्वयं विलोक्य 'के युवां किं वा रुदिथ ?' इति पप्रच्छ । ताभ्यामुक्तं–' आवां सौधर्मकल्पवासिन्यौ देव्यौ, भर्त्तुश्च्यवनाद्विरहविह्वले सत्यौ वंकचूलाख्यं क्षत्रियं भर्त्तारं प्रार्थयावहे, सोऽद्य त्वद्वचसा चेन्नियमं भंक्ष्यति तर्हि आशु दुर्गतिं गंता, तेन संप्रति रुदिवः ।' ततो जिनदासेनोक्तं–' मा रोदिष्टं, यद्भवत्योरिष्टं तदेव करिष्यामि ।' इत्युक्त्वा ते आश्वास्य स श्राद्ध उज्जयिनीं समाजगाम । तत्र च तेन नृपादेशान्मित्रमंदिरमागत्य कुशलप्रश्नपूर्वकमौषधादिप्रवृत्तिं कुर्वता तस्य नियमेऽतिस्थिरत्वं विज्ञाय शरीरं च जर्जरीभूतं विलोक्य राजादिसर्वलोकसमक्षं प्रोक्तं–' अस्य धर्म एवौषधं युक्तं, अतोऽपरा काप्यौषधादिप्रवृत्तिर्न कार्या ।' वंकचूलेनापि प्रोक्तं–' हे मित्र ! यदि त्वं मयि स्नेहं दधासि तर्हि आलस्यं विहाय मे प्रांतकालस्य संबलं देहि ।' ततस्तेनापि सम्यग्रीत्याराधना कारिता । तदा वंकचूलश्चतुर्विधाहारप्रत्याख्यानं कृत्वा चतुःशरणानि स्वीकृत्य पंचपरमेष्ठिनमस्कारं स्मरन् सर्वजीवेषु निर्वैरत्वं दधत् प्राक्कृतं दुःकृतं निंदन् सुकृतं चानुमोदयन् समाधिना कालं कृत्वा द्वादशे देवलोके देवत्वं संप्राप्तः । ततो जिनदासस्तस्यौर्ध्वदेहिकं कृत्वा गृहे व्रजन् मार्गे ते द्वे अपि देव्यौ पूर्ववद्रुदत्यौ वीक्ष्य पृष्टवान्–' हे भद्रे ! अद्यापि युवाभ्यां किमर्थमत्रैवं विलप्यते ? सोऽखंडितव्रतः सन् इतो मृत्वा भवत्योर्वल्लभः किं न ज्ञातः ? ।' तदा ते देव्यौ निःश्वस्योचतुः–' हे स्वच्छाशय ! किं पृच्छसि ? स ते सुहृत्प्रांते परिणामविशुद्धयास्मान् व्यतीत्य द्वादशं स्वर्गं जगाम ।' एतत् श्रुत्वा परमानंदं संप्राप्तो जिनदासः सुहृदं ध्यायन् श्रीजिनधर्मं चानुमोदयन् स्वगृहं ययौ । इति नियमपालने वंकचूलवृत्तांतः । इत्थं स्वल्पस्याप्यभक्ष्यभक्षणनिय-

मस्य महाफलं विज्ञाय भव्यात्मभिर्विशेषतस्तस्य पालने तत्परैर्भवितव्यं ।

तदेवमुक्तं भोजनतो भोगोपभोगव्रतं । अथ कर्मतस्तदुच्यते—

कम्माउ जइ कम्मं, विणा न तीरेइ निव्वहेउं तो ।
पनरसकम्मादाणे, चएइ अण्णं पि खरकम्मं ॥ ४९ ॥

व्याख्या—कर्मतः कर्माश्रित्य श्रावकेणोत्सर्गतो न किंचित्सावद्यं कर्म कर्त्तव्यं, निरारंभेणैव भाव्यमित्यर्थः ।'यदि पुनः कर्म विना न निर्वहति तदापि पंचदश कर्मादानानि त्यजति । तान्यमूनि-अंगार १ वन २ शकट ३ भाटक ४ स्फोटक ५ कर्माणि, दंत ६ लाक्षा ७ रस ८ केश ९ विष १० वाणिज्यानि, यंत्रपीडा ११ निर्लांछनं १२ दवदानं १३ सरोह्रदादिशोषः १४ असतीपोषश्चेति १५ ॥ तत्राजीविकार्थमंगारकरणभ्राष्ट्रभर्जनकुंभकारलोहकारसुवर्णकारत्वेष्टिकापाकादिषट्कायारंभकरणमंगारकर्म १, वृक्षादेः पत्रपुष्पादेर्वा छेदनविक्रयाद्यारंभेण जीवनं वनकर्म २, शकटानां तदंगानां वा घटनेन शाकटिकत्वेन वा जीवनं शकटकर्म ३, स्वशकटवृषभादिना परभारवहनात्परेषां वा मूल्येन स्वशकटाद्यर्पणाज्जीवनं भाटककर्म ४, कुद्दालहलादिभिर्भूमिविदारणात्पाषाणादिघटनाद्वा जीवनं स्फोटककर्म ५, तथा यवादिधान्यानां स(सि)क्थादिकरणेन विक्रयोऽपि स्फोटककर्मैव । यदुक्तं-जवचणयागोहुमग्गु-ग्गमाससकरडिप्पभिइयधन्नाणं । सत्तुयदालिकणिक्का, तंडुलकरणाइ फोडयणं ॥१॥ अहवा फोडीकम्मं, सीरेणं भूमिफोडणं जंतू । ओड्डत्तणयं च तहा, तहा य सिलकुट्टयंतं च ॥२॥ इति । प्रथमत एव म्लेच्छा-

दिभ्यो मूल्यदानेन गजदंतानानाय्य विक्रयणं, आकरे वा गत्वा स्वयमानीय विक्रयणं दंतवाणिज्यं। इदं च शंखचमंचामरादीनामप्युपलक्षणं। अनाकरे तु दंतादेर्ग्रहणे विक्रयणे च न दोषः ६। लाक्षावाणिज्यं प्रसिद्धं, उपलक्षणं चेदं नीलीमनःशीलादीनां सुलितधान्यादेर्वा ७। घृततैलसुरामधुवसादिविक्रयो रसवाणिज्यं ८। शृंगिककालकूटादिविक्रयो विषवाणिज्यं, इदं हि जीवघातकशस्त्रायोहरितालादीनामप्युपलक्षणं ९। दासीगवाश्वमहिषोष्ट्रादिविक्रयः केशवाणिज्यं १०। तिलेक्ष्वादीनां यंत्रैः पीडनं यंत्रपीडनं ११। गोतुरगादीनां पंडत्वापादननासावेधनकर्णकंबलादिच्छेदनं निर्लांछनकर्म १२। तृणादिवृद्ध्यै क्षेत्रादिशोधनाय वा वह्नेर्ज्वालनं दवदानं १३। गोधूमादेर्वापनार्थं वा सरोद्रहादिशोषः प्रतीतः १४। असत्यो दुःशीला स्यादयस्तासां पोषणमसतीपोषः, इदं च शुकसारिकाश्वानमार्जारमयूराद्यधर्मप्राणिपोषणस्योपलक्षणं १५। एतानि निबिडमेवंधहेतुत्वात्समयभाषया कर्मादानानीत्युच्यंते। न केवलमेतान्येव त्यजति, अन्यदपि खरं क्रूराध्यवसायसाध्यं कर्म कोट्टपालगुप्तिपालत्वादिकं त्यजति। अल्पसावद्येनैव कर्मणा निर्वहतीत्यर्थः। किं च—

इयरं पि हु सावज्जं, पढमं कम्मं न तं समारभइ।
जं दट्ठूण पयट्टइ, आरंभे अविरओ लोओ ॥ ५० ॥

व्याख्या—श्रावक इतरदनिषिद्धमपि तत्सावद्यं गृहारंभग्रामांतरगमनशकटखेटनादिकं कर्म अन्येभ्यः प्रथमं न समारभते, तत्किमित्याह-यत्कर्म क्रियमाणं दृष्ट्वा अविरतोऽयतनापरो लोक आरंभे तत्कर्मकरणे प्रवर्त्तते, एतावता यदा तुल्यका-

र्यकचारो बहवः समुदिता भवंति तदायं विधिर्द्रष्टव्यः, प्रथमप्रारंभकत्वेन सकलकृतारंभहेतुत्वमस्य मा भूदिति। इत्युक्तं कर्मतो भोगोपभोगव्रतं। ननु प्राक् भोगोपभोगशब्दवाच्या अन्नकृयादयः प्रोक्तास्तेषामेव च प्रमाणमत्र व्रते विधेयं, ततः कर्मत इदं व्रतं न स्यात्, कर्मशब्दस्य क्रियावाचित्वात् क्रियायाश्च भोगोपभोगत्वासंभवादिति चेत्सत्यं, परं कर्मणो वाणिज्यादेर्भोगोपभोगकारणत्वात्, कारणे च कार्योपचारात्कर्माप्यत्र भोगोपभोगत्वेनोक्तमित्यलं चर्चया। अत्र भावना-सव्वेसिं साहूणं, नमामि जेहिं अहियं ति नाऊणं। तिविहेण कामभोगा, चत्ता एवं विचिंतिज्जा ॥ १ ॥ इति भावितं द्वितीयं गुणव्रतं ॥ ७ ॥

अथ तृतीयमनर्थदंडविरमणव्रतं भाव्यते-तत्र यः स्वजनशरीरधर्माणामर्थायारंभः क्रियते सोऽर्थदंडः, शेषस्त्वनर्थदंडस्तस्माद्विरमणं निवृत्तिस्तद्रूपं यद्व्रतं तदनर्थदंडविरमणव्रतमुच्यते, अपध्यानादिचतुर्विधानर्थदंडपरित्यागरूपमित्यर्थः तथाहि-

दंडिज्जइ जेण जिओ, वज्जिय नियदेहसयणधम्मट्ठं।
सो आरंभो केवल-पावफलोऽणत्थदंड त्ति ॥ ५१ ॥

अवज्झाण पावडवएस-हिंसदाणप्पमायचरिएहिं।
जं चउहा सो मुच्चइ, गुणव्वयं तं भवे तइअं ॥ ५२ ॥

आद्या उक्तार्था, द्वितीयस्या व्याख्या यथा-अपकृष्टं हीनं ध्यानमपध्यानमार्त्तं रौद्रं च। अनयोः स्वरूपं चेदं-राज्यो-

पभोगशयनासनवाहनेषु, स्त्रीगंधमाल्यमणिरत्नविभूषणेषु। इच्छाभिलाषमतिमात्रमुपैति मोहा–द्ध्यानं तदार्त्तमिति संप्रवदंति तज्ज्ञाः ॥ १ ॥ संछेदनैर्दहनभंजनमारणैश्च, बंधप्रहारदमनैर्विनिकृंतनैश्च। यो याति रागमुपयाति च नानुकंपां, ध्यानं तु रौद्रमिति संप्रवदंति तज्ज्ञाः ॥ २ ॥ संसारे हि प्रायो धार्मिकाणामपि अंतरांतरापध्यानं जायत एव, परं ते ज्ञानबलादुन्मार्गं गच्छदपि स्वचित्तं संयम्य पुनः सन्मार्गमानयंति। ये तु नैरंतर्येण तत्र प्रवर्त्तंते तेषामनर्थदंड इति १। तथा पापहेतुत्वात्पापं कृष्यादिकर्म तस्य दाक्षिण्यस्थानं विना य उपदेशः स पापोपदेशः २। हिंसनशीलं हिंस्रं विषाग्निहलशस्त्रादि तस्य दानं दाक्षिण्यस्थानं विना असंयताय समर्पणं हिंस्रदानं ३। प्रमादो मद्यादिः, तेन तस्य वाचरितमाचरणं प्रमादाचरितं, तच्च सप्तव्यसनजलकेलितरुशाखादिसमाश्रितदोलाखेलनकुर्कुटादिजीवयोधनकुशास्त्राभ्यासविकथाकरणादिरूपं ज्ञेयं। यद्वा प्रमादाचरितमालस्यव्याप्तत्वं, तच्चाशोधितेंधनधान्यजलादिव्यापारणेन चुल्हकाद्युपरि चंद्रोदयाप्रदानेन अनाच्छादितप्रदीपचुल्हकघृतदध्यादिभाजनधारणादिना च स्वपरजीवोपघातकत्वादिबह्वनर्थकारणमवसेयं ४।

अत एव श्रीपरमगुरुभिः श्राद्धगृहे सप्त गलनानि नव चंद्रोदयाश्च प्रोक्ताः संति। तथाहि—

सुद्धे सावयगेहे, हवइ गलणाइ सत्त सविसेसं।
जलसिट्ठ १ खार २ आछण ३, तक्कं ४ घी ५ तिल्ल ६ चुण्णायं ७ ॥ ५३ ॥

स्पष्टा नवरं चूर्णं पिष्टं तस्य गलनकं चालन्यादि। उपलक्षणाद्दुग्धादेरपि गलनकमवश्यं धार्यं। चंद्रोदयास्तु जलस्थानो १ दूखल २ घरट्ट ३ चूल्हकं ४ घनभूमि ५ दधिमथनस्थान ६ भोजनभूमि ७ शयनस्थान ८ देवाश्रयाणा ९ मुपरिभागे

नवीनश्लक्ष्णवस्त्रनिष्पन्ना नवसंख्याकाः श्रावकेणावश्यं धार्याः, अन्यथानर्थदंडः स्यादिति । एभिर्लक्षणैश्चतुर्द्धा चतुःप्रकारः सोऽनर्थदंडो यन्मुच्यते त्यज्यते तत्तृतीयं गुणव्रतं भवेदिति गाथार्थः ।

अथास्यानर्थदंडस्य विशेषेण त्याज्यत्वं दर्श्यते—

प्रायो गृहिभिर्वर्ज्यः, शक्त्यनुसारेण चार्थदंडोऽपि ।
कथमधिगतपरमार्था, अनर्थदंडं प्रयुंजंते ॥ ५४ ॥

स्पष्टः । इह न हि सर्वेषामप्यनर्थदंडभेदानां दृष्टांता वक्तुं शक्यंते, ततश्चुल्हकोपरि चंद्रोदयाप्रदानलक्षणस्य प्रमादाचरितस्यान्वयव्यतिरेकाभ्यां दृष्टांत उच्यते—

चंदोदयदाणाओ, जाया मिगसुंदरी सया सुहिया ।
तज्जालणाओ कुट्ठी, तन्नाहो परभवे जाओ ॥ ५५ ॥

व्याख्या—चुल्होपरि चंद्रोदयस्य दानान्मृगसुंदरी नाम श्रेष्ठिकन्या सदा सुखिनी जाता । तेषां चंद्रोदयानां ज्वालनाच्च तस्या मृगसुंदर्या नाथो भर्त्ता परभवे कुष्ठी जातः । उपलक्षणादन्येऽपि केचित्तत्संबंधिजनाश्चुल्हकोपरि चंद्रोदयाप्रदानादिनाऽकस्मान्मृत्युरूपं कष्टं प्राप्ताः, इति गाथार्थः, भावार्थस्तु कथानकगम्यस्तच्चैवं—

श्रीपुरे नगरे श्रीषेणो राजा, तस्य देवराजनामा पुत्रः, स च यौवने प्राक्तनदुष्कर्मोदयवशात् कुष्ठी जातस्ततः स सप्त वर्षाणि यावद्विविधप्रतीकारविधानेऽपि नीरोगत्वमप्राप्तः सन् वैद्यैस्त्यक्तस्तदा तद्दुःखदुःखितो राजा 'यो मत्पुत्रं नीरोगं करोति, तस्मै अर्द्धराज्यं ददामीति' पुरे पटहमवादयत्। तत्र चैको यशोदत्तनामा महेभ्यः श्रेष्ठी वसति स्म। तस्य शीलादिसर्वगुणालंकृता लक्ष्मीवती नाम कन्यका आसीत्। तया पटहं निवार्य प्रोक्तं-'अहं राजपुत्रं नीरुजं करिष्यामीति'। ततो राज्ञात्यादरेणाहूता सा पित्रादिसहिता सद्यो नृपमंदिरं गत्वा शीलप्रभावात्स्वहस्तस्पर्शेन तस्य राजकुमारस्य कुष्ठं स्फेटयामास। तदा हृष्टो राजा स्वप्रतिज्ञापालनाय तां कन्यां महतोत्सवेन निजपुत्राय परिणायितवान्। स्वयं च पुत्रं राज्ये न्यस्य गुरुसमीपे दीक्षां गृहीतवान्। ततस्तौ जायापती सुखेन राज्यं पालयामासतुः। अथैकदा तत्र ज्ञानिन आचार्याः समेताः। राजा राज्ञी च सपरिकरौ तद्वंदनार्थं गतौ। गुरुभिर्देशना दत्ता, ततो देशनान्ते ताभ्यां रोगोत्पत्तिकारणे पृष्टे सति गुरवः प्रोचुः-" भो राजन्! प्राग्भवोपार्जितदुष्कर्मोदयतस्ते शरीरे महारोगः समुत्पन्नस्तत्स्वरूपं चेदं—

वसंतपुरे मिथ्यात्वमोहितमतिर्देवदत्तनामा व्यवहार्यवसत्, तस्य धनदेव १ धनदत्त २ धनमित्र ३ धनेश्वर ४ नामानश्चत्वारः पुत्रा आसन्। तेषु धनेश्वरोऽन्यदा व्यवसायार्थं मृगपुरं ययौ। तत्र च पुरे एको जिनधर्मपालनपरो जिनदत्तनामा श्रेष्ठी वसति स्म। तस्य मृगसुंदरी नाम कन्यका। सा च बाल्ये एव गुरुसमीपेऽभिग्रहत्रयं जग्राह-जिनं पूजयित्वा १ साधुभ्यो दानं च दत्त्वा २ अहं भोक्ष्ये, रात्रौ च न भुंजे ३ इति। अथान्यदात्यद्भुतरूपशालिनीं तां मृगसुंदरीं विलोक्य स धनेश्वरो वणिक्पुत्रस्तस्यां दृढानुरागो जातः, परं मिथ्यादृष्टित्वात्तस्मै श्रेष्ठिना कन्या न ददे। ततः स कपटश्रावकीभूय तां कन्यां

परिणीय क्रमेण स्वपुरं जगाम। तत्र च धर्मेर्ष्यया स मिथ्यामतिस्तस्या जिनपूजादिधर्मकृत्यं निषिद्धवान्। तदा स्वनियमे स्थिरचित्तायास्तस्या उपवासत्रयं जातं, चतुर्थे च दिने गृहद्वारमुपागतेभ्यो गुरुभ्यस्तया स्वनियमरक्षणोपायः पृष्टः, गुरुभिर्गुणागुणं विचार्य प्रोक्तं–' हे भद्रे! त्वं चुल्हकोपरि चंद्रोदयं बध्नीयाः, तेन पंचसाधुप्रतिलाभनात्पंचतीर्थनमस्करणाच्च यादृशं फलं जायते तादृशं ते भविष्यति।' ततस्तया गुर्वाज्ञया तथैव कृतं। तदा श्वशुरादिभिः 'किमपि कार्मणमनया कृतमिति' विचिंत्य धनेश्वराय स विचारः प्रोक्तः, तेन च क्रोधात्स चंद्रोदयो ज्वालितः। तया द्वितीयो बद्धः, सोऽपि तथैव ज्वालितः, एवं सप्त दग्धाः। ततः तत्स्वरूपं दृष्ट्वा खिन्नेन श्वशुरेणोक्तं–' हे भद्रे! किमर्थोऽयं प्रयासः?।' तयोक्तं–' जीवदयार्थं' तदा पुनः श्वशुरेण सरोषमूचे–' तव चेज्जीवदया पालनीया भवेत्तर्हि पितृगृहे गच्छ।' तयोक्तं–' कुलदेवैकाकिनी तु न व्रजामि, सकुटुंबेन पितृगृहे मोच्या।' ततः सकुटुंबः श्वशुरस्तामादाय मृगपुरं प्रति चलितो, मार्गे चैकस्मिन् ग्रामे श्वशुरपक्षीयैः प्राघूर्णकभक्त्यर्थं रात्रौ भोजनं निष्पादितं। ततो भोजनार्थं सर्वेऽपि सज्जीभूताः, परं मृगसुंदरी स्वनियमं स्मरंती भोजनोद्यता न जाता, तदा श्वशुरादयोऽपि शुभभवितव्यप्रादुर्भावात्तदनुरोधेन न भुक्ताः। ततो यस्य गृहेऽन्नं निष्पन्नं तस्यैव कुटुंबेन तद्भुक्तं मृतं च।

अथ प्रातस्तान् संबंधिनो मृतान् वीक्ष्य श्वशुरादयो यावदितस्ततो विलोकंते तावदन्नस्थाल्यां सर्पशृंखला दृष्टा। तदा सर्वैरचिंति–' रात्रौ हि अन्नपात्रे धूमाकुलः सर्पः पपात, तेनैते मृता' इति। पश्चात् सर्वैर्वधूः क्षामिता। तयोक्तं–' भो आर्याः! अत एवाहं चुल्हकोपरि चंद्रोदयं बद्धवती, रात्रौ च न भुंजे।' ततस्तद्वचसा ते सर्वेऽपि प्रतिबुद्धाः, जीवितप्रदानात् साक्षा-

स्त्कुलदेवीमिव तां मन्वानाः पश्चादागताः । तदुपदेशात् सुश्रावकाश्च संजाताः । ततो मृगसुंदरी धनेश्वरश्च चिरं सम्यग्धर्ममाराध्य प्रांते समाधिना कालं कृत्वा स्वर्गसुखान्यनुभूय युवां जातौ । त्वया च प्राग्भवे सप्त चंद्रोदया दग्धास्तद्दुष्कर्म निंदादिना बहु क्षपितं परमंशमात्रं स्थितं तेनेह सप्तवार्षिको व्याधिस्तवाभूत् ।" ततो राजा राज्ञी चेत्थं गुरुमुखात् प्राग्भववृत्तांतश्रवणेन जातिस्मरणमवाप्य संसाराद्विरक्तीभूतौ पुत्रं राज्ये न्यस्य प्रव्रज्यां गृहीत्वा प्रांते स्वर्गभाजौ जातौ । इत्यनर्थदंडविरमणे मृगसुंदरीकथानकं । एवमन्यैरपि सुदृष्टिभिश्चुल्हकोपरि चंद्रोदयाप्रदानाद्यनर्थदंडाद्विरमणीयं । अत्र भावना-चिंतेअव्वं च नमो, सअट्ठगाइं च जेहिं पावाइं । साहूहिं वज्जियाइं, निरट्ठगाइं च सव्वाइं ॥ १ ॥ अन्यच्च-तुल्ले वि उअरभरणे, मूढअमूढाणमंतरं पिच्छ । एगाण नरयदुक्खं, अन्नेसिं सासयं सुक्खं ॥ २ ॥ इति भावितं तृतीयं गुणव्रतं ॥ ८ ॥

अथ चतुर्णां शिक्षाव्रतानामवसरः-तत्र शिक्षा पुनः पुनः प्रवृत्तिस्तत्प्रधानानि व्रतानि शिक्षाव्रतानि । शिष्यकेण यथा पुनः पुनर्विद्याऽभ्यस्यते तथा श्रावकेणेमानि व्रतानि पुनः पुनरभ्यसनीयानीत्यर्थः । अथैतेषु यत्प्रथमं सामायिकव्रतं तद्व्याख्यते-तत्र समस्य रागद्वेषरहितस्य आयो लाभः समायः, स प्रयोजनमस्य क्रियानुष्ठानस्येति सामायिकं । तद्रूपं यद्व्रतं तत्सामायिकव्रतमुच्यते । तच्चैवं—

सामाइअमिह पढमं, सावज्जे जत्थ वज्जिउं जोगे ।
समणाणं होइ समो, देसेणं देसविरओ वि ॥ ५६ ॥

व्याख्या—इह सामायिकं नाम प्रथमं शिक्षाव्रतं भवति, यस्मिन् सामायिके कृते सति देशविरतोऽपि सावद्यान्मनोवाक्कायव्यापारान् वर्जयित्वा सर्वविरतानां सदृशो भवति। कथमित्याह—देशेन देशोपमया यथा चंद्रमुखी ललना, समुद्र इव तडाग इति। इतरथा त्वस्यैव साधुश्राद्धयोर्महान् भेदः। तथाहि–साधुरुत्कर्षतो द्वादशांगीमप्यधीते, श्राद्धस्तु षड्जीवनिकायाध्ययनमेव। पुनः साधुरुत्कर्षतः सर्वार्थसिद्धविमानेऽप्युत्पद्यते, श्राद्धस्तु द्वादशे कल्पे एव। तथा साधोर्मृतस्य सुरगतिः सिद्धिगतिर्वा स्यात्। श्राद्धस्य तु सुरगतिरेव। पुनः साधोश्चत्वारः संज्वलनकषाया एव कषायवर्जितो वासौ स्यात्, श्राद्धस्य तु अष्टौ प्रत्याख्यानावरणाः [चत्वारः] संज्वलनाश्च स्युः। पुनः साधोः पंचानां व्रतानां समुदितानामेव प्रतिपत्तिः, श्राद्धस्य तु व्यस्तानां समस्तानां वा इच्छानुसारेण स्यात्। तथा साधोरेकवारमपि प्रतिपन्नं सामायिकं यावज्जीवमवतिष्ठते, श्राद्धस्तु पुनः पुनस्तत्प्रतिपद्यते। पुनः साधोरेकव्रतभंगे सर्वव्रतभंगः स्यात् अन्योऽन्यं सापेक्षत्वात्, श्राद्धस्य तु न तथेत्यादि। अथ कुत्रेदं सामायिकं क्रियते ? इत्याशंक्योच्यते—

मुनेः समीपे जिनमंदिरे वा, गृहेऽथवा यत्र निराकुलः स्यात्।
सामायिकं तत्र करोति गेही, सुगुप्तियुक्तः समितश्च सम्यक् ॥ ५७ ॥

व्याख्या—गेही गृहस्थः प्रथमं मुनिसमीपे सामायिकं करोति, तदभावे जिनमंदिरे, तयोर्द्वयोरप्यभावे तु गृहे तत्करोति। अथवा किं बहुना ? यत्र क्वचित्क्षेत्रे शून्यगृहे मार्गादौ वा स्वयं निराकुलः स्वस्थचित्तः स्यात्तत्र स्थाने सुगुप्तियुक्तः

सम्यक् समितश्च सन् सामायिकं करोति । अत्र हि जिनमंदिरे सामायिककर्त्तारो योग्याः (कर्तुर्योगाः) सम्यक् समाधिमंतो भवंतीति पूर्वं तद्ग्रहणं, तत्रापि मुनिपार्श्वे धर्मवार्त्ताश्रवणादिना विशेषलाभः स्यादिति जिनमंदिरात्प्रथमं मुनिसमीपे ग्रहणमिति भावः । किं च यो हि गृहादौ सामायिकं कुर्यात्सोऽङ्गीकृतसामायिक एव समितिगुप्तियुक्तो गुरुसमीपमागत्य तत्साक्षिकं सामायिकव्रतमुच्चरति । अयमल्पर्द्धिकश्रावकस्य विधिः, महर्द्धिकस्तु राजादिरकृतसामायिक एव साधुपार्श्वमागत्य ततः सामायिकं स्वीकरोति । अन्यथा तु कृतसामायिकस्य तस्यानुगच्छद्भिर्हस्त्यश्वयोधादिभिरधिकरणं स्यादित्यलं प्रपंचनेन । विस्तारार्थिना तु आवश्यकचूर्णिर्विलोकनीया । अथ सामायिकस्थितस्य कृत्यं दर्श्यते—

सामायिकस्थः प्रवरागमार्थं, पृच्छेन्महात्माचरितं स्मरेच्च ।
आलस्यनिद्राविकथादिदोषान्, विवर्जयेत् शुद्धमना दयालुः ॥ ५८ ॥

स्पष्टं, नवरं आलस्यादिदोषास्त्वमी–आलस्य १ निद्रा २ पल्लंठिका ३ अस्थिरासन ४ दृष्टिपरिवृत्ति ५ कार्यांतरप्रवृत्ति ६ भित्त्याद्युपष्टंभा ७ त्वंगोपांगगोपन ८ देहमलोत्तारणा ९ गुल्यादिमोटन १० विश्रामणा ११ कंडूयनानि १२ द्वादश कायदोषाः । तथा कुवचना १ विमृश्यजल्पन २ प्रतिघातवचन ३ यथाच्छंदजल्पन ४ संस्तववचन ५ कलह ६ विकथा ७ प्रहासवचन ८ त्वरितवचन ९ गमनागमनकथनानि १० दशैते वचनदोषाः । तथा अविवेक १ यशःकीर्त्त्यभिलाप २ लाभार्थिताऽ ३ हंकार ४ भय ५ निदानार्थिता ६ संशय ७ रोषा ८ विनया ९ भक्तयो १० दशैते मनोदोषाः । एते सर्वेऽपि द्वात्रि-

शदोषाः सामायिके वर्ज्याः । किं च—

गृही त्रसस्थावरजंतुराशिषु, सदैव तप्तायसगोलकोपमः ।
सामायिकावस्थित एष निश्चितं, मुहूर्त्तमात्रं भवतीह तत्सखः ॥ ५९ ॥

व्याख्या—इहास्मिन् संसारे गृही त्रसेषु स्थावरेषु च जीवसमूहेषु सदैव संतापकत्वात्तप्तलोहगोलकतुल्यो वर्त्तते । सामायिकेऽवस्थितः पुनरेष गृहस्थो मुहूर्त्तमात्रं घटिकाद्वयं यावत् निश्चितं तेषां जीवानां सखा मित्रं भवति, आरंभवर्जितत्वात् । इह सावद्ययोगप्रत्याख्यानरूपस्य सामायिकस्य मुहूर्त्तमानता सिद्धांतेऽनुक्तापि ज्ञातव्या, प्रत्याख्यानकालस्य जघन्यतोऽपि मुहूर्त्तमात्रत्वान्नमस्कारसहितप्रत्याख्यानवदिति । अथ दृष्टांतो दर्श्यते—

सदैव सामायिकशुद्धवृत्ति-र्मानेऽपमानेऽपि समानभावः ।
मुनीश्वरः श्रीदमदंतसंज्ञो, बभूव सद्भूतसमृद्धिभोगी ॥ ६० ॥

व्याख्या—सदैव निरंतरं सामायिके शुद्धा वृत्तिर्वर्त्तनं यस्य स तथोक्तः, अत एव मानेऽपमानेऽपि तुल्यमनोव्यापारः, एवंविधः श्रीदमदंतनामा मुनीश्वरः सद्भूतायाः सम्यक्स्वरूपायाः समृद्धेर्भोगी भोक्ता बभूवेति पद्यार्थः । सामायिकस्थो हि भव्यात्मा एतत्स्वरूप एव भवति । यदुक्तं-निंदपसंसासु समो, समो अ माणावमाणकारीसु । समसयणपर(रि)यणमणो,

मामाइअसंगओ जीवो ॥ १ ॥ इह प्रसङ्गोचितदमदंतवृत्तांतस्त्वयं—

हस्तिशीर्षनगरे दमदंतो राजा प्रबलबलसमृद्धियुक्तः सुखेन राज्यं पालयति स्म। तस्मिन्नवसरे हस्तिनापुरे पांडवाः कौरवाश्च राज्यं पालयामासुः। तेषां च दमदंतेन सार्द्धं सीमानिमित्तको महान् विवादः समजनि। तत एकदा दमदंते जरासंधनृपस्य सेवार्थं गते सति पांडवैः कौरवैश्च तद्देशो भग्नः, तदा तत्प्रवृत्तिं श्रुत्वा क्रुद्धो दमदंतनृपः सद्यो बहुबलं समादाय हस्तिनापुरोपरि समागतः। तत्र चोभयेषामन्योऽन्यं महद्युद्धं संजातं, परं दैववशात्पांडवाः कौरवाश्च भग्नाः, दमदंतस्तु संप्राप्तजयो विजयढक्कां वादयन् स्वस्थानमायातः। ततः कियत्यपि काले गते सति स दमदंत एकदा संध्यायां पंचवर्णवार्दलस्वरूपं विलोक्य संप्राप्तवैराग्यः संसारस्वरूपमपि तादृशमेवासारं विभावयन् प्रत्येकबुद्धतया प्रव्रजितः। ततः प्रतिग्रामं विहरन् एकदा हस्तिनापुरे प्रतोल्या बहिर्देशे स कायोत्सर्गेण तस्थौ। तदा राजवाटिकां गच्छद्भिः पाण्डवैर्मार्गे तं मुनिं विलोक्य कोऽयं मुनिरिति सेवकेभ्यः पृष्टं, तैरुक्तं—'दमदंतराजर्षिरयं।' ततः पांडवैः सद्योऽश्वेभ्य उत्तीर्य सहर्षं प्रदक्षिणात्रयं दत्त्वा मुनिं प्रणम्य तस्य द्विविधमपि बलं प्रशस्याग्रे चलितं। तदनंतरं कौरवाः समेताः, तेषु च वृद्धेन दुर्योधनेन तथैव प्रश्नपूर्वकं तं दमदंतं विज्ञाय—'अहोऽयं त्वस्माकं रिपुरस्ति, अस्य तु मुखमपि न दृश्यं' इत्यादिदुर्वाक्यैस्तं तिरस्कृत्य सक्रोधं साधुसंमुखं बीजपूरफलं प्रक्षिप्याग्रे चलितं। ततस्तदनुगच्छद्भिः सर्वैरपि सैनिकैर्यथा राजा तथा प्रजेतिन्यायात् काष्ठधूलीपाषाणादेर्निक्षेपान्मुनेः समंतादुच्चैस्तरं चत्वरमिव विदधे। अथ पांडवा यथेच्छं वने क्रीडां विधाय पश्चाद्वलमाना मार्गे मुनिस्थाने तन्महच्चत्वरं विलोक्य प्रश्नपूर्वकं तत्सर्वं कौरवकृतं दुश्चरितमवगम्य सद्यस्तत्रागत्य पाषाणादिदूरीकरणपूर्वकं तं दमदंतराजर्षिं

विधिनाभिवंद्य नमस्कृत्य च स्वस्थानं गताः। तदानीमित्थं पाण्डवैर्मानितः कौरवैश्चापमानितोऽपि स मुनीश्वरः स्वमनसोभयत्र समभावं बभार, मनागपि रागद्वेषौ न कृतवान्। ततः स मुनिर्बहुकालं चारित्रमाराध्य प्रांते उत्तमगतिभाग्बभूव। इति दमदंतराजर्षिकथानकं। एवमन्यैरपि निजगुणाभिलाषुकैः सामायिके स्थिरमनःपरिणामैर्भाव्यं। अत्र भावना-धन्ना ते जियलोए, जावज्जीवं करंति जे समणा। सामाइयं विसुद्धं, निच्चं एवं विचिंतिज्जा ॥ १ ॥ कइआ णु अहं दिक्खं, जावज्जीवं जहट्ठिओ समणो। निस्संगो विहरिस्सं, एवं च मणेण चिंतिज्जा ॥ २ ॥ इति भावितं प्रथमं शिक्षाव्रतं ९ ॥

अथ द्वितीयं देशावकाशिकव्रतं भाव्यते-मुत्कलानां नियमानां देशे संक्षिप्तविभागेऽवकाशोऽवस्थानं देशावकाशस्तेन निर्वृत्तं देशावकाशिकं [ व्रतं भाव्यते प्राणातिपातविरमणं विना सर्वेषां व्रतानां यत्प्रत्यहं संक्षेपो विधीयते ] तद्रूपं यद्व्रतं तद्देशावकाशिकव्रतमुच्यते। अयमर्थो-व्रतप्रतिपत्तिसमये गृहीतस्य जीवितावधिकस्य दिग्व्रतस्य दिशावकाशिकत्वं बोध्यमिति। तथाहि-पुव्वं गहिअस्स दिसा-वयस्स सव्वगाण वाणुदिणं। जो संखेवो देसा-वगासिअं तं वयं बिइअं ॥१॥ उक्तार्थाः। अत्राहुर्वृद्धाः-दिग्व्रतसंक्षेपकरणं शेषव्रतसंक्षेपकरणस्याप्युपलक्षणं द्रष्टव्यं, तेषामपि संक्षेपस्यावश्यं कर्त्तव्यत्वात्। प्रतिव्रतं च दिक्सपक्षाद्यवधिना संक्षेपकरणस्य भिन्नव्रतत्वे द्वादश व्रतानीति संख्याविरोधः स्यादिति। एतेन देशावकाशिकं दिग्व्रतस्यैव विषय इति शंका निरस्ता। यच्च ' दिसिवयगहियस्स दिसापरिमाणस्स पइदिणं परिमाणकरणं देसावगासिअं ति ' मूलसूत्रं

१ एतदनन्तरम्-" प्राणातिपातविरमणादीनां वा सर्वेषां व्रतानां यः प्रत्यहं संक्षेपो विधीयते तद्देशावकाशिकं बोध्यमिति " अयं पाठः प्रतिद्वयेऽस्ति ॥

तदुपलक्षणत्वेन व्याख्येयं, सूचामात्रकारित्वात् सूत्रस्येति। तथा च चूर्णिः-एवं सव्ववएसु, जे पमाणा ठविआ ते पुणो पुणो। दिवसओ ओसारेइ, देवसिआओ रत्तिओ सारे ॥ १ ॥ इति। अथात्र व्रते दृष्टांतो दर्श्यते-आसन्ननरकवास-चंडमतिचंड-कौशिकः सर्पः। देशावकाशिकेना-ष्टमकल्पं सत्वरं नीतः ॥१॥ आर्यार्थः सुबोधः। भावार्थस्तु कथानकादवसेयस्तच्चेदं—

कश्चित्क्षपको मुनिर्मासोपवासपारणादिने शिष्यसहित आहारार्थं गतो, मार्गे तच्चरणतले मंडुकीविराधना जाता, तदा शिष्येणोक्तं-'स्वामिन्! भवतेयं मंडुकी मर्दिताऽतो मिथ्यादुष्कृतं वद।' ततस्तद्वचसा संजातकषायः स क्षपको लोकैर्मर्दिता अपरा मंडुकीर्दर्शयन् जगाद-'अरे दुष्टात्मन्! एता मृताः किं मया हताः?।' ततः शिष्यस्तं क्रुद्धं विज्ञाय तदानीं मौनमभजत्। संध्यायामालोचनाक्षणे तं मुनिं स मंडुकीमस्मारयत्। तदा विशेषतः समुत्पन्नरोषः स क्षपको रजोहरण-मुत्पाट्य शिष्यवधायाधावत्। अंतरा च स्तंभेन भग्नशिराः सन् अकस्मान्मृत्वा ज्योतिष्केषु देवो जातः। ततश्च्युत्वा कनकखलाख्ये वने चंडकौशिकनामा तापसो बभूव। तत्रापि प्राक्तनसंस्काराद्बहुलकषायः स एकदाश्रमे फलादि गृह्णतो राजकुमारान् हंतुं करे परशुं गृहीत्वा धावन् अंतरा पादस्खलनात्कस्मिंश्चिद्गर्ते पपात। ततो मृत्वा स तत्रैवा-श्रमे दृष्टिविषो भुजंगम आसीत्। तत्र च वने प्राग्भवाभ्यासतोऽत्यंतं मूर्छितः सन् मनुष्यादिसंचारं सर्वथा स न्यवारयत्। एकदा छद्मस्थावस्थायां श्रीमहावीरस्वामी विहरन् गोपैर्वारितोऽपि लाभं विज्ञाय तद्बिलसमीपे प्रतिमया तस्थौ। ततः स सर्पः सत्वरं बिलान्निर्गत्य भगवंतं प्रेक्ष्य जातोत्कटकषायः सन् दशति स्म। तदा वज्रस्तंभस्येवाचलस्य वीरभगवतः शरी-रान्निर्गतं गोक्षीरधवलं रुधिरं वीक्ष्य विस्मयं प्राप्तः स प्रभुस्वरूपं मनसि चिंतयन् संजातजातिस्मरणः स्वपूर्वभवान् ददर्श।

ततो निर्विषीभूतः स नागो भक्त्या प्रभुं प्रदक्षिणीकृत्य प्रणम्य च प्रभुसमक्षं सर्वमपि स्वकृतजीवहिंसाद्यकृत्यमालोच्यानशनं जग्राह । तदा मद्दृष्ट्या प्राणिनो न बिभीयुरिति विचार्य गृहीतदेशावकाशिकव्रतः सन् बिलमध्ये स्वमुखं प्रक्षिप्य तस्थौ । तदानीमेतत्प्रवृत्तिं श्रुत्वा गोप्यस्तं नवनीतेनानर्चुः, तद्गंधाचोपागतेन कीटिकागणेन शरीरे विलग्य सच्छिद्रीकृतोऽपि स चंडकौशिकः सर्पः कायेन मनसा च निश्चलः सन् अनशनं सम्यक् प्रपाल्य सहस्रारकल्पे महर्द्धिको देवोऽभूत् । इति दशमव्रते चंडकौशिककथानकं ॥ एवमन्यैरपि संसारभीरुभिर्नृभिरेतद्व्रतपालने सादरैर्भवितव्यं । अत्र भावना-सवे अ सवसंगेहिं, वज्जिए साहूणो नमंसिज्जा । सवेहिं जेहिं सवं, सावज्जं सव्वहा चत्तं ॥ १ ॥ इति भावितं द्वितीयं शिक्षाव्रतं ॥ १० ॥

अथ तृतीयं पोषधव्रतं भाव्यते-पोषं धर्मस्य पुष्टिं धत्ते इति पोषधः पर्वदिनानुष्ठेयो व्यापारस्तद्रूपं यद्व्रतं तत्पोषधव्रतमुच्यते । तच्चैवं—

आहारदेहसक्कार-गेहवावारविरइबंभेहिं । पव्वदिणाणुट्ठाणं, तइयं पोसहवयं चउहा ॥ ६१ ॥

व्याख्या—आहार १ देहसत्कार २ गृहव्यापारनिवृत्ति ३ ब्रह्मचर्य ४ भेदाच्चतुर्धा यत्पर्वदिनानुष्ठानं तत्तृतीयं पोषधव्रतं भवति । तत्र निवृत्तिशब्दस्य प्रत्येकं योगादाहारनिवृत्तिरशनादिपरित्यागः १, देहसत्कारनिवृत्तिः स्नानोद्वर्तनविलेपनादिपरित्यागः २, गृहव्यापारनिवृत्तिर्गृहकार्यनिषेधः ३, ब्रह्मचर्यं स्त्रीसेवाप्रतिषेधः ४ इति । अत्र पुनराहारनिवृत्तिरूपः पोषधो द्विधा देशतः सर्वतश्च । तत्र देशतस्त्रिविधाहारप्रत्याख्यायकस्य, सर्वतस्तु चतुर्विधाहारप्रत्याख्यायकस्य स्यात् । शेषभेदास्तु

सर्वत एव । यदुक्तं-करेमि भंते ! पोसहं आहारपोसहं देसओ सव्वओ वा, सरीरसक्कारपोसहं सव्वओ, बंभचेरपोसहं सव्वओ, अव्वावारपोसहं सव्वओ, चउव्विहे पोसहे सावज्जं जोगं पच्चक्खामि, जाव दिवसं अहोरत्तिं वा पज्जुवासामि दुविहं तिविहेणमित्यादि । अन्यत्र पुनरितरथा प्रोक्तमस्ति । तथाहि-अयं चतुर्विधोऽपि द्विधा देशतः सर्वतश्च । तत्राहारपोषधो देशतो विकृत्यादित्यागः, सकृद्द्विर्वा भोजनं, सर्वतस्तु चतुर्विधाहारत्यागः १, देहसत्कारगृहव्यापारपोषधौ तु देशतः कस्यचिद्देहसत्कारविशेषस्य गेहव्यापारस्य चाकरणं, सर्वतस्तु सर्वस्य तस्याकरणं २-३ । ब्रह्मपोषधस्तु देशतो मैथुनप्रमाणकरणं, सर्वतस्तु सर्वथा ब्रह्मचर्यपालनं ४ । अत्रेयं सामाचारी-जो देसपोसहं करेइ सो सामाइयं करेइ वा न वा । जो सव्वपोसहं करेइ सो नियमा सामाइयं करेइ, जइ न करेइ तो वंचिज्जइ, तं कहं ? चेइघरे साहुमूले घरे वा पोसहसालाए वा उम्मुक्कमणिसुवण्णो पढंतो पुत्थगं वा वायंतो सुणंतो धम्मज्झाणं झिआइ त्ति । इह तत्त्वं पुनस्तत्त्वज्ञा विदुः ।

अथ यदुक्तं प्राक् पोषधः पर्वदिनानुष्ठेयो व्यापार इति, तत्र पर्वाणि दर्श्यंते—

**चतुर्दश्यष्टमीदर्श-पौर्णमासीषु पर्वसु । पापव्यापारनिर्मुक्तः, कुरुते पोषधं कृती ॥ ६२ ॥**

स्पष्टं, नवरं दर्शोऽमावास्या । किं नेह नामतयतस्रः पर्वतिथयः, वस्तुतस्तु षट्, मासमध्ये द्वयोश्चतुर्दश्योर्द्वयोरष्टम्योश्च सद्भावादिति । ननु श्रावकः पर्वतिथिष्वेव पोषधतपः कुर्यान्नान्यदेति चेदत्राहुः केचित्-श्रावकेण हि पोषधतपः सर्वास्वपि तिथिषु कर्त्तव्यः, परं यद्यसौ तथा कर्त्तुं न शक्नोति तदा पर्वतिथिषु नियमात्करोतीत्यतः पर्वग्रहणं बोध्यमिति । आवश्यकचू-

त्यादौ तु स्पष्टमेव पोषधकर्त्तव्यतायाः प्रतिदिवसं निषेधः प्रोक्तोऽस्ति । इह तत्त्वं तु सर्वविद्वेद्यं । अथ सर्वाहारपरित्यागादुष्करस्याप्यस्य महापुण्यफलत्वादवश्यं कर्त्तव्यत्वमुच्यते—

नृपनिग्रहरोगादिषु, न ह्यशनाद्यं न धर्ममपि लभसे ।
तत्किं प्रमाद्यसि त्वं, ध्रुवधर्मे पोषधे भव्य ॥ ६३ ॥

व्याख्या—भो भव्य ! नृपनिग्रहो राजकृतो रोधः, रोगो मांद्यं, आदिशब्दाद्धरणकदुर्भिक्षादयः, एतेषु स्थानेषु नृपवैद्याद्यधीनत्वात् त्वमशनादिकं न लभसे, विरतिपरिणामाभावाच्च धर्ममपि न लभसे, तत्तस्मादित्थं पराधीनत्वे स्वस्योभयभ्रष्टतां विलोक्य ध्रुवधर्मेऽनश्वरं धर्मकारणे पोषधे किं प्रमाद्यसि ? नात्र प्रमादो युक्त इत्यर्थः । अथात्र व्रते दृष्टांतो दर्श्यते—

यः पोषधस्थः सुतरां सुरेण, पिशाचनागोरगसर्परूपैः ।
विक्षोभितोऽपि क्षुभितो न किंचित्, स कामदेवो न हि कस्य वर्ण्यः ॥ ६४ ॥

व्याख्या—यः पोषधे स्थितः सन् सुरेण पिशाचगजसर्पाणां दुष्टै रूपैः सुतरामत्यंतं विक्षोभितोऽपि न किंचित्स्वल्पमपि क्षुभितः स कामदेवो नाम वीरश्रावकः कस्योत्तमपुरुषस्य नो वर्ण्यः ? सर्वस्यापि वर्णनीय एव इत्यर्थः, एतद्वृत्तांतस्तु अग्रे वक्ष्यते । अत्र भावना—उग्गं तवंति तवं जे, एएसिं नमो सुसाहूणं । निस्संगा य सरीरे वि, सावगो चिंतए महसं ॥ १ ॥

इति भावितं तृतीयं शिक्षाव्रतं ॥ ११ ॥

अथ चतुर्थमतिथिसंविभागव्रतं भाव्यते–तत्र तिथिपर्वादिलोकव्यवहाररहितत्वादतिथयः साधवस्तेषां संविभागः शुद्धाहारादेः सम्यक् विभजनं तद्रूपं यद्व्रतं तदतिथिसंविभागव्रतमुच्यते । केचिदिदं व्रतं ' यथासंविभाग ' इति पठंति, तत्र यथाप्रवृत्तस्य स्वभावनिष्पन्नस्याहारादेः सम्यक् साधुभ्यो विभजनमिति व्युत्पत्तिः, गृहस्थो हि पोषधस्य पारणके परमविनयेन साधुभ्यो यत् शुद्धाशनादि ददाति तच्चतुर्थं शिक्षाव्रतमित्यर्थः । तथाहि–

जं च गिही सुविसुद्धं, मुणिणो असणाइ देइ पारणए ।

परमविणएण एयं, तुरियमतिहिसंविभागवयं ॥ ६५ ॥

उक्तार्था । इहोपयोगित्वात् किंचिच्चूर्णिभणितं लिख्यते–'पोसह पारंतेण साहूणं अदाउं न वट्टइ पारेउं पुव्वं साहूणं दाउं पच्छा पारेयव्वं, कहं विहीए दायव्वं ? जाहे देसकालो ताहे अप्पणो सव्वं सरीरस्स विभूसं काऊणं साहूपडिस्सयं गओ निमंतेइ भिक्खं गिण्हह त्ति, साहूणं का पडिवत्ती ? ताहे अन्नो पडलगं अन्ना भायणं पडिलेहेइ, मा अंतराइ अ दोसा ठविअगाइ दोसा य भविस्संति । सो जइ पढमाए पोरिसीए निमंतेइ अत्थि य नमोकारइत्ता ताहे घिप्पइ, जइ नत्थि ताहे न घिप्पइ, तं धरियव्वं होहिइ । सो घणं लग्गिज्जा ताहे घिप्पइ संचिक्खाविज्जइ जो वा उग्घाडपोरसीए पारेइ पारणइत्तो अन्नो वा तस्स विसज्जिज्जइ, तेण सावएण सह गम्मइ संघाडओ वच्चइ, एगो न वच्चइ, साहू पुरओ सावओ पच्छओ घरं नेऊण आस

णेणं निमंतिज्ञा, जइ वि न निविठ्ठो विणओ पउत्तो, ताहे भत्तपाणं सयं देइ, अहवा भायणं धरेइ, भजा देइ, अहवा ठिओ अत्थइ, जाव दिण्णं, सावसेसं च गिण्हिअव्वं पच्छाकम्माइपरिहरणठ्ठा, दाऊणं वंदित्ता विसज्जेइ, अणुगच्छइ अ पच्छा सयं भुंजइ जं च किर [ सारं ] साहूणं न दिन्नं तं सावएण न भुत्तव्वं । जहिं पुण साहू नत्थि तत्थ देसकालवेलाए दिसावलोओ कायव्वो विसुद्धेणं भावेणं जइ साहुणो हुंता तो नित्थरिओ होंतो त्ति । एतेन सदापि सुश्राद्धेन साधुभ्यो दानं देयमेव, परमतिथिसंविभागव्रतोच्चारः पर्वपारणके एव भवति । यदुक्तमावश्यकवृत्तौ–पोषधातिथिसंविभागौ तु प्रतिनियतदिवसानुष्ठेयौ, न प्रतिदिवसानुष्ठेयावित्यलं विस्तरेण । किं च श्रावकेण साधुभ्य एषणीयमेवाहारादि देयं महालाभनिबंधनत्वात् । अनेषणीयं तु सति निर्वाहे सर्वथैव न देयमल्पायुर्बंधादिहेतुत्वात् । अत्र कश्चित्प्रश्नयति, ननु कुपात्रेऽप्येषणीयाहारादेर्दानं तथाविधगुणाय संपद्यते किं वा न तथा ? तत्रोच्यते–कुपात्रेभ्यो हि दीयमानमेषणीयमप्यशनादि केवलं पापकारणमेव, न पुनर्निर्जराहेतुः । यदुक्तं श्रीमद्भगवत्यंगे–समणोवासगस्स णं भंते तहारूवं असंजयं अविरयं अप्पडिहयअपच्चक्खायपावकम्मं फासुएण वा अफासुएण वा एसणिज्जेण वा अनेसणिज्जेण वा असणपाणखाइमसाइमेणं पडिलाभेमाणस्स किं किज्जइ ? गोयमा ! एगंतसो से पावकम्मे कज्जइ, नत्थि य से कावि निज्जरा इति । एवं तर्हि श्रावकैः साधुभ्योऽन्यत्र क्वापि दानं न देयमेवेति चेन्नैवं, आगमेऽनुकंपादानस्यानिषिद्धत्वात् । यदुक्तं–पूर्वसूरिभिः—

जं मुक्खठ्ठा दाणं, तं पइ एसो विही समक्खाओ ।

अणुकंपादाणं पुण, जिणेहि न कयावि पडिसिद्धं ॥ ६६ ॥

व्याख्या—मोक्षार्थं यद्दानं तदाश्रित्य एष कुपात्रदाननिषेधलक्षणो विधिः समाख्यातोऽस्ति, परं कर्मनिर्जरामविचिंत्य केवलं कृपयैव यद्दीयते तदनुकंपादानं पुनर्जिनैः परमकृपालुभिर्न कदापि प्रतिषिद्धं, अत एव 'मा णं तुमं पएसी पुव्वं रमणिज्जे भवित्ता पच्छा अरमणिज्जे भविज्जासीति' राजप्रश्नीयोपांगे केशिगणधरोपदेशात् प्रदेशी नरेंद्रो निजदेशं चतुर्धा विभज्य एकेन तद्विभागेन दीनानाथादिनिमित्तं निरंतरं दानशालां प्रवर्त्तयति स्म। दानत्यागान्मा भूज्जिनमतापभ्राजनेति। यदि पुनर्जगद्गुरवः श्राद्धानां सर्वत्र दानाज्ञां न दद्युस्ततस्तुंगिकानगरीनिवासिश्रावकवर्णनाधिकारे 'विच्छड्डिअपउरभत्तपाणा' इति विशेषणोपादानं न कुर्युः, केवलं साधुदाने प्रचुरान्नच्छर्दनाभावात्। ततः कर्मनिर्जरार्थं यद्दानं तत्साधुभ्य एव देयं, अनुकंपादानं पुनः सर्वेभ्योऽपीति निश्चितार्थः। अथ पात्रदानस्यैव विशेष उच्यते—

भयेन लोभेन परीक्षया वा, कारुण्यतोऽमर्षवशेन लोके।
स्वकीर्त्तिप्रख्यार्थितया च दानं, नार्हंति शुद्धा मुनयः कदापि ॥ ६७ ॥

व्याख्या—असत्कृता एते शापादि दास्यंति, लोके मे विरूपं वा जल्पिष्यंतीति भयं १, दानादत्रैव जन्मनि जन्मांतरे वा समृद्ध्यादिप्रार्थनं लोभः २, श्रूयंते किलैते निर्लोभास्ततो दीयमानं गृह्णंति वा न वेति परीक्षा ३, मया दत्तं विना एतेषां वराकाणां कथं निर्वाहो भविष्यतीति कारुण्यं ४, अमुकेनापि दत्तं, किमहं ततोऽपि हीनो यन्न ददामीति अमर्षः ५,

ग्रहीतुरन्यस्य वा मुखान्निजश्लाघाश्रवणेच्छा स्वकीर्त्यर्थिता ६, दानेन सत्कृता एते मया पृष्टं ज्योतिष्कादि वक्ष्यंतीति प्रश्नार्थिता ७, एतैः कारणैः शुद्धा मुनयो लोके कदापि दानं नार्हंति । ते हि स्वनिस्तारबुद्ध्या भक्तिदानस्यैव योग्या इति भावः । (अत्र श्लोके तृतीयपादे प्रशब्दे परे पूर्ववर्णस्य गुरुत्वं न शंक्यं, छंदोग्रंथे ह्रप्रशब्दयोः परतो वैकल्पिकगुरुत्वाभिधानादिति ।) किं च सुपात्रेभ्यो दानं ददता गृहस्थेन पंच दूषणानि सर्वथा वर्जनीयानि, पंच भूषणानि चावश्यं धार्याणि । तत्र दूषणपंचकं यथा—

अनादरो १ विलंवश्च २, वैमुख्यं ३ विप्रियं वचः ४ ।
पश्चात्तापश्च संतापः ५, सद्दानं दूषयंत्यहो ॥ ६८ ॥

भूषणपंचकं यथा—आनंदाश्रूणि १ रोमांचो २, बहुमानः ३ प्रियं वचः ४ ।
पात्रानुमोदना ५ चैतद्, दानभूषणपंचकं ॥ ६९ ॥

स्पष्टार्थं श्लोकद्वयं । पुनः पात्रदानप्रस्तावे भव्यात्मभिः प्रवर्द्धमानमनःपरिणामैर्भाव्यं, परं पंचकश्रेष्ठिवत् हीयमानमनःपरिणामो न धार्यः । पंचकवृत्तांतस्त्वित्थं—

कोल्लरग्रामे पंचकनामव्यवहारिणो गृहे एकदा कोऽपि ज्ञानवान् मुनिराहारार्थं समागतः, तदा समुल्लसद्भावेन तेन

श्रेष्ठिना अखंडधारया घृतदाने दीयमाने किंचिदूनभृतपात्रोऽपि स मुनिर्ज्ञानबलादस्य मनःपरिणामशुद्ध्या महालाभं विज्ञाय 'एतत्परिणामभंगो मा भू'दिति बुद्ध्या यावच्चं न निषेधयति स तावन्मनसश्चंचलतया परिणामपतनात् स चिंतयति स्म– 'अहो लोभी अयं मुनिर्यतः स्वयमेकाकी सन् एतावद्घृतेन किं करिष्यतीति ?।' तथा एतच्चिंतासमकालमेव तस्य हस्ताद् घृतधारापि शनैः शनैः पपात। तदा ज्ञानिना तस्य तादृग्मनःपरिणामान् ज्ञात्वा प्रोक्तं–'मा पत मा पतेति।' श्रेष्ठिनोचे–'स्वामिन्! अहं तु स्थिरतया स्थितोऽस्मि न मनागपि पतामि, भवता कथं मृषोच्यते ?।' मुनिनोक्तं–'भवान् द्रव्यतोऽपतन्नपि भावतः पतितोऽस्ति। (किं बहुना ? द्वादशदेवलोकगमनयोग्याध्यवसायेभ्यो निपत्य प्रथमदेवलोकगमनयोग्याध्यवसायेषु स्थितोऽसि।') एतन्मुनिवचः श्रुत्वा सोऽत्यंतं पश्चात्तापपरो जातः, मुनिस्तु स्वस्थानमगात्। इति पंचकवृत्तांतः।

अथ पुनर्दानकर्मणि सदृष्टांतं भावस्यैव प्राधान्यं दर्श्यते—

नो द्रव्यतः केवलभावशुद्ध्या, दानं ददानो जिनदत्तसंज्ञः।
श्रेष्ठी महालाभमवाप भावं, विना न चैवं किल पूरणाख्यः ॥ ७० ॥

व्याख्या—किलेत्यागमे श्रूयते जिनदत्तनामा श्रेष्ठी प्रभुसंयोगमप्राप्य द्रव्यतो दानं न ददानोऽपि केवलभावशुद्ध्या दानं ददानः सन् महालाभमवाप, तथा पूरणाख्यः श्रेष्ठी तु द्रव्यतो दानं ददानोऽपि भावं विना जिनदत्तश्रेष्ठिवन्महालाभं न प्राप्तोऽर्थाद्द्रव्यप्राप्तिरूपस्य स्वल्पस्यैव लाभस्य भागी संजातः। इति श्लोकार्थः। भावार्थस्तु कथानकगम्यस्तच्चैवं—

एकदा छद्मस्थावस्थायां श्रीवीरस्वामी वैशाल्यां नगर्यां बलदेवस्य गृहे चतुरो मासान् यावत् कृतचतुर्विधाहारप्रत्याख्यानकः कायोत्सर्गेण तस्थौ। तस्मिन्नगरे परमजिनधर्मरतो जिनदत्तनामा जीर्णश्रेष्ठी वसति स्म। स तत्र देवगृहे श्रीवीरस्वामिनं संवीक्ष्य वंदनापूर्वकं चिरमुपास्य स्वमनसि चिंतयति स्म–'अद्य स्वामिना उपवासः कृतोऽस्ति परं प्रातः स्वामी अवश्यं पारणकं करिष्यति तदाहं स्वहस्तेन स्वामिनं प्रतिलाभयिष्यामीति।' एवं प्रतिदिनं चिंतयन् पक्षं मासं च गणयन् स श्रेष्ठी विशुद्धाध्यवसायः सन् चतुरो मासान् निनाय। ततः स चतुर्मासांते पारणकदिने शुद्धाहारसामग्रीं संमेल्य मध्याह्ने गृहद्वारे उपविश्य प्रभोरागमनमार्गं विलोकयन् चिंतयामास–'अद्य श्रीवीरस्वामी यद्यत्र समेष्यति तर्हि अहं मस्तके बद्धांजलिः सन् स्वामिसंमुखं गत्वा स्वामिनं त्रिः प्रदक्षिणीकृत्य वंदित्वा स्वगृहांतर्नेष्यामि। तत्र च भक्त्या प्रधानप्रासुकैषणीयान्नपानादिभिः स्वामिनं प्रति पारणां कारयिष्यामि, ततः पुनर्नत्वा कतिचित्पदानि प्रभुमनुयास्यामि, तदनंतरमहं धन्यंमन्यः सन् शेषमुद्धरितमन्नादि स्वयं भोक्ष्ये' इति। अथ जिनदत्तो यावदित्थं मनोरथश्रेणिं करोति तावत् श्रीवीरस्वामी भिक्षार्थं व्रजन् पूरणश्रेष्ठिगृहे प्राविशत्, तेन च मिथ्यात्विना चेटिहस्तात्स्वामिने कुल्माषा दापिताः, तदा सुपात्रदानमाहात्म्यात्तत्र देवैः पंच दिव्यानि प्रादुष्कृतानि, नृपादिलोकाश्च सर्वेऽपि तद्गृहे मिलितास्तमत्यंतं प्रशंसयामासुः। वीरस्वाम्यपि कुल्माषैः पारणां कृत्वा ततोऽन्यत्र विहारं चक्रुः (चकार)। अथ तदानीं जिनदत्तो दिवि ध्वनंतं देवदुंदुभिं श्रुत्वा विचारयामास–'धिग्मां निर्भाग्यं, अधन्योऽहं यदधुना स्वामी मद्गृहं नागतोऽन्यत्र च क्वापि पारणकं कृतवान्, मया तु ये ये मनोरथाः कृतास्ते सर्वेऽपि निष्फला जाता' इति। अथ तस्मिन् दिवसे तन्नगर्यां पार्श्वनाथसंतानीयः कश्चित्केवलज्ञानी मुनीश्वरः समवासार्षीत्। नृपो

नतः परिपूर्णं प्रहरद्वयं यावत्प्रत्यहं अष्टलक्षाधिकैककोटिसंख्याः सौवर्णिकाः प्रदीयंते। यदुक्तमावश्यके-एगा ..., अट्ठेव अणूणगा सयसहस्सा। सूरोदयमाईयं, दिज्जइ पायरासीओ ॥ १ ॥ तिण्णेव य कोडिसया, अट्ठासीयं च ..कोडीओ। असियं च सयसहस्सा, एयं संवच्छरे दिन्नं ॥ २ ॥ अथ दानसमयोद्भवाः षडतिशया दृश्यंते-यदा सौवर्ण..ष्टिं भृत्वा प्रभुर्दानं ददाति तदा सौधर्मेंद्रस्तद्दक्षिणे करे महाशक्तिं स्थापयति। ततो मनागपि खेदोत्पत्तिर्न जायते। इहा..तवीर्यसंपन्नस्य भगवतः करे इंद्रेण शक्तेः स्थापनमयुक्तमिति न शंक्यं, भगवतोऽनंतबलत्वे सत्यपि इंद्रस्य तदकरणे स्वकीयचिरंतनस्थितेर्भक्तेश्च भंगप्रसंगात्, तस्मादनादिस्थितिपरिपालनाय स्वभक्तिदर्शनाय चेंद्रस्य तत्करणं युक्तमेवेत्यलं प्रपंचेन १। तथेशानेंद्रः स्वर्णरत्नमयीं यष्टिं गृहीत्वांतरा गृह्णतोऽपरान् सामान्यसुरान् वर्जयन् यद्येन लभ्यं तत्तस्मै जिनहस्ताद्दापयन् 'प्रभो! मह्यं देहीति' लोकान् शब्दं कारयति २। तथा चमरेंद्रो बलींद्रश्च जनलाभानुसारात्प्रभोर्दानमुष्टिं प्रपूरयेत् हापयेद्वा ३। तथा भवनपतिदेवा दानप्रतिग्रहार्थं भारतान् मनुष्यान् तत्रानयंति ४। व्यंतराः पुनस्तान्मनुष्यान् स्वस्थानं प्रेषयंति ५। ज्योतिष्कास्तु विद्याधरान् तद्दानं ग्राहयंति ६। किं च इंद्रा अपि तद्दानं गृह्णंति यतस्तत्प्रभावात्तेषां देवलोके द्वादश वर्षाणि यावत्कोऽपि विग्रहो न स्यात्। तथा चक्रवर्त्यादयो भूपाः स्वभांडागारस्याक्षयार्थं तद्दानं गृह्णंति। श्रेष्ठ्यादिलोकास्तु स्वयशःकीर्त्यादिवृद्ध्यर्थं तद्ग्रहणं कुर्युः। तथा रोगिणः पुरुषा मूलरोगहान्यर्थं द्वादश वर्षाणि यावन्नवीनरोगोत्पत्तिनिवारणार्थं च तद्दानं गृह्णंति। किं बहुना? सर्वेऽपि भव्यास्तद्योगं प्राप्य स्ववांछितार्थसिद्ध्यर्थं श्रीजिनेंद्रहस्ताद्दानग्रहणं कुर्वंत्येव। अभव्यास्तु न कदापि तद्दानं प्राप्नुवंति, शास्त्रे तेषां तीर्थंकरदानप्रभृतिकतिपयोत्तमभावप्राप्तेरयोग्यत्वाभिधानात्।

नगरलोकैः सह तत्र गत्वा तं वंदित्वाऽपृच्छन्–' स्वामिन् ! अस्मिन्नगरे कः पुण्यवान् जीवो विद्यते ? । ' केवलिना प्रोक्तं– 'इह जिनदत्तश्रेष्ठितुल्योऽन्यः कोऽपि पुण्यवान्नास्ति ।' राज्ञोक्तं–' स्वामिन् ! अनेन तु वीरस्वामिने पारणकं न कारितं, किं तु पूरणश्रेष्ठिना तत्कारितं, अतः स कथं न पुण्यवान् ? । ' ततः केवली भगवान् मूलतः सर्वमप्यस्य भावनास्वरूपं निगद्य प्रोवाच–' भो राजन् ! द्रव्यतस्तेन दानं दत्तं, परं भावतोऽनेन परमेश्वरः प्रतिलाभितः, पुनस्तदा भावसमाधिं बिभ्रताऽनेन द्वादशस्वर्गगमनयोग्यं कर्मोपार्जितं, तथा यद्यसौ तदानीं देवदुंदुभिं नाश्रोष्यत् ततस्तदैव केवलज्ञानं प्राप्स्यत् । पूरणश्रेष्ठिना तु भावशून्यत्वात् सुपात्रदानतः स्वर्णवृष्ट्यादिकमेव फलं लब्धं, न ह्यतोऽधिकं किंचिदिति । ' अथैवं ज्ञानिवचः श्रुत्वा ते सर्वेऽपि जिनदत्तं प्रशस्य स्वस्थानं जग्मुः । जिनदत्तश्रेष्ठ्यपि चिरकालं शुद्धं श्राद्धधर्ममाराध्याच्युतकल्पं जगाम । इति दान-विषये भावशुद्धौ जीर्णश्रेष्ठिकथानकं । एवमन्यैरपि श्रद्धालुभिर्दानक्रियायां विशुद्धभावो धार्यः, येन सर्वसमृद्धिवृद्धिप्रसिद्धयः स्वयमेव समुल्लसेयुः । अत्र भावना–धन्ना ते सप्पुरिसा, जे मणसुद्धीइ सुद्धपत्तेसु । सुद्धासणाइदाणं, दिंति सया सिद्धिगइहेउं ॥१॥

अथ सर्वधर्मेषु दानस्य गौणतां वदतां मतं निराकर्तुमागमानुसारेण तस्य प्राधान्यं दर्श्यते—

सर्वतीर्थकरैः पूर्वं, दानं दत्त्वादृतं व्रतं । तेनेदं सर्वधर्माणा–माद्यं मुख्यतयोच्यते ॥ ७१ ॥

स्पष्टं, नवरं तीर्थंकरदानविधिस्त्वयं–प्रथमं शक्राज्ञया धनदलोकपालः क्षणाष्टकनिर्मितैः प्रत्येकं षोडशमाषप्रमितैर्जिन-पितृनामांकितैः सांवत्सरिकदानयोग्यैः सौवर्णैर्जिनेंद्राणां भांडागारं पूरयति, ततो जिनेश्वरैर्लोके दानप्रवृत्त्यर्थं सूर्योदयादनंतरं

१ 'दनंतरं प्रहरद्वयाद्धिकं यावत्' इति प्रतिद्वये पाठः ।

घटीषट्कात्परतः परिपूर्णं प्रहरद्वयं यावत्प्रत्यहं अष्टलक्षाधिकैककोटिसंख्याः सौवर्णिकाः प्रदीयंते। यदुक्तमावश्यके-एगा हिरण्णकोडी, अट्ठेव अणूणगा सयसहस्सा। सूरोदयमाईयं, दिज्जइ पायरासीओ ॥ १ ॥ तिण्णेव य कोडिसया, अट्ठासीयं च हुंति कोडीओ। असियं च सयसहस्सा, एवं संवच्छरे दिन्नं ॥ २ ॥ अथ दानसमयोद्भवाः षडतिशया दर्श्यंते-यदा सौवर्णमुष्टिं भृत्वा प्रभुर्दानं ददाति तदा सौधर्मेंद्रस्तद्दक्षिणे करे महाशक्तिं स्थापयति। ततो मनागपि खेदोत्पत्तिर्न जायते। इहानंतवीर्यसंपन्नस्य भगवतः करे इंद्रेण शक्तेः स्थापनमयुक्तमिति न शंक्यं, भगवतोऽनंतबलत्वे सत्यपि इंद्रस्य तदकरणे स्वकीयचिरंतनस्थितेर्भक्तेश्च भंगप्रसंगात्, तस्मादनादिस्थितिपरिपालनाय स्वभक्तिदर्शनाय चेंद्रस्य तत्करणं युक्तमेवेत्यलं प्रपंचेन १। तथेशानेंद्रः स्वर्णरत्नमयीं यष्टिं गृहीत्वांतरा गृह्णतोऽपरान् सामान्यसुरान् वर्जयन् यद्येन लभ्यं तत्तस्मै जिनहस्ताद्दापयन् 'प्रभो! मह्यं देहीति' लोकान् शब्दं कारयति २। तथा चमरेंद्रो बलींद्रश्च जनलाभानुसारात्प्रभोर्दानमुष्टिं प्रपूरयेत् ह्रापयेद्वा ३। तथा भवनपतिदेवा दानप्रतिग्रहार्थं भारतान् मनुष्यान् तत्रानयंति ४। व्यंतराः पुनस्तान्मनुष्यान् स्वस्थानं प्रेषयंति ५। ज्योतिष्कास्तु विद्याधरान् तद्दानं ग्राहयंति ६। किं च इंद्रा अपि तद्दानं गृह्णंति यतस्तत्प्रभावात्तेषां देवलोके द्वादश वर्षाणि यावत्कोऽपि विग्रहो न स्यात्। तथा चक्रवर्त्यादयो भूपाः स्वभांडागारस्याक्षयार्थं तद्दानं गृह्णंति। श्रेष्ठ्यादिलोकास्तु स्वयशःकीर्त्यादिवृद्ध्यर्थं तद्ग्रहणं कुर्युः। तथा रोगिणः पुरुषा मूलरोगहान्यर्थं द्वादश वर्षाणि यावन्नवीनरोगोत्पत्तिनिवारणार्थं च तद्दानं गृह्णंति। किं बहुना? सर्वेऽपि भव्यास्तद्योगं प्राप्य स्ववांछितार्थसिद्ध्यर्थं श्रीजिनेंद्रहस्ताद्दानग्रहणं कुर्वंत्येव। अभव्यास्तु न कदापि तद्दानं प्राप्नुवंति, शास्त्रे तेषां तीर्थंकरदानप्रभृतिकतिपयोत्तमभावप्राप्तेरयोग्यत्वाभिधानात्।

तथा च तच्छास्त्रं—जह अभवियजीवेहिं, न फासिया एवमाइया भावा । इंदत्तमणुत्तरसुर-सिलायनरनारयत्तं च ॥ १ ॥ इह नारयत्तं ति नारदत्वमित्यर्थः । केवलिगणहरहत्थे, पव्वज्जा तित्थवच्छरं दाणं । पवयणसुरीसुरत्तं, लोगंतियदेवसामित्तं ॥ २ ॥ तायत्तीससुरत्तं, परमाहम्मिअत्त जुयलमणुअत्तं । संभिन्नसोय तह पुव्व-धराहारयपुलायत्तं ॥ ३ ॥ मइनाणाइसु लद्धी, सुपत्त-दाणं समाहिमरणत्तं । चारणदुगमहुसप्पिय, खीरासवखीणठाणत्तं ॥ ४ ॥ तित्थयरतित्थपडिमा-तणुपरिभोगाइ कारणे वि पुणो । पुढवाइयभावंमि वि, अभव्वजीवेहिं नो पत्तं ॥ ५ ॥ चउदसरयणत्तं पि य, पत्तं न पुणो विमाणसामित्तं । सम्मत्तना-णसंयम-तवाइभावा न भावदुगे ॥ ६ ॥ अभव्यानामौपशमिकक्षायिकलक्षणे भावद्विके सम्यक्त्वादिभावा न स्युः । औपश-मिकवर्जनाच्च भावतः क्षायोपशमिकभावेऽपि एते न स्युः । द्रव्यतः पुनर्भवंत्यपीत्यर्थः । अणुभवजुत्ता भत्ती, जिणाण साह-म्मिआण वच्छल्लं । न य साहेइ अभव्वो, संविग्गत्तं न सुप्पक्खं ॥७॥ सुप्पक्खं ति शुक्लपाक्षिकत्वमित्यर्थः । येषां किंचिदूनपुद्गल-परावर्त्तार्धमात्रसंसारस्ते शुक्लपाक्षिकाः, ये त्वधिकतरसंसारभाजस्ते कृष्णपाक्षिकाः । जिणजणयजणणिजाया, जिणपक्खोदी-वगा जुगप्पहाणा । आयरियपयाइदसगं, परमत्थगुणड्ढमप्पत्तं ॥ ८ ॥ अणुबंध १ हेउ २ सरूवा ३, तत्थ अहिंसा तिहा जिणुद्दिट्ठा । दव्वेण य भावेण य, दुहावि तेहिं न संपत्ता ॥ ९ ॥ इह साक्षाज्जीवानां योऽविघातः सा स्वरूपाहिंसा, या च यतनारूपेण प्रवृत्तिः सा हेत्वहिंसा, यत्पुनस्तस्या अहिंसायाः फलरूपेण परिणमनं साऽनुबंधाहिंसा जिनाज्ञाया अखंडनमि-त्यर्थः, इत्यभव्यकुलकं ॥ तथा प्रमोदनिसमये स्वस्य मातापितरौ भ्राता च दानशालात्रयं कारयित्वा तत्रान्नपानानि १ वस्त्राणि २ अलंकारांश्च ३ दापयंतीत्यलं प्रसंगेन । इति भावितं सप्रसंगं चतुर्थं शिक्षाव्रतं ॥ १२ ॥ तद्भावनेन च

भावितानि द्वादशापि व्रतानि । अथ निगमनं—

इत्थं व्रतद्वादशकं दधाति, गृही प्रमोदेन प्रतिव्रतं हि ।
पंचातिचारान् परिवर्जयंश्च, ध्रुवं यथाशक्त्यापि भंगषट्के ॥ ७२ ॥

व्याख्या—गृही गृहस्थ इत्थमनंतरोक्तप्रकारेण व्रतद्वादशकं प्रमोदेन हर्षेण भंगषट्केऽपि षट्स्वपि भंगकेषु यथाशक्ति दधाति, स्वनिर्वाहं विचिंत्य एकं द्वे त्रीणि वा समस्तानि वा व्रतानि प्रतिपद्यते इत्यर्थः। किं कुर्वन्? प्रतिव्रतं ध्रुवं निश्चितं पंच पंचातिचारान् परिवर्जयन्, अतिचारास्तु विस्तरभयादत्र नोपदर्शिताः संति, ते च ग्रंथांतरेभ्यः सुधीभिः स्वयमभ्यूह्या इति। इहातिचाराणां पंचत्वसंख्या तु बाहुल्यमाश्रित्य प्रोक्तास्ति, तेन भोगोपभोगव्रते विंशतिरतिचारा अवगंतव्याः। अत्र प्राक् सूचिताः षड् भंगकास्त्वेवं-एकविधमेकविधेन, यथा हिंसादिकं न करोति न कारयति वा मनसा वाचा कायेन वा १। एकविधं द्विविधेन, यथा न करोति न कारयति वा मनोवाग्भ्यां मनःकायाभ्यां वाक्कायाभ्यां वा २। एकविधं त्रिविधेन, यथा न करोति न कारयति वा मनोवाक्कायैः ३। द्विविधमेकविधेन, यथा न करोति न कारयति मनसा वाचा कायेन वा ४। द्विविधं द्विविधेन, यथा न करोति न कारयति मनोवाग्भ्यां मनःकायाभ्यां वाक्कायाभ्यां वा ५। द्विविधं त्रिविधेन, यथा न करोति न कारयति मनोवाक्कायैः ६। इत्यमेकविंशतिभंगकयुक्ता षड्भंगीयं, श्रावकाणां प्रायोऽनुमतिनिषेधो नास्तीति तद्भंगका अपि न दर्शिताः। अत्र द्वादश व्रतान्याश्रित्य भंगकभेदविवक्षायां तु प्रतिपत्तॄणां कर्मक्षयोपशमवैचित्र्याद्बहवो

भेदाः समुत्पद्यंते । यदाहुः—

**तेरस कोडिसयाइं, चुलसीइजुयाइं बारस य लक्खा। सत्तासीइ सहस्सा, दो य सया तह दुरग्गा य। ७२**

व्याख्या—त्रयोदशकोटिशतानि चतुरशीतिकोटयो द्वादश लक्षाः सप्ताशीतिसहस्राः द्वे शते द्व्यधिके इत्येतावती श्रावकाणामभिग्रहसंख्या श्रीजिनेंद्रैरुपदिष्टा। एतदानयनोपायस्तु, प्रवचनसारोद्धारगतषट्त्रिंशदधिकद्विशततमद्वारादवगंतव्यः। किंच द्वादशव्रतेषु आद्यान्यष्टौ व्रतानि एकदापि प्रतिपन्नानि यावज्जीवं स्युः, अतो यावत्कथिकान्युच्यंते। चत्वारि शिक्षाव्रतानि तु मुहूर्ताद्यवधिना पुनः पुनः स्वीकार्यत्वादल्पकालभावीनि, अत इत्वराण्युच्यंते। तथा एतेषु आद्यानि पंच व्रतानि धर्मद्रुमस्य मूलभूतत्वान्मूलगुणा उच्यंते, शेषाणि सप्त व्रतानि तु धर्मद्रुमस्य शाखाप्रायत्वेनोत्तररूपत्वादणुव्रतानां गुणकरणाच्चोत्तरगुणा उच्यंते इति। इह प्राग्एकैकं व्रतमाश्रित्य दृष्टांता दर्शिताः, सांप्रतं पुनः समुदितानि द्वादश व्रतान्याश्रित्य श्रीवीरशासने सर्वश्राद्धेषु गुणैर्वृद्धानामुपासकदशांगप्रसिद्धानां दशश्राद्धानां दृष्टांताः क्रमेण लेशतो दर्श्यंते। तत्र तावद्दशानां नामानीमानि,—आनंदः १ कामदेव २ चुलनीपिता ३ सुरादेव ४ चुल्लशतकः ५ कुंडकोलिकः ६ सद्दालपुत्रो ७ महाशतको ८ नंदिनीपिता ९ तेतलीपिता १० चेति।

तत्रानंदश्राद्धवृत्तांतो यथा—वाणिज्यग्रामे नगरे द्वादशकोटिसौवर्णिकस्वामी आनंदनामा गाथापतिर्वसति स्म, तस्य चतस्रो हिरण्यकोटयो निधानप्रयुक्ता आसन्, एतावत्य एव ता वृद्धिप्रयुक्ता आसन्, एतावत्य एव पुनर्गृहोपस्करादिविस्तारप्रयुक्ता आसन्। तथा प्रत्येकं दशदशसहस्रगोनिष्पन्नानि चत्वारि गोकुलान्यभवन्। पुनस्तस्य परमशीलसौभाग्यादिगुण-

धारिणी शिवानंदा नाम्नी भार्यासीत् । तथा वाणिज्यग्रामाद्बहिरीशानकोणे कोल्लाकनाम्नि सन्निवेशे तस्यानंदस्य बहवो मित्र-ज्ञातीयस्वजनपरिजनाः परिवसंति स्म । अथैकदा वाणिज्यग्रामसमीपवर्त्तिनि दूतिपलाशचैत्ये श्रीमहावीरस्वामी समवसृतः, पर्षद् मिलिता, तदा स्वाम्यागमनवार्त्तां श्रुत्वा आनंदगाथापतिः स्नानपूर्वकं शुद्धवस्त्राणि परिधाय बहुजनपरिवृतस्तत्र गत्वा स्वामिनं वंदित्वोचितस्थाने उपविष्टः, स्वामिना देशना दत्ता, तत आनंदो धर्मं श्रुत्वा संप्राप्तशुद्धश्रद्धानः सन् स्वामिनं प्रोचे– 'भगवन्! भवदुक्तो धर्मो मह्यं रुचितस्ततोऽहं भवत्समीपे द्वादश व्रतानि ग्रहीतुमिच्छामि ।' स्वामिनोक्तं 'यथासुखं देवानुप्रिय ! मा प्रतिबंधं कार्षीः ' तत आनंदेन स्वामिसमीपे द्वादश व्रतानि गृहीतानि, तद्विशेषविचारस्तूपासकदशांगतो बोध्यः, व्रतग्रहणानंतरं चानंदश्रावको भगवंतं नत्वेत्यवादीत्–" स्वामिन्नद्यप्रभृति अन्ययूथिकान् अन्ययूथिकदेवान् अन्ययूथिकैः स्वदेवत्वेन परिगृहीतार्हत्प्रतिमालक्षणान् स्वदेवानपि अहं न वंदिष्ये न नमस्करिष्ये, पुनस्तैः पूर्वमसंभाषितः सन् नाहं तैः सहालापसंलापौ करिष्ये, पुनस्तेभ्यो धर्मबुद्ध्याऽशनादिकं न प्रदास्ये, परं राजाभियोगादिषडाकारेभ्योऽन्यत्रायं मे नियमोऽस्ति । पुनरद्यप्रभृति श्रमणान्निर्ग्रंथान्प्रासुकैषणीयाहारादिभिः प्रतिलाभयन् विहरिष्यामि ।" एवमभिग्रहं गृहीत्वा स्वामिनं त्रिकृत्वो वंदित्वा स आनंदश्रावकः स्वस्थानमगात् । तदा तद्भार्या शिवानंदापि पत्युर्मुखादेतां प्रवृत्तिं श्रुत्वा स्वयमपि भगवत्समीपे गत्वा तथैव द्वादश व्रतानि जग्राह ।

तत आनंदश्रावकः प्रवर्द्धमानभावेन पोषधोपवासादिसद्धर्मकृत्यैरात्मानं भावयन् चतुर्दश वर्षाणि व्यतिक्रमयति स्म । पंचदशे च वर्षे वर्त्तमाने एकदा स आनंद एकादश प्रतिमा धर्त्तुकामः स्वकीयमित्रज्ञातीयस्वजनादीन् सर्वान् संमेल्याशना-

दिभिः सत्कार्य तत्समक्षं स्वकीयं ज्येष्ठपुत्रं स्वकुटुंबे स्थापयित्वा तान् सर्वान् स्वपुत्रं चापृच्छ्य स्वयं कोल्लाकसन्निवेशे स्वकीयपोषधशालायामागत्य तां प्रमार्ज्य, उच्चारप्रस्रवणभूमिं च प्रतिलिख्य दर्भसंस्तारकमारुह्यावस्थितः । तत्र च प्रथमामुपासकप्रतिमामुपसंपद्य सूत्रोक्तविधिना सम्यगाराध्य क्रमेणैकादशीं प्रतिमामाराधितवान् । ततस्तेन तपःकर्मणा संशोषितशरीरस्यानंदस्यैकदा विशुद्धाध्यवसायैर्ज्ञानावरणीयकर्मक्षयोपशमादवधिज्ञानं समुत्पन्नं । तदनंतरमन्यदा कदाचिद्वाणिज्यग्रामाद्बहिः श्रीवीरस्वामी समवसृतः । तदा स्वामिनमापृच्छ्य इंद्रभूतिरनगारस्तृतीयायां पौरुष्यां वाणिज्यग्रामे यथारुचि आहारं गृहीत्वा ग्रामाद्बहिर्निर्गच्छन् कोल्लाकसन्निवेशस्य नातिदूरं नातिसमीपं च व्रजन् लोकमुखादानंदस्य तपःप्रतिपत्त्यादिप्रवृत्तिं निशम्य स्वयमानंदं प्रति विलोकनाय कोल्लाकसन्निवेशे पोषधशालामुपागतः । तदानंदो भगवंतं गौतममागच्छंतं विलोक्य हृष्टः सन् वंदित्वैवमवादीत्–' स्वामिन् ! तपसा नाड्यस्थिमात्रशरीरोऽहं भवत्समीपे आगंतुं न शक्नोमि, अतो भवतैव प्रसादं कृत्वाऽत्रागम्यतां ।' ततो गौतमस्वामी यत्रानंदः स्थितोऽभूत्तत्रागतः, तदानंदो गौतमं त्रिकृत्वो मस्तकेन पादयोर्वंदित्वैवमपृच्छत्–' स्वामिन् ! गृहस्थस्य गृहमध्ये वसतोऽवधिज्ञानमुत्पद्यते ? ।' स्वामिनोक्तं–' हंतोत्पद्यते । ' ततस्तेनोक्तं–' स्वामिन् ! ममाप्यवधिज्ञानं समुत्पन्नमस्ति, तेनाहं पूर्वस्यां दक्षिणस्यां पश्चिमायां च दिशि प्रत्येकं लवणसमुद्रे पंचशतयोजनप्रमितं क्षेत्रं जानामि पश्यामि च, उत्तरस्यां दिशि हिमवद्वर्षधरपर्वतं यावज्जानामि पश्यामि च, ऊर्ध्वं सौधर्मकल्पं यावत् अधस्तु रत्नप्रभापृथिव्या लोलच्चुयं नाम नरकावासं यावज्जानामि पश्यामि च । " तत आनंदं प्रति गौतमः प्रोचे–' भो आनंद ! गृहस्थस्यावधिज्ञानमुत्पद्यते, परं नैतावन्महत्तरं, तस्मात्त्वमेतस्य स्थानस्यालोचननिंदनादिकं कुरु । ' तत आनंदो

गौतमं प्रत्येवमवादीत्–'स्वामिन् ! जिनवचने सत्यार्थानामालोचनादि स्यात् ?।' गौतमेनोक्तं–'न भवति।' तदा आनंदेनोक्तं–'यद्येवं तर्हि स्वामिन् ! भवतैव एतत्स्थानस्यालोचनादि कार्यं।' ततो भगवान् गौतम आनंदेनैवमुक्तः सन् शंकितः सद्य आनंदसमीपात्प्रतिनिष्क्रम्य दूतिपलाशचैत्ये श्रीवीरस्वामिसमीपमागत्य गमनागमनप्रतिक्रमणादिपूर्वकं स्वामिनं नत्वा सर्वमपि तद् वृत्तांतं निवेद्यैवमवादीत्–'भगवन् ! तत्स्थानमानंदेनालोच्यं किं वा मया ?' भगवानुवाच–'हे गौतम ! त्वमेवैतत्स्थानमालोचय। आनंदं प्रति एतमर्थं क्षमयस्व।' ततो भगवान् गौतमो भगवद्वचनं विनयेन तथेति प्रतिपद्य स्वयं तत्स्थानस्यालोचनादि गृहीत्वा आनंदश्रावकं प्रति तमर्थं क्षमयामास। ततः स आनंदश्रावको बहुभिः शीलव्रतादिधर्मकर्त्तव्यैरात्मानं भावयित्वा विंशतिवर्षाणि यावत् श्रावकपर्यायं प्रपाल्य प्रांते मासिकीं संलेखनां विधाय समाधिना कालं कृत्वा सौधर्मे कल्पेऽरुणाभविमाने चतुःपल्योपमस्थित्या देवत्वेनोत्पन्नः, ततश्च्युत्वा महाविदेहे सेत्स्यति। इति आनंदश्राद्धवृत्तांतः १॥

अथ कामदेववृत्तांतो यथा–चंपायां नगर्यां कामदेवनामा गाथापतिर्वसति स्म। तस्य भद्रानाम्नी भार्या। तथाष्टादशकोटिसौवर्णिकानि द्रव्यमासीत्। तत्र षट् हिरण्यकोटयो निधाने प्रयुक्ता आसन्, एतावत्य एव वृद्धिप्रयुक्ता आसन्, एतावत्य एव पुनर्विस्तारे प्रयुक्ता आसन्। तथा प्रत्येकं दशदशसहस्रगोनिष्पन्नानि षट् गोकुलान्यभवन्। एकदा तन्नगरपार्श्ववर्त्तिनि पूर्णभद्रचैत्ये श्रीवीरस्वामी समवसृतः, तदानंदश्रावकवदनेनापि द्वादश व्रतानि गृहीतानि। ततः क्रमेणायमपि तद्वत् स्वज्येष्ठपुत्रं कुटुंबे स्थापयित्वा स्वयं पोषधशालायामागत्य पोषधं कृत्वावस्थितः। ततोऽर्धरात्रसमये तस्य कामदेवस्य समीपे एको मायी मिथ्यात्वी देवः प्रादुर्भूयैकं महद्भयानकमवाच्यविकरालस्वरूपं पिशाचं विकुर्व्य हस्ते तीक्ष्णधारोल्लसितं

खड्गं समादाय कामदेवं प्रत्येवमवादीत्–'हंहो! कामदेव! श्रमणोपासक! अप्रार्थ्यप्रार्थक! धीह्रीवर्जित! धर्मपुण्यस्वर्गमोक्षवांछक! एतानि शीलादिव्रतानि पोषधोपवासादीनि च धर्मकृत्यानि शीघ्रं परित्यज, नो चेदद्याहमेतेन तीक्ष्णखड्गेन त्वां खंडशः करिष्यामि, येन त्वं दुःखार्त्तः सन् अकाले एव मृत्युं प्राप्स्यसि।' ततः स कामदेवस्तेन पिशाचरूपेणैवमुक्तोऽप्यभीकोऽक्षुभितोऽचलितस्तूष्णीको धर्मध्यानोपगतः सन् तस्थौ। ततः स देवस्तं श्राद्धं तादृग् निश्चलं विज्ञाय द्वितीयतृतीयवारं पुनरेवमेवोवाच, परं स मनागपि न क्षुभितः। तदा समुद्भूतात्यंतकोपः स देवो ललाटे भ्रूकुटिं कृत्वा खड्गेन कामदेवं खंडशः करोति स्म। तथापि कामदेवस्तां महावेदनां सम्यक् सहमानो धर्मे निश्चलचित्तः सन् तस्थौ। ततः स देवः पिशाचरूपेण तं चालयितुमशक्नुवन् खेदात् शनैः शनैः पश्चादपसरन् पोषधशालाया बहिर्निर्गत्य तत्पिशाचरूपं परित्यज्यैकं महत्प्रचंडशुंडादंडमितस्तत उछालयंतं मेघमिव गुलगुलायमानं भीमाकारं हस्तिरूपं विकुर्व्य पोषधशालायामागत्य कामदेवं प्रति पुनर्बभाषे–'हंहो कामदेव! यदि मदुक्तं न करिष्यसि तर्हि अद्याहमनया शुंडया त्वां गृहीत्वाकाशे उत्क्षेप्स्यामि, तीक्ष्णैर्दंतमुशलैर्भेत्स्यामि, अधो निक्षिप्य पादैर्लोलयिष्यामि।' तत एवमुक्तोऽपि कामदेवो यदा न क्षुभितस्तदा तेन देवेन यथोक्तं तथैव कृतं, तथापि स श्राद्धस्तां महावेदनां सम्यक् सहमानो धर्मध्याने एव तस्थौ। ततः स देवो हस्तिरूपेणापि तं क्षोभयितुमशक्नुवन् शनैः शनैः प्रत्यावृत्त्य पोषधशालाया बहिर्निर्गत्य तद्हस्तिरूपं परित्यज्यैकं महन्नयनं विषरोषपूर्णमंजनपुंजवर्णमतिचंचलजिह्वायुगलं परिस्फुरदुत्कटस्फुटकुटिलजटिलकर्कशस्फटाटोपकरणदक्षं भीमं सर्परूपं विकुर्व्य पोषधशालायामागत्य कामदेवं प्रति प्रोचे–'अरे कामदेव! यदि मद्वचनं न मन्यसे तर्हि अद्यैवाहं सरसरशब्दं तव कायमारुह्य पश्चिमेन भागेन

त्रिकृत्वो ग्रीवां वेष्टयिष्यामि, तीक्ष्णाभिर्विषव्याप्ताभिर्दंष्ट्राभिस्तवोरःस्थलं भेत्स्यामि।' तत इत्थमुक्तोऽपि स यदा न चलितस्तदातिक्रुद्धेन तेन देवेन तथैवोपसर्गः कृतः, परं स कामदेवस्तदानीमप्यक्षुभितः सन् तां तीव्रवेदनां सम्यग् धैर्येण सहते स, श्रीजिनधर्मं च क्षणमपि चित्तान्न दूरीचकार। ततः स देवः सर्परूपेणापि तं जिनप्रवचनाच्चालयितुमशक्नुवन् श्रमात् शनैः शनैः प्रत्यपसृत्य पोषधशालाया बहिर्निष्क्रम्य तत्सर्परूपं विहाय एकं महादिव्यं सौम्याकारं दीप्तिमद्देवरूपं विकुर्व्य पोषधशालामनुप्रविश्याकाशे स्थितः सन् कामदेवं प्रत्येवमवादीत्–'अहो कामदेव! त्वं धन्योऽसि कृतपुण्योऽसि, त्वया श्रीजिनधर्मप्रतिपत्त्या निजं जन्म सफलीकृतं। अद्य किल सौधर्मेंद्रः स्वसभायां तवातीव वर्णनं कृतवान्, देवदानवैरप्यक्षोभ्यस्त्वमुक्तवान्, तदाहमिंद्रवचनमश्रद्दधानः सद्य इहागतः, परं त्वत्परीक्षां कुर्वता मया यादृशींद्रेणोक्ता तादृश्येव तव शक्तिर्दृष्टा, अथाहं भवंतं क्षमयामि, मत्कृतापराधं भवानपि क्षमतां, अतः परमेतदकार्यं न करिष्ये।' इत्युक्त्वा स देवः कामदेवस्य चरणौ नत्वा बद्धांजलिः सन् पुनः पुनः स्वापराधं क्षमयित्वा स्वस्थानं जगाम। ततः स कामदेवो निरुपसर्गमिति कृत्वा कायोत्सर्गं पारयति स्म। तस्मिन्नवसरे श्रीवीरस्वामी तत्र समवसृतः, तद्वार्त्तां श्रुत्वा स चिंतयामास–'अहं श्रीवीरस्वामिनं वंदित्वा पश्चात्पोषधं चेत्पारयामि तदा वरं।' इति विचिंत्य बहुजनपरिवृतः स्वामिसमीपं गत्वा वंदित्वोचितस्थाने उपविष्टस्तदा स्वामिना स्वयमेव कामदेवमामंत्र्य रात्रिसमुत्पन्नं सर्वमप्युपसर्गादिव्यतिकरं कथयित्वा प्रोक्तं–'भोः कामदेव! अयमर्थः सत्यः ? ।' तेनोक्तं–'स्वामिन्नित्थमेव।' ततः स्वामी बहून्निर्ग्रंथान् बह्वीर्निर्ग्रंथीश्चामंत्र्यैवमवादीत्–'भो आर्याः! एते गृहस्थाः श्रमणोपासका गृहमध्ये वसंतो यद्येवं दिव्यमानुषाद्युपसर्गान् सम्यक् सहंते, ततो भवद्भिस्तु द्वादशांगीमधीया-

नैर्विशेषत एतान् सोढुं समर्थैर्भाव्यं । ' तदा सर्वेऽपि निर्ग्रंथा निर्ग्रंथ्यश्च स्वाम्युक्तं वचनं विनयेन तथेति प्रतिशृण्वंति स्म । ततः स कामदेवो हृष्टः सन् स्वामिनं वंदित्वा स्वस्थानमायातः, तदनंतरमानंदवत्क्रमेण एकादशोपासकप्रतिमाः सम्यग्विधिनाराध्य विंशतिं वर्षाणि श्रावकपर्यायं प्रपाल्य मासिक्या संलेखनया कालं कृत्वा सौधर्मे कल्पेऽरुणाभविमाने देवत्वेनोत्पन्नो महाविदेहे च सेत्स्यति । इति कामदेववृत्तांतः ॥ २ ॥

अथ चुलनीपितुर्वृत्तांतो यथा–वाराणस्यां नगर्यां चुलनीपिता नाम गाथापतिर्वसति स्म । तस्य सामा भार्या । तथा चतुर्विंशतिकोटिसौवर्णिकानि द्रव्यं । तत्र चाष्टाष्टकोटिप्रमितं द्रव्यं प्रागुक्तरीत्या तस्यापि निधानादिभयुक्तमासीत् । तथा प्रत्येकं दशदशसहस्रगोनिष्पन्नानि अष्ट गोकुलान्यभवन् । ततस्तेनाप्यानंदादिवद्वीरस्वामिपार्श्वे द्वादश व्रतानि गृहीत्वावसरे ज्येष्ठं पुत्रं कुटुंबे स्थापयित्वा स्वयं पोषधशालायां पोषधं कृत्वावस्थितं । तत्र चार्धरात्रसमये एको देवः प्रादुर्भूय करे खड्गं गृहीत्वा तं प्रत्येवमुवाच–' अरे चुलनीपितस्त्वमेतं धर्मं त्यज, नो चेत्तव ज्येष्ठादिपुत्राननेन खड्गेन हनिष्यामि । ' एवमुक्तोऽपि स यदा न क्षुभितस्तदातिक्रुद्धः स देवः क्रमेण ज्येष्ठं मध्यमं कनिष्ठं च तत्पुत्रं तत्र समानीय तस्याग्रतो हत्वा तप्तकटाहे प्रक्षिप्य तेषां मांसेन रुधिरेण च तस्य श्राद्धस्य शरीरं सिंचति स्म । तथापि स न क्षुभितस्तदा स देवश्चतुर्थवारं तं श्राद्धं प्रति एवमवादीत्–' हंहो चुलनीपितस्त्वं यदि मदुक्तं न मन्यसे तर्हि अद्याहं तव मातरं भद्रासार्थवाहीमिहानीय तवाग्रतो हत्वा तप्तकटाहे प्रक्षिप्य तस्या मांसेन शोणितेन च त्वच्छरीरसेचनं करिष्यामि, येन त्वं दुःखार्त्तः सन् अकाले एव मृत्युं प्राप्स्यसि । ' एवमेकवारोक्त्या तमक्षुभितं मत्वा द्वितीयतृतीयवारं पुनरेवमवादीत् । तदा तस्य श्राद्धस्य मनसीत्थं विचारः

संमुत्पन्नः–' अहोऽयं कोऽपि पुरुषोऽनार्योऽनार्यबुद्धिरनाचरणीयानि पापकर्माणि आचरति, यतोऽनेन मम त्रयोऽपि पुत्रास्ता-दृशकदर्थनया हताः, सांप्रतं पुनर्मम मातरमपि तथैव हंतुमिच्छति, अथाहमेनं पुरुषं चेत्सद्यो गृह्णामि तद्वरमिति ' विचार्य स शीघ्रमुत्थाय तद्ग्रहणार्थं यावत्करौ प्रसारयति स्म तावत्स देव आकाशे उत्पतितस्तस्य च करयोर्मध्ये स्तंभ आगतस्तत-स्तेन श्राद्धेन महता शब्देन कोलाहलः कृतः, तदा भद्रा सार्थवाही तं पुत्रशब्दं निशम्य चुलनीपितुः पार्श्वे आगत्य कोलाह-लकारणं पप्रच्छ । ततस्तेनापि स्वयमनुभूतः सर्वोऽपि वृत्तांतो मात्रे निवेदितः, तदा मात्रा भणितं–' पुत्र ! न कोऽपि पुरुषः, न केनापि तव पुत्रा हताः, एष कोऽपि पुरुषस्तवोपसर्गं करोति स्म । त्वं चेदानीं भग्नव्रतो भग्नपोषधो जातोऽसि, तस्मात्वं पुत्र ! एतत्स्थानस्यालोचनादिकं गृहाण । ' ततः स चुलनीपिता श्रावको मातुर्वाचं तथेति प्रतिपद्य तत्स्थानस्यालोचनादिकं जग्राह । तदनंतरं चानंदवत्क्रमेणैकादश प्रतिमा आराध्य प्रांते समाधिना कालं कृत्वा अरुणाभविमाने देवत्वेनोत्पन्नो महा-विदेहे च सेत्स्यति । इति चुलनीपितुर्वृत्तांतः ॥ ३ ॥

अथ सुरादेववृत्तांतो यथा–वाराणस्यां नगर्यां सुरादेवो नाम गाथापतिर्वसति स्म । तस्य धन्या नाम भार्या । तथा कामदेववद् द्रव्यसंपद् गोकुलानि चाभवन्, अग्रे व्रतोपसर्गादिस्वरूपं तु सर्वमपि तृतीयश्रावकवद् ज्ञेयं । नवरं पुत्रत्रयहननो-पसर्गकरणानंतरं सुरादेवमक्षुभितं विज्ञाय देवेनोक्तं–' यदि त्वमेतं धर्मं न त्यक्ष्यसि तर्ह्यधुनैवाहं तव शरीरे षोडशमहारोग-प्रक्षेपं कृत्वा अकाले एव त्वां प्राणवियुक्तं करिष्यामीत्यादि । ' तथा कोलाहलकरणानंतरं भद्रास्थानेऽत्र धन्या भार्या बोध्या। शेषं तथैव यावत्सौधर्मकल्पेऽरुणकांतविमाने देवत्वेनोत्पन्नो विदेहे च सेत्स्यति । इति सुरादेववृत्तांतः ॥ ४ ॥

अथ चुल्लशतकवृत्तांतो यथा–आलंभिकायां नगर्यां चुल्लशतको नाम गाथापतिर्वसति स्म। तस्य बहुला नाम भार्या। तथा कामदेववद् द्रव्यसंपद् गोकुलानि चाभवन्। अग्रे व्रतादिस्वरूपं तु अत्रापि सर्वं तृतीयश्राद्धवदवसेयं। नवरं तं चुल्लशतकं पुत्राणां कदर्थनयाऽक्षुभितं ज्ञात्वा देवेनोक्तं–'यदि त्वमेतं धर्मं न त्यक्ष्यसि तर्हि अधुनैवाहं तवाष्टादशकोटिसौवर्णिकानि स्वगृहान्निष्कास्यास्यां नगर्यां त्रिकचतुष्कादिमार्गेषु समंताद्विकीर्णयिष्यामि, येन त्वमार्त्तरौद्रध्यानोपगतोऽकाले एव मृत्युं प्राप्स्यसीत्यादि।' तथात्र कोलाहलकरणानंतरं बहुला भार्या आगता, शेषं तथैव, यावत्सौधर्मे कल्पेऽरुणशिष्टविमाने देवत्वेनोत्पन्नो महाविदेहे च सेत्स्यति। इति चुल्लशतकवृत्तांतः ॥ ५ ॥

अथ कुंडकोलिकवृत्तांतो यथा–कांपिल्यपुरे नगरे कुंडकोलिको नाम गाथापतिर्वसति स्म। तस्य पुष्यमित्रा नाम भार्या। द्रव्यादिकं तु कामदेववदेवासीत्, व्रतग्रहणवक्तव्यतापि तथैव। अथ स कुंडकोलिक एकदा मध्यरात्रिसमये स्वकीयाशोकवाटिकायां पृथ्वीशिलापट्टके आगत्य स्वस्य नामांकितमुद्रिकामुत्तरीयवस्त्रं च तत्र संस्थाप्य धर्मध्यानं कुर्वन् तस्थौ। तदा तत्रैको देवः प्रादुर्भूय ते मुद्रिकावस्त्रे ततो गृहीत्वाकाशे स्थितस्तं श्राद्धमेवमवादीत्–'अहो कुंडकोलिक! गोशालस्य मंखलिपुत्रस्य धर्मप्रज्ञप्तिः सुंदरा, यत्रोद्यमादिकं किमपि नास्ति, जीवानां पुरुषकारसद्भावेऽपि पुरुषार्थसिद्ध्यनुपलंभात्, अत एव नियताः सर्वभावाः। तथा श्रीवीरभगवतो धर्मप्रज्ञप्तिरशोभना, यत्रोद्यमादिकमस्ति।' ततः स कुंडकोलिकस्तं देवमेवमुवाच–'भो देव! यद्येवं तर्हि भवतैषा दिव्या देवर्द्धिरुद्यमादिभिः प्राप्ता किं वाऽनुद्यमादिभिः?।' तदा स देवोऽवादीत्–'मयैषा देवर्द्धिरनुद्यमादिभिः प्राप्ता।' ततः कुंडकोलिकेनोक्तं–'यद्यनुद्यमादिभिर्भवतैषा प्राप्ता तर्हि येषां

जीवानां नास्त्युद्यमादिकं ते सर्वेऽपि कथं देवत्वं न प्राप्ताः ? अथ यदि त्वयैषा उद्यमादिभिः प्राप्ता तर्हि गोशालस्य धर्मप्रज्ञप्तिः सुंदरेत्यादि यत्त्वयोक्तं प्राक् तन्मिथ्या ।' ततः स देवस्तेनैवमुक्तः सन् शंकितस्तं प्रति प्रत्युत्तरं दातुमशक्नुवन् ते मुद्रिकावस्त्रे पृथ्वीशिलापट्टकोपरि प्रतिष्ठाप्य स्वस्थानमगात् । तस्मिन्नवसरे श्रीवीरस्वामी तत्र समवसृतः, तदा कुंडकोलिकोऽपि प्रातःकाले स्वामिसमीपं गतः । अग्रे सर्वोऽपि वृत्तांतः कामदेववद् ज्ञेयो, नवरमत्रार्थहेतुप्रश्नादिभिरन्यतीर्थिकस्य निरुत्तरीकरणात्स्वामिना तत्प्रशंसा कृता । ततः स कुंडकोलिकश्चतुर्दशवर्षानंतरं तथैव ज्येष्ठपुत्रं कुटुंबे स्थापयित्वा स्वयं पोषधशालायां स्थितः सन् एकादश प्रतिमा आराध्य तथैव सौधर्मे कल्पेऽरुणध्वजविमाने देवो जातो महाविदेहे च सेत्स्यति । इति कुंडकोलिकवृत्तांतः ॥ ६ ॥

अथ सप्तमश्राद्धवृत्तांतो यथा–पोलासपुरे नगरे सद्दालपुत्रनामा गोशालोपासकः कुंभकारो वसति स्म । तस्याग्निमित्रा नाम भार्या । तथा त्रिकोटिसौवर्णिकानि द्रव्यं, तत्रैकैका कोटिर्निधानादिप्रयुक्तासीत्, तथा दशसहस्रगोनिष्पन्नमेकं गोकुलमभवत् । पुनस्तस्य पंच शतानि कुंभकारापणा आसन् । एकदा स सद्दालपुत्रो मध्यरात्रसमयेऽशोकवाटिकायामागत्य गोशालकोक्तं धर्मं ध्यायन् तस्थौ । तदा तत्रैको देवः प्रादुर्भूय तं प्रत्येवमुवाच–'भो ! देवानुप्रिय ! प्रातरत्र महामाहनः समुत्पन्नज्ञानदर्शनधरस्त्रिकालज्ञोऽर्हन् समेष्यति, तस्य त्वया वंदननमस्कारादिप्रतिपत्तिः कर्त्तव्या ।' एवं द्वित्रिवारमुक्त्वा स देवः स्वस्थानं ययौ । तदा सद्दालपुत्रस्तद्देववचनं श्रुत्वा चिंतयामास–'एवंविधगुणसंपन्नस्तु मम धर्माचार्यो गोशालोऽस्ति, स निश्चितं प्रातरत्र समेष्यति, तदाहं तद्वंदनादि करिष्यामीति ।' अथ प्रभाते श्रीवीरस्वामी तत्र समवसृतस्तदा स सद्दालपुत्रः

श्रीवीरस्वाम्यागमनं श्रुत्वा बहुजनपरिवृतस्तत्र गत्वा विधिना स्वामिनं वंदित्वोचितस्थाने उपविष्टः। स्वामिनापि देशनां दत्त्वा सद्दालपुत्रमामंत्र्य रात्रिसंभवं सर्वमपि वृत्तांतं निगद्य पृष्टं–'भोः सद्दालपुत्र ! सत्योऽयमर्थः ?।' तेनोक्तं–'स्वामिन्निरथमेव।' पुनः स्वामिनोक्तं–'भोः सद्दालपुत्र ! तेन देवेन गोशालमाश्रित्य नैवमुक्तमिति।' ततस्तेन चिंतितं–'प्रागुक्तगुणसंपन्न एष श्रीमहावीरस्वामी वर्त्तते, तस्मादहमेनं प्रभुं वंदित्वा पीठफलकादिभिश्चेन्निमंत्रयामि तदा वर'मिति विचिंत्य तेन स्वामिनं प्रति वंदनादिपूर्वकं प्रोक्तं–'भगवन्नगराद्बहिर्मम पंच शतानि कुंभकारापणाः संति, तेषु यूयं पीठफलकशय्यासंस्तारकादिकं गृहीत्वा विचरत।' ततः स्वामिना तस्याजीविकोपासकस्य तद्वचः श्रुत्वा तत्र यथायोग्यं प्रासुकपीठफलकादिकं गृहीत्वावस्थितं। तदैकस्मिन् दिने स सद्दालपुत्रः शालामध्याद्भांडानि बहिर्नीत्वातपे ददानः स्वामिना पृष्टः–'भोः सद्दालपुत्र ! एतानि भांडानि कथं जायंते ?।' ततस्तेन मृत्तिकात आरभ्य सर्वमपि भांडनिष्पत्तिस्वरूपं स्वाम्यग्रे प्रोक्तं। तदा स्वामिना भणितं–'एतानि किमुद्यमादिभिः क्रियंते उताहोऽनुद्यमादिभिः ?।' तेनोक्तं–'स्वामिन् ! अनुद्यमादिभिः क्रियंते, यतो नास्त्युद्यमादिकं, अत एव च नियताः सर्वभावा इति।' तदा स्वामिनोक्तं–'यदि कोऽपि पुमान् तवैतानि भांडानि अपहरेद्वा विनाशयेद्वा, त्वद्भार्यया सह भोगान् भुंजानो विहरेद्वा तर्हि तस्य पुरुषस्य त्वं किं दंडं दद्याः ?।' तेनोक्तं–'स्वामिन् ! अहं तस्य हननादिकं कुर्यां।' तत एवं सद्दालपुत्रं स्ववचनेन पुरुषाकाराभ्युपगमं कारयित्वा स्वामिनोचे–'यः खलु नैवं कुर्यात्तस्य त्वं हननादिकं न करोषि। यदि उद्यमादिकं नास्ति नियताः सर्वभावाः, अथ चापराधिनः पुरुषस्य त्वं हननादिकं करोषि, ततश्च यत्त्वयोक्तमुद्यमादिकं नास्तीत्यादि तन्मिथ्या।' अथैवं स्वामिनोक्ते सति स सद्दाल-

पुत्रः प्रतिबुद्धः सन् सद्यः स्वामिनं वंदित्वा स्वामिनः समीपे सर्वमपि धर्मं श्रुत्वा हृष्टः सन् आनंद इव द्वादश व्रतानि जग्राह। नवरं द्रव्यादिसंख्या प्राग्दर्शिता सैव बोध्या। ततः स निजगृहमागत्य स्वभार्यां प्रत्यपि तद्वृत्तांतं निवेद्य तथैव व्रतानि ग्राहयामास। तद्दिनादारभ्य च स शुद्धश्रावको बभूव। अथैकदा गोशालकस्तां वार्तां श्रुत्वा तं सद्दालपुत्रं जिनधर्माच्चालयितुं स्वधर्मे चालयितुमाजीविकसंघपरिवृतस्तन्नगरे आजीविकसभायामागत्य स्वभांडादिकं निक्षिप्य कियद्भिराजीविकैः सह सद्दालपुत्रसमीपमागतः। तदा स श्राद्धस्तमागच्छंतं दृष्ट्वा आदरसत्कारादिकमकुर्वाणस्तूष्णीकस्तस्थौ। ततः स गोशालकस्तेनानाद्रियमाणः सन् पीठफलकाद्यर्थं तस्याग्रे श्रीवीरस्वामिनो गुणोत्कीर्त्तनं करोति स–' भो देवानुप्रिय! इह महामाहना महागोपा महासार्थवाहा महाधर्मकथका महानिर्यामकाः समागता आसन्?।' सद्दालपुत्रेणोक्तं–' भो देवानुप्रिय! एतादृशाः के?।' गोशालेनोक्तं–' श्रीमंतः श्रमणा भगवंतो महावीरस्वामिनः।' पुनः श्राद्धेनोक्तं–' ते कथमेतादृशोपमाधारकाः?।' तदा गोशालेनोचे–' भोः सद्दालपुत्र! श्रीमहावीरस्वामिनोऽनंतज्ञानादिधारकत्वेन चतुःषष्टिसुरेंद्रैः पूजितत्वान्महामाहना उच्यंते। तथा भवाटव्यां त्रासं प्राप्नुवतो बहून् जीवान् धर्ममयेन दंडेन सम्यक् रक्षंतो निर्वाणमहावाटकं च प्रापयंतः संतो महागोपा उच्यंते। तथा संसाराटव्यामुन्मार्गपतितानां जीवानां मुक्तिपत्तनप्रापकत्वान्महासार्थवाहा उच्यंते। तथा सन्मार्गाद्भ्रष्टानां जीवानां बहुभिरर्थहेतुप्रभृतिभिः सन्मार्गमानीय संसारतो निस्तारकत्वान्महाधर्मकथका उच्यंते। तथा संसारसमुद्रे निमज्जतां जंतूनां धर्ममय्या नावा निर्वाणतीराभिमुखीकरणान्महानिर्यामका उच्यंते इति। ततः स सद्दालपुत्रो गोशालं प्रत्युवाच–' भो देवानुप्रिय! ईदृग् निपुण ईदृग्नयवादी ईदृग्विज्ञानवान् भवान् मम धर्मा-

चार्येण वीरस्वामिना सह विवादं कर्त्तुं समर्थो भवति ?।' तेनोक्तं-'न भवामि।' श्राद्धेनोक्तं-'तत्कथं ?।' तेनोचे-'श्रीवीरस्वामी मां प्रति अर्थहेतुप्रश्नव्याकरणैर्यत्र यत्र गृह्णाति तत्र तत्र निरुत्तरीकरोति, तेन कारणेनाहमसमर्थस्तैः सह विवादं कर्त्तुमिति।' ततः स श्रावकस्तं प्रत्येवमुवाच-'भो देवानुप्रिय! यतस्त्वं मम धर्माचार्यस्येत्थं सद्भूतभावगुणोत्कीर्त्तनं करोपि तदर्थमहं तुभ्यं पीठफलकादिभिरुपनिमंत्रयामि, न तु धर्म इति विचिंत्य। तस्माद्गच्छ त्वं मम कुंभकारापणेषु यथेच्छं पीठादिकं गृहीत्वा विचर।' ततः स गोशालस्तद्वचनात्तत्र पीठादिकं गृहीत्वावस्थितः। परं यदा सद्दालपुत्रं केनापि प्रकारेण जिनप्रवचनाच्चालयितुं न शक्नोति स तदा स्वयमेव खिन्नः सन् पोलासपुरात्प्रतिनिष्क्रम्यान्यत्र जगाम। ततः स सद्दालपुत्रः सम्यग् धर्मं पालयन् चतुर्दशवर्षातिक्रमे आनंदादिवत् पोषधशालायां तस्थौ। तत्र चुलनीपितुरिव तस्याप्युपसर्गा जाताः, नवरं चतुर्थवारमग्निमित्राभार्यायाः हननमाश्रित्य देवेन वचनान्युक्तानि, ततस्तेन ग्रहीतुमारब्धे देवे चोत्पतिते कोलाहलकरणानंतरं अग्निमित्रा भार्याऽऽगता, शेषं तथैव। प्रांतेऽरुणाद्भुते विमाने उत्पन्नो महाविदेहे च सेत्स्यति। इति सद्दालपुत्रसंबंधः ॥ ७ ॥

अथाष्टमसंबंधो यथा-राजगृहनगर्यां महाशतकनामा गाथापतिर्वसति स। तस्य स्वनिश्रया चतुर्विंशतिकोटिसौवर्णिकानि द्रव्यमासीत्। तत्राष्टाष्टहिरण्यकोटयः प्राग्वन्निधानादिषु प्रयुक्ता आसन्। तथा पूर्वोक्तप्रमाणान्येवाष्ट गोकुलान्यभवन्। पुनस्तस्य रेवतीप्रमुखाः त्रयोदश भार्या बभूवुः। तत्र रेवत्याः पुनः स्वपितृगृहसंबंधीनि अष्टकोटिसौवर्णिकानि अष्ट गोकुलानि चाभूवन्। शेषद्वादशस्त्रीणां च पितृगृहसंबंधि एकैका हिरण्यकोटिरेकैकं च गोकुलमभवत्। अथैकदा तेनापि श्रीवीर-

स्वामिपार्श्वे आनंदवद् द्वादश व्रतानि गृहीतानि । नवरं स्वनिश्रया चतुर्विंशतिकोटिसौवर्णिकानि अष्ट गोकुलानि च रक्षितानि । तथा रेवत्यादित्रयोदशभार्याभिर्विनाऽपरस्त्रीभिः सह मैथुनविधिः परित्यक्तः । ततः स महाशतकः सुखेन श्राद्धधर्मं पालयन् विचरति स्म । अथैकदा तस्या रेवत्या मनसि अयं विकल्पः समुत्पन्नः 'अहमेतासां द्वादशपत्नीनां व्याघातेन भर्त्रा सह न सम्यग्भोगान् भोक्तुं शक्नोमि, तस्मादेता द्वादशापि सपत्नीः केनापि प्रयोगेण चेन्मारयामि, तर्हि भर्त्रा सहैकाकिनी एव सर्वदा भोगान् भुनज्मि, तथैतासां द्रव्यादेरप्यहं स्वामिनी भवामी'ति । ततस्तया पापिन्याऽन्यदा केनचिच्छलेन तासां मध्यात् षट् सपत्न्यः शस्त्रप्रयोगेण हताः, षट् पुनर्विषप्रयोगेण हताः, तासां द्रव्यादेश्च स्वयं स्वामिनी बभूव । ततो निर्विघ्नतया भर्त्रा सह भोगान् भुंजाना सा रेवती मांसलोलुपा सती प्रत्यहं विविधानि मांसानि मदिरां चास्वादयंती तस्थौ । अथैकदा नगरेऽमारीघोषणा प्रवर्तितासीत्, तदा सा रेवती स्वपितृगृहमनुष्यान् समाहूय प्रोवाच–'भो देवानुप्रियाः ! यूयं मदीयगोकुलेभ्यः प्रत्यहं द्वौ द्वौ गोवत्सौ हत्वात्रानयत ।' ततस्तैरपि तद्वचसा तथैव कृतं । तदा सा रेवती तन्मांसं भक्षयंती सुरां च पिबंती विचरति स्म । ततः स महाशतकश्रावकश्चतुर्दशवर्षातिक्रमे तथैव पुत्रं कुटुंबे स्थापयित्वा पोषधशालायां धर्मध्यानं कुर्वन् अवस्थितः । तदा सा रेवती मत्ता विकीर्णकेशा उत्तरीयवस्त्रं मस्तकादुत्तारयंती च सती पोषधशालायामागत्य भर्तारं प्रति मोहोन्मादजनकानि शृंगारवाक्यानि हावभावांश्चोपदर्शयंती एवमुवाच–'हंहो महाशतकश्रावक ! धर्मस्वर्गमोक्षादिवांछक ! किं ते धर्मादिभिर्भविष्यति ? येन त्वं मया सार्धं भोगान् भुंजानो न विचरसि ।' एवं तयोक्तोऽपि स श्रावकस्तस्या वचनं सर्वथाऽनाद्रियमाणस्तूष्णीकः सन् धर्मध्यानोपगतस्तस्थौ । तदा सा रेवती द्वित्रिवारं पुनरेवमुक्त-

वत्यपि तेनानाद्रियमाणा स्वस्थानं गता। ततः स श्रावकः क्रमेणैकादश प्रतिमा आराध्य बहुभिस्तपोभिः संशोषितशरीरः सन् आनंदवन्नाड्यस्थिमात्रदेहो जातः। अथैकदा तस्य शुभाध्यवसायैरवधिज्ञानं समुत्पन्नं, तेन स पूर्वस्यां दक्षिणस्यां पश्चिमायां च दिशि लवणसमुद्रे एकैकसहस्रयोजनमितं क्षेत्रं जानाति स्म पश्यति स्म च। शेषासु च दिक्षु यथानंदवदसावपि ददर्श। तत एकदा सा रेवती महाशतकं प्रति पुनः प्राग्वदुपसर्गं चकार। तदा स गाथापतिः क्रुद्धः सन् अवधिज्ञानं प्रयुज्य तां प्रत्येवमुवाच–'अरे रेवति! अप्रार्थ्यप्रार्थिके! त्वं सप्तदिनमध्येऽलसकव्याधिना पराभूता सती असमाधिना कालं कृत्वा प्रथमनरके लोलुच्चुयनाम्नि नरकावासे चतुरशीतिसहस्रवर्षस्थित्या नारकत्वेनोत्पत्स्यसे।' ततः सा रेवती तद्वचनं श्रुत्वा भीता सत्येवं चिंतयति स्म–'अद्य ममोपरि रुष्टो महाशतकः, अथ कयापि कदर्थनया मां मारयिष्यति।' एवं विचिन्त्य शनैः शनैस्ततः सा प्रत्यपसृत्य स्वगृहमागत्य दुःखिता सती स्थिता। ततः सा रेवती सप्तदिनमध्ये तथैव मृत्वा लोलुच्चुयाख्ये नरकावासे उत्पन्ना। तस्मिन्नवसरे श्रीवीरस्वामी तत्र समवसृतः, पर्षद् देशनां श्रुत्वा स्वस्थानं गता। तदा स्वामिना गौतममामंत्र्य महाशतकस्य क्रोधोत्पत्त्यादिस्वरूपं तस्मै निवेद्यैवं प्रोक्तं–'भो गौतम! पोषधशालायां चरमसंलेखनया दुर्बलीकृतशरीरस्य भक्तपानादिप्रत्याख्यायकस्य श्रावकस्य परं प्रति सत्यमप्यप्रीतिकरं वचनं वक्तुं न घटते, तस्मात्त्वं तत्र गत्वा महाशतकं प्रत्येवं ब्रूहि–'भो महाशतक! यत्त्वं रेवतीं प्रति सत्यान्यप्यनिष्टानि वचांसि उक्तवान् तदेतत्स्थानमालोच्य, यथायथायोग्यं प्रायश्चित्तं प्रतिपद्यस्वेति।' ततो भगवान् गौतमः प्रभुवचनं विनयेनांगीकृत्य राजगृहनगर्यां महाशतकगृहे जगाम। तत्र च स श्राद्धो गौतमस्वामिनमागच्छंतं दृष्ट्वा हृष्टः वंदते स्म। ततो गौतमेन सर्वमपि भगवदुक्त-

वचनकदंबकं भगवन्नामग्राहं तदग्रे निवेदितं, तदा महाशतकेन गौतमवाक्यं तथेति प्रतिपद्य तस्य स्थानस्यालोचनादि गृहीतं । ततो गौतमस्तत्समीपान्निष्क्रम्य स्वामिसमीपं ययौ । ततो महाशतकश्रावकः सम्यक् श्राद्धधर्मं प्रपाल्य तथैव प्रांतेऽरुणावतंसके विमाने देवत्वेनोत्पन्नो महाविदेहे सेत्स्यति । इति महाशतकसंबंधः ॥ ८ ॥

अथ नवमश्राद्धसंबंधो यथा–श्रावस्त्यां नगर्यां नंदिनीपिता नाम गाथापतिर्वसति स । तस्याश्विनी नाम भार्या, द्रव्यं गोकुलानि चानंदवदासीत् । द्वादश व्रतान्यपि तथैव । चतुर्दशवर्षातिक्रमे च सोऽपि तथैव ज्येष्ठपुत्रं कुटुंबे स्थापयित्वा पोषधशालायामागत्य विविधधर्मकृत्यैः स्वात्मानं भावयित्वा एकादश प्रतिमा आराध्य प्रांतेऽरुणगवे विमाने उत्पन्नो महाविदेहे सेत्स्यति । इति नवमश्राद्धसंबंधः ॥ ९ ॥

अथ दशमश्राद्धसंबंधो यथा–श्रावस्त्यां नगर्यां तेतलीपिता नाम गाथापतिर्वसति स । तस्य फाल्गुनी नाम भार्या । तथा ऋद्धिविस्तारस्तु प्राग्वत्, व्रतान्यपि तथैव । ततः सोऽपि ज्येष्ठपुत्राज्ञया पोषधशालायामेकादश प्रतिमा आराध्य प्रांते तथैव सौधर्मे कल्पेऽरुणकीलविमाने चतुःपल्योपमस्थित्या देवत्वेनोत्पन्नो महाविदेहे च सेत्स्यति । इति दशमश्राद्धसंबंधः ॥ १० ॥

एतेषां हि दशानामपि श्रावकाणां पंचदशे वत्सरे वर्त्तमाने गृहव्यापारत्यागाध्यवसायो जातस्तथा सर्वेषां विंशति वर्षाणि श्रावकपर्यायो बभूव, तथा सर्वेऽपि सौधर्मे कल्पे तुल्यायुष्कतयोत्पन्नाः, तथा एतेषु प्रथमषष्ठनवमदशमश्राद्धानामुपसर्गा न बभूवुः, शेषाणां तु षण्णामपि उपसर्गा जाताः, नवरं आद्यस्य गौतमेन सह प्रश्नोत्तरं समजनि, षष्ठस्य पुनर्देवेन

सह धर्मचर्चा बभूव। इति समुदितव्रतद्वादशकोपरि उपासकदशांगानुसारेण लेशतो दशश्राद्धदृष्टांता दर्शिताः। एतान्निशम्यान्यैरपि सम्यग्दृष्टिभिरित्थं द्वादशव्रतपालने तत्परैर्भाव्यं॥

अथ प्रसंगादेकादशोपासकप्रतिमास्वरूपं दर्श्यते—

दंसणवयसामाइय, पोसहपडिमा अबंभसच्चित्ते।
आरंभपेसउद्दिट्ठ, वज्जए समणभूए य॥ ७४॥

व्याख्या—दर्शनं सम्यक्त्वं १, व्रतानि अणुव्रतादीनि २, सामायिक ३ पोषधौ ४ प्रसिद्धौ, प्रतिमा च कायोत्सर्गः ५, एतेषु पंचसु विधानरूपेण प्रतिमा अभिग्रहविशेषरूपा ज्ञेयाः। अब्रह्म ६ सचित्त ७ योस्तु त्यागरूपेणेति। तथा आरंभः स्वयं पापकर्मकरणं ८, प्रेषश्च प्रेषणं परेषां पापकर्मसु व्यापारणं ९, उद्दिष्टं च तमेव श्रावकमुद्दिश्य सचेतनं सदचेतनीकृतं पक्वं वा आहारादि, एतेषां त्रयाणां वर्जकोऽष्टम्यादिप्रतिमाधारकः १०, तथा श्रमणभूतः साधुतुल्य एकादशप्रतिमाधारकः ११। इति गाथार्थः॥

भावार्थस्त्वयं—मासमेकं यावत् शंकादिदोषराजाभियोगाद्याकारषट्कवर्जितत्वेन केवलं शुद्धसम्यक्त्वं दधतः प्रथमा प्रतिमा १। द्वौ मासौ यावदतीचाररहितानि निरपवादानि व्रतानि सम्यक्त्वं च सम्यग् दधतो द्वितीया प्रतिमा २। त्रीन्मासान् यावत् सम्यक्त्वव्रतोपेतस्य प्रतिदिनमुभयसंध्यं सामायिकं कुर्वतस्तृतीया प्रतिमा ३। एवमग्रेऽपि पूर्वपूर्वप्रतिमानुष्ठानमुत्तरोत्तरप्रतिमासु

द्रष्टव्यं, यस्तु विशेषः स उच्यते–चतुरो मासान् यावत् प्रतिमासं षट्पर्वसु चतुर्थी पोषधं कुर्वतश्चतुर्थी ४ । पंच मासान् यावत् स्नानं वर्जयतो, दिवसे प्रकाशदेशे भोजनं कुर्वतो, रात्रौ च सर्वथा भोजनं त्यजतः, परिधानकच्छामबध्नतो, दिवसे ब्रह्मचारिणो, रात्रौ तु अपर्वतिथिषु स्त्रीणां तद्भोगानां वा प्रमाणं विदधतः, पर्वतिथिषु च रात्रौ चतुःपथादौ कायोत्सर्गं कुर्वतः श्राद्धस्य पंचमी प्रतिमा भवति । इह रात्रिभोजनवर्जनादेतत्सूचितं–श्रावकेण किल केशवादिवत् कदापि रात्रिभोजनं न करणीयमेव, परं यः कोऽपि श्रावकस्तन्नियमं कर्तुं न शक्नोति तेनापि पंचमप्रतिमात आरभ्यावश्यं रात्रिभोजनत्यागो विधेय इति । केशववृत्तांतस्तु वक्ष्यते ५ । तथा षण्मासान् यावत् दिवा रात्रौ च सर्वथा ब्रह्मचर्यं दधतः षष्ठी प्रतिमा ६ । सप्त मासान् यावत् अचित्तमशनादि भुंजानस्य सप्तमी ७ । अष्टौ मासान् यावत् स्वयमारंभं त्यजतोऽष्टमी ८ । नवमासान् यावत् परेणाप्यारंभमकारयतो नवमी ९ । दश मासान् यावत् क्षुरमुंडस्य मस्तके शिखां धारयतो वा उद्दिष्टाहारं त्यजतो दशमी १० । एकादश मासान् यावत् क्षुरमुंडस्य लोचेन वा लुप्तकेशस्य गृहीतरजोहरणपात्रादिसाधूपकरणस्य साधुवदेषणीयमशनादि गृह्णतः, अद्यापि स्वजनेषु अव्यवच्छिन्नस्नेहस्य, गोचरकाले च 'प्रतिमां प्रतिपन्नाय श्रावकाय भिक्षां दत्तेति' वदत एकादशी प्रतिमा ११ । इदं चोत्कृष्टतः कालमानमुक्तं, जघन्यतः पुनरेकादशापि प्रतिमाः प्रत्येकमंतर्मुहूर्तादिमाना एव । तच्च मरणे वा प्रव्रजितत्वे वा संभवति नान्यथेति । इहाग्रेतन्यः सप्त प्रतिमाः क्वापि प्रकारांतरेणाप्युक्ताः संति, तद्विचारस्तु प्रवचनसारोद्धारादेवावगंतव्यः । अत्र प्रोक्तसूचितकेशववृत्तांतस्त्वयं—

कुंडिनपुरे नगरे यशोधनो नाम मिथ्यात्वमोहितमतिर्वणिग्वसति स्म । तस्य रंभानामभार्यायाः कुक्षिसंभवौ हंसकेशव-

नामानौ द्वौ पुत्रावभूतां । तौ चैकदा यौवनावस्थायां क्रीडार्थं वनं गतौ, तत्र च धर्मघोषनामानं मुनिं दृष्ट्वा संप्राप्तविवेकौ तौ द्वावपि गुरुं नत्वाग्रे उपविष्टौ । गुरुणा च धर्मोपदेशो दत्तस्तत्र रात्रिभोजनस्यैहिकाः पारत्रिकाश्च बहवो दोषा दर्शिताः । तथाहि–'रजन्यां क्रीडार्थं स्वेच्छया भूतले भ्रमंतो रजनीचरदेवा रात्रिभोजनं कुर्वतां जनानां सद्यश्छलनं कुर्वंति, तथा भोज्यान्नादौ कीटिकाश्चेत्समायांति तर्हि भक्षकस्य बुद्धिनाशः स्यात्, मक्षिका चेत्समायाति तदा वमनं जायते, यूका त्वागता सती जलोदरं कुर्यात्, कौलिकश्च कुष्ठरोगमुत्पादयति, वालस्तु गले विलग्नः सन् स्वरभंगं करोति, कंटकः काष्ठखंडश्च गलव्यथां वितनोति पुनर्व्यंजनादिमध्ये वृश्चिकश्चेत्समायाति, तथोपरिष्टात्सर्पस्य गरलं चेत्पतति तर्हि मरणांतकष्टमुत्पद्यते । तथा भाजनधावनादिषु बहूनां लघुजीवानां हिंसा जायते इत्यादय ऐहिका दोषाः, पारत्रिकास्तु नरकनिपाताद्या बहवो दोषाः संति । अतो बहुदोषदुष्टं रात्रिभोजनं मत्वा संसारभीरुभिस्तत्परित्यागे उद्यमो विधेय इति।' एवं गुरुवचःश्रवणात्संप्राप्तबोधौ तौ द्वावपि भ्रातरौ गुरुं साक्षीकृत्य प्रमोदाद्रात्रिभोजनत्यागं चक्रतुः । ततो गुरुं नत्वा स्वगृहमागत्य मध्याह्ने भोजनं कृत्वा तावापणादिषु वाणिज्यादिकार्यं विधाय घटिकाद्वयमिते दिवसेऽवशेषे सति पुनर्गृहमागत्य मातुः समीपं वैकालिकमयाचतां, तदा मात्रा भणितं–'हे वत्सौ ! सांप्रतं भोज्यं किमपि नास्ति, रात्रौ तद्भविष्यति, अतो घटिकाचतुष्टयं यावत्प्रतीक्षेतां ।' एतन्मातृवचः श्रुत्वा तावूचतुः–'हे मातर्भवदुक्तं तत्सत्यं, परमावाभ्यां तु रात्रिभोजनस्य त्यागः कृतोऽस्ति, अतोऽधुनैव किमपि भोज्यं देहि ।' तदा गर्भगृहस्थितेन यशोधनेनेदं तयोर्वचनं श्रुत्वा सक्रोधं चिंतितं–'केनापि धूर्तेनैतौ मत्सुतौ निश्चितं विप्रतारितौ दृश्येते अन्यथा कुलक्रमायातं रात्रिभोजनं कथं त्यजेतां ? ततोऽहमेतौ द्वित्रैर्दिनैर्बुभुक्षार्तौ कृत्वा रात्रि-

भोजनत्यागकदाग्रहं यदि त्याजयामि तदा वरमिति' विचिंत्य स तदैव स्थालग्रहणार्थं गर्भगृहमागतां रंभां प्रति प्रच्छन्नमुक्तवान्–'त्वया मदाज्ञां विना सुताभ्यां भोजनं न देयमिति।' ततो भर्तुराज्ञावशात् रंभा पश्चादागत्य तौ प्रत्येवमवदत्–'भोः पुत्रौ ! सांप्रतं पक्वान्नादिवस्तु न विद्यतेऽतो रात्रौ पित्रा सहैव युवाभ्यां भोजनं कार्यं, यतः कुलीनाः पुत्रास्त एव ये किल पितृमार्गानुगामिनः स्युरिति।' तदा तौ ईषद् हसित्वा प्रोचतुः–'हे मातः ! सुपुत्रैः पितुः सन्मार्गः सेव्यते, परं कूपे पततः पितुः किमनुगमनं क्रियते ?।' इति पुत्रवचः श्रुत्वा तयोक्तं–'यद्भवद्भ्यां रोचते तत्कुरुतं, परं सांप्रतं युवयोर्भोजनं न मिलिष्यतीति।' ततस्तौ मौनं कृत्वा बहिर्जग्मतुः। तदा स श्रेष्ठी मिथ्यादृष्टित्वात् तत्पुत्रवचसातिक्रुद्धः सन् रंभां प्रत्यरयर्थमित्थमुवाच–'त्वया रजन्यामेवाभ्यां भोजनं देयं, परं दिवसे तु सर्वथा न देयमिति।' ततो रात्रौ गृहमागतौ तौ जनन्याऽभ्यर्थितावपि धैर्यवत्तया तदानीं भोजनं न चक्रतुः। द्वितीयदिवसे तु तेन महाशठेन श्रेष्ठिना तौ सरलचित्तौ पुत्रौ तादृशे महति क्रयविक्रयव्यापारे नियुक्तौ, यं कुर्वतोस्तयोः सर्वोऽपि दिवसः पूर्णो जातः, परं स व्यापारो न निष्ठां प्राप्तः, ततो द्वितीयेऽप्यह्नि निशि गृहमागतौ तावभुक्त्वैव शयनं चक्रतुः। इत्थं पित्रा व्यापारं कार्यमाणौ तौ भोजनं विनैव पंचरात्रीर्नीतवंतौ। षष्ठे दिवसे च निशारंभसमये तौ गृहमानीय कुटिलमतियशोधनः श्लक्ष्णं वच उवाच–'हे वत्सौ ! यत्कार्यं मम सौख्यदं स्यात्तदेव भवतोरिष्टमिति प्रतीतिं मनसि दधानोऽहं यत्किंचिद्ब्रवीमि तत्क्रियतां। भवतोर्निशाभोजनत्यागस्तु मया निश्चितं न ज्ञातोऽन्यथैतादृशे क्लेशकारिणि कार्ये कथं भवन्नियोजनं कुर्यां ? इयंति दिनानि यावद्भवद्भ्यां भोजनेऽकृते सति भवज्जनन्यापि न भुक्तं, तेनास्या अद्य षष्ठोपवासभवनात् इयं षाण्मासिकी युवयोर्भगिनी स्तन्यमलभमानाऽतिम्लानगात्रा

जातास्ति। अथास्या बालाया गात्रे म्लानिं वीक्ष्य कारणं पृच्छतो मम भवद्भोजनपूर्वं सर्वं वृत्तांतं भवज्जननी जगाद। तस्मात् हे कृपालू! अस्यां बालायामनुकंपां विचार्य युवाभ्यां भुज्यतां, यथा युवयोर्मातापि संप्रति भुंक्ते। किं च निशायाः प्रथमं प्रहरार्द्धं पंडितैः प्रदोष उच्यते, पश्चिमं प्रहरार्द्धं तु प्रत्यूषमिति निगद्यते, अत एव रात्रित्रियामेति लोके प्रसिद्धास्ति। तदपेक्षया चेदानीं निशामुखे यद्भोजनं तन्निशाभोजनं न भवेत्।' तदेत्थं पितुर्वाण्या भिन्नः क्षुधा च विह्वलीकृतो हंसः केशवसन्मुखं दृष्टवान्। तदा केशवो ज्येष्ठभ्रातरं कातरीभूतं विभाव्य स्वयं निश्चलचित्तः सन् जनकं प्रति जगाद-'हे तात! यत्कार्यं तव सुखं करोति तदहं करोमि, परं यन्मे पातकं तत्किं ते सुखाय भवति? तथा यज्जनन्यादिवात्सल्यं तद्धर्मकर्मणः शल्यमस्ति, यतः सर्वोऽपि लोकः स्वकर्मफलं भुनक्ति, अतः कः कस्यार्थेऽघं कुर्व्यात्? तथा यत्त्रियामास्वरूपमुक्तं तदपि कथनमात्रमस्ति, तत्त्वतस्तु दिवसस्य मुखे अंते च यो मुहूर्त्तः सोऽपि रात्रिसमीपवर्त्तित्वाद्रात्रितुल्य एव, अतस्तत्रापि सुधीभिर्न भोक्तव्यं, सांप्रतं तु निशैवास्ति, तस्मात् हे तात! एतत्कार्यमाश्रित्य भवताहं वारंवारं न वाच्यः।' तदैवं तद्वचो निशम्य यशोधनः कुपितः सन् केशवं प्रति प्रोचे-'अरे दुर्विनीत! यदि मद्वचनं लंघसे तर्हि मम दृष्टिपथाद्दूरीभव।' ततो महार्थैर्यवान् स केशवस्तत्पितुर्वचः श्रुत्वा द्रव्यादिममतां त्यजन् सद्यो गृहान्निःससार। तदा तमनुगच्छंतं हंसं प्रति यशोधनो बलात्कारेण धृत्वा बहुभिर्वचनैः प्रलोभ्य भोजनार्थं निवेशितवान्। अथ स केशवस्ततो निःसृत्य देशांतरं व्रजन् मार्गे बहूनगरग्रामारामादिप्रदेशान् लंघयन् सप्तमेऽप्यह्नि निराहार एव सन् क्वाप्यटव्यामटन् अर्धनिशासमये बहुभिर्यात्रागतजनैर्युक्तं किंचिद्यक्षायतनं ददर्श। तत्र सज्जीकृतभोजनास्तत्रागतजनास्तमागच्छंतं दृष्ट्वा हर्षिताः संत इत्थं प्रोचुः-'हे

पांथ ! अत्र एहि एहि, भोज्यं गृहाण, अस्मभ्यं पुण्यं देहि, वयं हि आरब्धपारणाः संतोऽतिथिं गवेषयामः ।' तदा केशवस्तानूचे-'भो लोका ! इदं कीदृग्व्रतं ? यस्य रात्रौ पारणं जायते ।' ते प्रोचुः-'भोः पांथ ! अयं महाप्रभावो माणवाख्यो यक्षोऽस्ति, अद्यास्य यात्रादिनं विद्यते, अतोऽत्रागतैर्लोकैर्दिवसे उपवासं कृत्वाऽर्धनिशायां कमप्यतिथिमादराद्भोजयित्वा पश्चात्पारणं विधेयं, येन तेषां महापुण्यप्राप्तिः स्यात्, तस्मात्त्वमद्यास्माकमतिथिर्भव ।' केशवोऽवदत्-'रात्रौ विधीयमानत्वान्महापापकारणेऽस्मिन् पारणेऽहं न भुंजे । किं च यत्रैवं निशि भोजनं क्रियते सोऽयमुपवास एव नोच्यते, यतो धर्मशास्त्रेषु प्रहराष्टकं यावद्भोजनत्यागे उपवासः कीर्तितोऽस्ति । ये च धर्मशास्त्रविरुद्धं तपः कुर्वंति ते दुर्बुद्धयो दुर्गतिं यांति ।' तदा तेऽवदन्-'अस्य देवस्य व्रतेऽयमेव विधिरस्ति, अतोऽत्र शास्त्रोक्तिमनुसृत्य युक्तायुक्तविचारणा न कर्त्तव्या । अस्माकं पुनरतिथिं गवेषयतां बह्वी रात्रिर्जाता, तस्मात्त्वं विचारं विमुच्य सद्योऽस्मिन् पारणेऽग्रेसरो भव ।' इत्युक्त्वा ते सर्वेऽप्युत्थाय तस्य पादतलेऽलगन्, तथापि केशवस्तद्वचनं नामंस्त । तदा सद्यो यक्षशरीरादेको भीमाकारः पुमान्निःसृत्य हस्ते मुद्गरमुत्पाट्य विकरालनेत्रः सन् तीक्ष्णरूक्षवाण्यैनमुवाच-'अरे दुष्टात्मन् ! त्वं मम धर्मं दूषयसि, पुनर्मद्भक्तानवगणयसि, अधुना शीघ्रं भुंक्ष्व, नो चेत्तव मस्तकं शतखंडं करोमि ।' तदा केशवो हसन्नाह-'भो यक्ष ! मां किं क्षोभयसि ? भवांतरोपार्जितप्रधानधर्मभाग्योदयान्मम मनागपि मरणभयं नास्ति ।' ततो यक्षः स्वान् किंकरानुवाच-'भो एतद्धर्मगुरुर्धृत्वाऽत्रानीयास्याग्रे हंतव्यो, येनास्मै इत्थं धर्मोपदेशो दत्तोऽस्ति ।' तदा कशापाशधरैस्तस्य किंकरैराचघोषं कुर्वाणो धर्मघोषमुनिः सद्यः समानीय यक्षाग्रे मुक्तो, यक्षेणोक्तं-'भोः ! स्वशिष्यमिदानीं भोजय, अन्यथा त्वां हन्मि ।' तदा स मुनिः केशवं

प्रति जगौ-'भो भद्र! देवगुर्वर्थकृतेऽकृत्यमपि कर्त्तव्यमतस्त्वं भोजनं कुरु, एतैर्हन्यमानं त्वद्गुरुं मां रक्ष।' एतद्वचः श्रुत्वा केशवोऽचिंतयत्-'यो महाधैर्यादिगुणसंपन्नः सन् स्वप्नेऽपि अयथार्थं न वक्ति स मद्गुरुर्मृत्युभियाऽन्योपदेशतः कथं पापकृत्येऽनुमतिं दद्यात्? तस्मान्निश्चितमयं मद्गुरुर्नास्ति, किं त्वस्य यक्षस्य कापीयं माया विद्यते।' इति विचिन्त्य स मौनं कृत्वा स्थितस्तदा यक्षो मुनौ मुद्गरमुत्पाट्य केशवं प्रति जगाद-'भो! भुंक्ष्व, नो चेत्त्वद्गुरुं हन्मि।' केशवोऽपि निःशंकं प्राह-'अरे मायिन्! अयं मद्गुरुर्नास्ति, यतस्तादृक्चारित्रपात्रं मद्गुरुस्त्वादृशां मंदशक्तीनां वध्यः कदापि न भवति।' तदा 'स एवाहं त्वद्गुरुरस्मि मां रक्ष रक्षे'त्यारटन् स मुनिर्यक्षेण मुद्गरप्रहारतो हतः सन् भूमौ पपात। ततः स यक्षः केशवस्याग्रे आगत्य मुद्गरं भ्रामयन्नुवाच-'यदि त्वं सांप्रतं भुंक्षे तर्हि अहं भवत्स्वद्गुरुं जीवयामि, तुभ्यं च प्राज्यराज्यर्द्धिं प्रयच्छामि, अन्यथानेन मुद्गरेण त्वामपि यमगृहातिथिं कुर्वे' इति। तदा केशवो हसन् जगाद-'भो यक्ष! नैवायं मद्गुरुरस्ति, अतो नाहमेतद्वचसा स्वनियमभंगं कुर्वे। किं च यदि त्वं मृतान् जीवयसि तर्हि त्वयामीषां स्वभक्तानां पूर्वजाः कथं न जीविताः? तथा राज्यदानसामर्थ्यं बिभ्रता त्वयामी भक्तजनाः कथं न राज्यभृतः कृताः? पुनस्त्वं मम वारंवारं मृत्युभयं किं दर्शयसि? यतः सति आयुर्बले न कोऽपि मां मारयितुं समर्थोऽस्ति।' ततः स यक्ष एवं तद्वाणीं निशम्य हृष्टः सन् केशवं प्रति समालिंग्येत्थं जगाद-'अहो मित्र! धियां पात्र!, न स्यादेष गुरुस्तव। मृता मया न जीव्यंते, नैव राज्यं च दीयते ॥ १ ॥' अथ यक्षेणैवमुक्ते सति प्राग्मुनिरूपेण भूमौ निपतितो यक्षकिंकरः सहासं तत उत्थाय मुनिरूपं च परित्यज्याकाशं ययौ। ततोऽनया विचित्रमायया विस्मयमापन्नं केशवं प्रति यक्ष उवाच-'भो मित्र! त्वं गमोपवासैः खिन्नो-

ऽसि, पुनर्बहुतराध्वविहारतः क्लिन्नोऽसि, अतो रात्राविह विश्रामं गृहीत्वा प्रातःकाले एभिः सह पारणं कुरु।' इत्युक्त्वा स तस्मै स्वशक्तिनिर्मितां शय्यामदर्शयत्। तदा तत्र शय्यायां सुप्तः सन् केशवोऽपि यक्षाज्ञया यात्रागतजनैः संवाहितचरणः सन् सद्यो निद्रामवाप। ततो घटिकाचतुष्टयानंतरं स यक्षो निद्राभिव्याप्तलोचनं केशवं प्रति जगाद-'भो मित्र! रात्रिर्गता प्रभातो जातोऽस्ति, अथ निद्रा निवार्यतां।' तदा केशवो निद्रां विहाय लोकं दिनोज्ज्वलं वीक्ष्य आकाशं च सूर्यमंडितं विलोक्य चिंतयति स्म-'अहं निशायाः पश्चिमप्रहरे सुप्तोऽपि सन् ब्राह्मे एव मुहूर्ते सर्वदा स्वयमेव जागर्मि, अद्य त्वर्द्धनिशासमये प्रहरार्द्धमात्रेऽपि दिवसे स्वयं न जागृतस्तत्र किं कारणं? तथाद्य दिवसेऽपि मे चक्षुषी निद्राव्याप्ते कथं वर्त्तेते? पुनर्मे श्वासमारुतोऽद्य सुरभिः कथं नास्ति?' तत इत्थं चिंतयंतं केशवं प्रति यक्षः प्रोचे-'हे सत्पुरुष! धृष्टतां मुंच, शीघ्रं प्रातःकृत्यानि कृत्वा पारणं कुरु।' तदा स जगाद-'हे यक्ष! तव दक्षतयाहं न वंच्यो, यतोऽद्यापि निशैवास्ति अयं दिवसप्रकाशस्तु त्वन्मायासमुद्भव एव।' अथेत्थं जल्पतः केशवस्य मस्तके आकाशात्पुष्पवृष्टिः पपात, तथा जयजयशब्दः प्रादुर्बभूव। तदा केशवः स्वसुखाग्रे एकं कंचिद्दीप्तिव्याप्तं देवं ददर्श, परं यक्षं यक्षगृहं यक्षार्चकजनांश्च न दृष्टवान्। ततः स देवस्तं प्रोचे-'हे महाधैर्यवान्! हे पुण्यवतां शिरोरत्न! भवादृशामुत्पत्त्यैवेयं पृथ्वी रत्नगर्भा निगद्यते। अद्य किलेंद्रेण स्वसभायां रात्रिभोजनत्यागे तवातीव धैर्यं वर्णितं, तदसहमानोऽहं वह्निनामा देवस्त्वां परीक्षितुमिहागमं, परं नियमे दृढचित्तस्य तव रोममात्रमपि चालयितुं नाहं समर्थोऽभूवं। अथाहं क्षमयामि त्वयापि मदपराधः क्षंतव्यः। किं च देवदर्शनं निष्फलं न भवति, अतस्त्वं मत्सकाशात्किंचिद्याचस्व। यद्वा भवादृशां सत्पुरुषाणां क्व याञ्चा? परं मया

स्वभक्तिर्दर्शनीया, अतस्तुभ्यं वरद्वयं ददे, अद्यप्रभृति यः कोऽपि रोगी पुमान् त्वदंगलग्नजलेन स्वशरीरं सेक्ष्यति स सद्यो नीरुग् भविष्यति १। तथा त्वं कदाचिदातुरः सन् यत्किंचिच्चिंतयिष्यसि तत्कार्यं शीघ्रं भविष्यति २।' इत्युक्त्वा साकेतपुरस्य पार्श्वे केशवं मुक्त्वा स देवोऽदृश्यो बभूव। केशवोऽप्यात्मानं कस्यचिन्नगरस्य पार्श्वस्थं ददर्श। ततः सूर्योदयेऽसौ प्रातःक्रियां कृत्वा तन्नगरं द्रष्टुं व्रजन् मार्गे आराममध्यस्थं नृपादिलोकेभ्यो धर्मोपदेशं ददानं कंचिदाचार्यं दृष्ट्वा तं महामंगलं मन्वानः सद्यस्तत्र गत्वा गुरुं नत्वाग्रे उपविष्टः, ततो देशनांते तन्नगरस्वामिना धनंजयभूपेन प्रणामपूर्वकं गुरुर्विज्ञप्तः— 'हे स्वामिन्! अहं जरसा व्याप्तोऽस्मि, अतो यदि व्रतं गृह्णामि तद्वरं, परं स्वयमपुत्रः सन् राज्यं कुत्र न्यस्यामि? इति चिंतां कुर्वन् रात्रौ सुप्तोऽभूवं, तदा निशांते केनचिद्दिव्येन पुंसा मम स्वप्ने एवमुक्तं यः प्रातःकाले देशांतरादेत्य तव गुरोः पुरस्तिष्ठति तस्मिन् सत्पुरुषे स्वराज्यं विन्यस्य त्वया निजमनोरथः पूरणीय इति, ततोऽहं सद्यो गतनिद्रः सन् प्रातःकृत्यानि कृत्वेहागतोऽस्मि, दृष्टश्च मयायं सत्पुरुषः।' तदा गुरुणा ज्ञानबलेन केशवस्य सर्वोऽपि रात्रिभोजनत्यागवृत्तांतो नृपाग्रे गदितः, ततो राज्ञा पृष्टं–'स्वामिन्मम स्वप्ने केन देवेनायं ज्ञापितः?।' गुरुणोक्तं–'अस्य परीक्षाकारिणा वह्निनाम्ना देवेनेति।' ततो राजा गुरुं नत्वा केशवेन सह पुरं प्रविश्य स्वराज्ये केशवमारोपित्य स्वयं गुरुपार्श्वे व्रतं जग्राह। तदा केशवस्तत्र प्रत्यहं चैत्यपूजां कुर्वन् दुःस्थितादिभ्यो दानं प्रयच्छन् स्वप्रतापेन सीमालभूपालाक्रमणं कुर्वन् न्यायमार्गमनुसरन् सुखेन प्रजां पालयति स्म।

एकदा स गवाक्षस्थः पितुर्दर्शनेच्छां कृतवान्। तावता च मार्गे श्रांतं भूमौ यांतं स्वपितरं ददर्श। तदा केशवस्तमुप-

लक्ष्य सद्यः सौधादुत्तीर्य बहुजनैरनुगतः सन् तत्र गत्वा पितुः पादयोरपतत्–'हे पितस्तादृक्समृद्धिमान् भवान् अधुना रंकोपमः कथमिति' पृष्टवांश्च। तदा यशोधनः पुत्रस्य राज्यप्राप्त्यानंदितोऽपि सन् दुःखाश्रूणि मुंचन् गृहवार्त्तां जगाद–'हे पुत्र ! त्वयि गते सति मया हंसो भोक्तुं निवेपितस्तदा सोऽकस्मात्संजातभ्रमिः सन् अर्द्धभोजनं मुक्त्वा भूमौ पपात, ततः किमेतदिति चिंतयंस्त्या तन्मात्रा दूराद्दीपमानीय यावद् दृष्टिः प्रसारिता तावद्भोज्यान्ने गरलं दृष्टं, तदुपरिप्रदेशे च तुलापट्टे लग्नः सर्पो दृष्टः, तदा साक्षाचादृशं रात्रिभोजनफलं दृष्ट्वा त्वां धर्मज्ञं मन्यमानेन सर्वेणापि कुटुंबेन महाक्रंदश्चक्रे। ततस्तच्छ्रवणाच्च बहवो लोका मिलितास्तेष्वेको विषवैद्योऽपि समागतः, तदा तं प्रति सर्वकुटुंबेन पृष्टं–'किमयं विषप्रयोगः साध्योऽसाध्यो वा ?' तेनोक्तं–'शास्त्रे तिथिवारनक्षत्राद्याश्रित्य सर्पदष्टस्य साध्यासाध्यविचारः प्रोक्तोऽस्ति। तथाहि–तिथयः पंचमी षष्ठ्य–ष्टमी नवमिका तथा। चतुर्दश्यप्यमावास्या–ऽहिना दष्टस्य मृत्युदा ॥ १ ॥ शेषास्तु नैवमित्यर्थः। दष्टस्य मृतये वारा, भानुभौमशनैश्चराः। प्रातःसंध्यास्तसंध्या च, संक्रांतिसमयस्तथा ॥ २ ॥ भरणी कृत्तिकाश्लेषा, विशाखा मूलमश्विनी। रोहिण्याद्रा मघा पूर्वा–त्रयं दष्टस्य मृत्यवे ॥ ३ ॥ चारि सवंतश्चत्वारो, दंशा यदि सशोणिताः। वीक्ष्यंते यस्य दष्टस्य, स प्रयाति भवांतरं ॥ ४ ॥ रक्तवान् दंश एको वा, छिद्री काकपदाकृतिः। शुष्कः श्यामस्त्रिरेखो वा, दष्टे स्पष्टयति व्ययं ॥ ५ ॥ सावर्त्तः सर्वतः शोफ–वृत्तः संकुचिताननः। दंशः शंसति दष्टस्य, विनष्टमिह जीवितं ॥ ६ ॥ केशांते मस्तके भाले, भ्रूमध्ये नयने श्रुतौ। नासाग्र ओष्ठे चिबुके, कंठे स्कंधे हृदि स्तने ॥ ७ ॥ कक्षायां नाभिपद्मे च, लिंगे संधौ गुदे तथा। पाणिपादतले दष्टः, स्पृष्टोऽसौ यमजिह्वया ॥ ८ ॥ इति।

स्वभक्तिर्दर्शनीया, अतस्तुभ्यं वरद्वयं ददे, अद्यप्रभृति यः कोऽपि रोगी पुमान् त्वदंगलग्नजलेन स्वशरीरं सेक्ष्यति स सद्यो नीरुग् भविष्यति १। तथा त्वं कदाचिदातुरः सन् यत्किंचिचिंतयिष्यसि तत्कार्यं शीघ्रं भविष्यति २।' इत्युक्त्वा साकेतपुरस्य पार्श्वे केशवं मुक्त्वा स देवोऽदृश्यो बभूव। केशवोऽप्यात्मानं कस्यचिन्नगरस्य पार्श्वस्थं ददर्श। ततः सूर्योदयेऽसौ प्रातःक्रियां कृत्वा तन्नगरं द्रष्टुं व्रजन् मार्गे आराममध्यस्थं नृपादिलोकेभ्यो धर्मोपदेशं ददानं कंचिदाचार्यं दृष्ट्वा तं महामंगलं मन्वानः सद्यस्तत्र गत्वा गुरुं नत्वाग्रे उपविष्टः, ततो देशनांते तन्नगरस्वामिना धनंजयभूपेन प्रणामपूर्वकं गुरुर्विज्ञप्तः–'हे स्वामिन्! अहं जरसा व्याप्तोऽस्मि, अतो यदि व्रतं गृह्णामि तद्वरं, परं स्वयमपुत्रः सन् राज्यं कुत्र न्यस्यामि? इति चिंतां कुर्वन् रात्रौ सुप्तोऽभूवं, तदा निशांते केनचिद्दिव्येन पुंसा मम स्वप्ने एवमुक्तं यः प्रातःकाले देशांतरादेत्य तव गुरोः पुरस्तिष्ठति तस्मिन् सत्पुरुषे स्वराज्यं विन्यस्य त्वया निजमनोरथः पूरणीय इति, ततोऽहं सद्यो गतनिद्रः सन् प्रातःकृत्यानि कृत्वेहागतोऽस्मि, दृष्टश्च मयायं सत्पुरुषः।' तदा गुरुणा ज्ञानबलेन केशवस्य सर्वोऽपि रात्रिभोजनत्यागवृत्तांतो नृपाग्रे गदितः, ततो राज्ञा पृष्टं–'स्वामिन्मम स्वप्ने केन देवेनायं ज्ञापितः?।' गुरुणोक्तं–'अस्य परीक्षाकारिणा वह्निनाम्ना देवेनेति।' ततो राजा गुरुं नत्वा केशवेन सह पुरं प्रविश्य स्वराज्ये केशवमभिषिच्य स्वयं गुरुपार्श्वे व्रतं जग्राह। तदा केशवस्तत्र प्रत्यहं चैत्यपूजां कुर्वन् दुःस्थितादिभ्यो दानं प्रयच्छन् स्वप्रतापेन सीमालभूपालाक्रमणं कुर्वन् न्यायमार्गमनुसरन् सुखेन प्रजां पालयति स्म।

एकदा स गवाक्षस्थः पितुर्दर्शनेच्छां कृतवान्। तावता च मार्गे श्रांतं भूमौ यांतं स्वपितरं ददर्श। तदा केशवस्तमुप-

लक्ष्य मद्यः सौधादुत्तीर्य बहुजनैरनुगतः सन् तत्र गत्वा पितुः पादयोरपतत्–'हे पितस्तादृक्समृद्धिमान् भवान् अधुना रंकोपमः कथमिति ' पृष्टवांश्च । तदा यशोधनः पुत्रस्य राज्यप्राप्त्यानंदितोऽपि सन् दुःखाश्रूणि मुंचन् गृहवार्त्तां जगाद्– 'हे पुत्र ! त्वयि गते सति मया हंसो भोक्तुं निवेपितस्तदा सोऽकस्मात्संजातभ्रमिः सन् अर्द्धभोजनं मुक्त्वा भूमौ पपात, ततः किमेतदिति चिंतयंत्या तन्मात्रा दूराद्दीपमानीय यावद् दृष्टिः प्रसारिता तावद्भोज्यान्ने गरलं दृष्टं, तदुपरिप्रदेशे च तुलापट्टे लग्नः सर्पो दृष्टः, तदा साक्षाद्दृष्टं रात्रिभोजनफलं दृष्ट्वा त्वां धर्मज्ञं मन्यमानेन सर्वेणापि कुटुंबेन महाक्रंदश्चक्रे । ततस्तच्छ्रवणाच्च बहवो लोका मिलितास्तेष्वेको विषवैद्योऽपि समागतः, तदा तं प्रति सर्वकुटुंबेन पृष्टं–' किमयं विषप्रयोगः साध्योऽसाध्यो वा ?' तेनोक्तं–' शास्त्रे तिथिवारनक्षत्राद्याश्रित्य सर्पदष्टस्य साध्यासाध्यविचारः प्रोक्तोऽस्ति। तथाहि–तिथयः पंचमी षष्ठ–ष्टमी नवमिका तथा । चतुर्दश्यप्यमावास्या–ऽहिना दष्टस्य मृत्युदा ॥ १ ॥ शेषास्तु नैवमित्यर्थः । दष्टस्य मृतये वारा, भानुभौमशनैश्चराः । प्रातःसंध्यास्तसंध्या च, संक्रांतिसमयस्तथा ॥ २ ॥ भरणी कृत्तिकाश्लेषा, विशाखा मूलमश्विनी । रोहिण्यार्द्रा मघा पूर्वा–त्रयं दष्टस्य मृत्यवे ॥ ३ ॥ वारि स्रवंतश्चत्वारो, दंशा यदि सशोणिताः । वीक्ष्यंते यस्य दष्टस्य, स प्रयाति भवांतरं ॥ ४ ॥ रक्तवान् दंश एको वा, छिद्री काकपदाकृतिः । शुष्कः श्यामस्त्रिरेखो वा, दष्टे स्पष्टयति व्ययं ॥ ५ ॥ सावर्तः सर्वतः शोफ–वृत्तः संकुचिताननः । दंशः शंसति दष्टस्य, विनष्टमिह जीवितं ॥ ६ ॥ केशांते मस्तके भाले, भ्रूमध्ये नयने श्रुतौ । नासाग्र ओष्ठे चिबुके, कंठे स्कंधे हृदि स्तने ॥ ७ ॥ कक्षायां नाभिपद्मे च, लिंगे संधौ गुदे तथा । पाणिपादतले दष्टः, स्पृष्टोऽसौ यमजिह्वया ॥ ८ ॥ इति ।

परमयं तु सर्पेण दष्टो नास्ति, किं त्वस्योदरे तद्गरलप्रवेशो जातोऽस्ति, अतः किमत्र साध्यासाध्यविचारणया ?।" ततो मया पुनः पृष्टं–'केनाप्युपायेनायं जीवति।' तदा स मातृकाह्वानं कृत्वा जगाद्–'भवतामत्रोपायकरणक्लेशेनालं, यतोऽस्य सर्पस्य विषव्याप्त्यासौ बालः शटत्त्रुटद्दलत्कायः सन् एकं मासमेव जीविष्यतीति।' ततोऽहं तद्वचसा निराशः सन् लोकान् विसृज्य त्वद्भ्रातरं शय्यायां शाययित्वा तत्स्वरूपं ज्ञातुं पंच दिनानि यावद् गृहे स्थितः, परं तदा रोमरोमपतच्छिद्रं तं मृतमिव मत्वा त्वां द्रष्टुं गृहान्निर्गत्य बहुमार्गमतिक्रम्य पुण्ययोगादद्येहागतस्त्वां च दृष्टवान्। हंसस्य तु विषभक्षणादिनादद्य पूर्णो मासो जातोऽस्ति, अतः सोऽधुना मृतोऽस्ति यद्वा मरिष्यति।' एतत् पितृवचः श्रुत्वा केशवोऽतीव दुःखितः सन् एवं दध्यौ–'इतो मत्पुरात्तत्पुरं योजनानां शतं भवेत्, अतो जीवद्बांधवस्य मुखं द्रष्टुमद्यैव तत्र कथं यामि ?।' अथ यावदेवं ध्यायति तावत्स केशव आत्मानं पित्रादिपरिच्छदेन च सहितं हंसस्य पार्श्ववर्त्तिनं ददर्श। तत्र च कुथितशरीरस्यातिदुर्गंधप्रादुर्भावात्सर्वैः परिजनैर्मुक्तं रोदनोच्छूननेत्रया एकया जनन्या च युक्तं नरकार्त्तिभिरिव पीडितमासन्नमृत्युं भूमौ निक्षिप्तं स्वभ्रातरं दृष्ट्वा तद्व्यथाव्याधितोऽपि सन् कथं मे सद्योऽत्रागमनं जातमिति ध्यायन् स बहिर्देवं दृष्टवान्। तदा देवः प्राह–'भो मित्र ! अहमवधिज्ञानात्तव व्यथां ज्ञात्वा स्वस्य वरं सत्यं कर्तुं शीघ्रमागत्य त्वन्मनोरथमपूरयमिति।' एवमुक्त्वा स देवोऽदृश्यो बभूव। ततो हृष्टेन केशवेन स्वकरस्पृष्टवारिणा हंसः सिक्तः सन् सद्यो रोगनिर्मुक्तो भूत्वोत्थितः। तदा तं पूर्वस्मादपि रूपान्महारूपवंतं जातं विलोक्य सर्वेऽपि बंधुजना महानंदं प्राप्ताः, तत्स्वरूपदर्शनाच्चातिविस्मिताः संतः केशवस्यातीव गुणप्रशंसां चक्रुः, पुनस्तदैवं केशवस्य महाप्रभावं विज्ञाय बहुभिर्लोकैः स्वरोगविघातार्थं तत्पादोदकं सेव्यते स्म। तथा

प्रत्यक्षं धर्मप्रभावं विलोक्य स्वजनपरिजनादिभिर्बहुभिर्भव्यैर्निशाभोजनत्यागादिव्रतानि गृहीतानि । ततः स केशवभूपतिः पश्चात्तत्र गत्वा चिरकालं साकेतपत्तने राज्यं भुक्त्वा बहून् लोकान् धर्ममार्गमानीय स्वयं श्राद्धधर्मं प्रपाल्य प्रांते सद्गतिभाग्बभूव । इति रात्रिभोजनत्यागे केशववृत्तांतः । एवमन्वयव्यतिरेकाभ्याममुं दृष्टांतं निशम्य त्रिविकिभिर्निशाशनपरिहारे उद्यतैर्भाव्यं । इत्युक्तं सप्रसंगं श्राद्धप्रतिमास्वरूपं ॥

अथ श्रावकस्य निवासयोग्यं यत् स्थानं तत्स्वरूपं दर्श्यते—

न चैत्यसाधर्मिकसाधुयोगो, यत्रास्ति तद्ग्रामपुरादिकेषु ।
युतेष्वपि प्राज्यगुणैः परैश्च, कदापि न श्राद्धजना वसंति ॥ ७५ ॥

व्याख्या—परैरन्यैः प्राज्यैर्बहुभिर्गुणैः सौराज्यप्राज्यजलेंधनधनार्जनस्वजनदुर्गादिभिर्युतेष्वपि तेषु ग्रामनगरादिषु श्राद्धजनाः कदापि न वसंति । कुत्रेत्याह—यत्र ग्रामादिषु चैत्यसाधर्मिकसाधूनां योगो नास्ति । तत्र चैत्यं जिनमंदिरं, साधर्मिकाः समानधर्माराधका गृहस्थाः, साधवः शुद्धधर्मोपदेष्टारो गुरवः, एतेषां योगो यत्र भवेत्तत्रैव श्रावका वसंतीत्यर्थः । यदुक्तं—बहुगुणआइण्णे वि हु, नगरे गामे च तत्थ न वसेइ । जत्थ न विज्जइ चेइय, साहम्मी साधुसामग्गी ॥ १ ॥ अथ नगरादौ वसतां श्राद्धानां यत्प्रातिवेश्मिकता त्याज्या तत्स्वरूपं दर्श्यते—

पाखंडिपारदारिक-नटनिर्दयशत्रुधूर्त्तपिशुनानां ।
चौरादीनां च गृहा-भ्यर्णे न वसंति सुश्राद्धाः ॥ ७६ ॥

व्याख्या—नगरादौ वसंतः सुश्रावकाः पाखंडिप्रभृतीनां गृहाभ्यर्णे गृहसमीपे न वसंति-न निवासं कुर्वंति । तत्र पाखंडिनः कुलिंगिनः, पारदारिकाः कुशीलाः, नटा वंशवरत्रादिभिः खेलकाः, निर्दया जीवहिंसाकारकाः व्याधधीवरादयः, शत्रवो वैरिणः, धूर्त्ता वंचकाः, पिशुनाः परच्छिद्रान्वेषिणः, चौराश्चौर्यक्रियया परद्रव्यापहारिणः, आदिशब्दादमर्षणकारुद्यूतकारविदूषकादयो बोध्याः । एषां हि पार्श्वे वसतां श्राद्धानां क्रमेण सम्यक्त्वनाशपरस्त्रीगमनेच्छातत्कलाभिलापक्रूरपरिणामप्राणनाशधनहानिराजदंडाद्यपायकलहवृद्ध्यादयो बहवो दोषाः संभवंतीत्यतस्तद्वर्जनमेव युक्तमिति मंतव्यं । किं च—

मातापित्रोर्भक्तः, कुलशीलसमैश्च विहितवीवाहः ।
दीनातिथिसाधूनां, प्रतिपत्तिकरो यथायोग्यं ॥ ७७ ॥

स्पष्टा, नवरं कुलमुग्रादि, शीलं धर्म आचारस्ताभ्यामुपलक्षणत्वाद् द्रव्यमहत्त्वाभ्यां च समैरात्मतुल्यैः सह विहितवीवाहः, विवाहवैषम्ये हि नित्यमुद्वेगाद्धर्महानिः स्यादिति । तथा—

परिहरति जनविरुद्धं, दीर्घं रोषं च मर्मवचनं च ।
इष्टः शत्रूणामपि, परतप्तिविवर्जको भवति ॥ ७८ ॥

इयमपि स्पष्टार्था । नवरं जनस्य शिष्टलोकस्य विरुद्धं यत्कार्यं तत्परिहरति । तच्चेदं-सव्वस्स चेव निंदा, विसेसओ तह य गुणसमिद्धाणं । उजुधम्माणं हसणं, रीढा जणपूयणिज्जाणं ॥ १ ॥ बहुजणविरुद्धसंगो, देसाइ आयारलंघनं चेव । एमाइयाइं इत्थओ, लोगविरुद्धाइं नेआइं ॥ २ ॥ त्ति ।

तथा श्रावकेण पार्श्वस्थादीनामवसन्नसेवादिदुराचारं दृष्ट्वापि धर्मवैमुख्यं न धार्यं । यदुक्तं-पासत्थाईण फुडं, अहम्मकम्मं निरिक्खए तहवि । सिढिलो होइ न धम्मे, एसो चिय वंचिओत्ति मई ॥ १ ॥ एसो च्चियत्ति-एष एव वराको दैवेन वंचितो य एवंविधमधरीकृतकल्पतरुमाहात्म्यमशेषसुखश्रेणिप्रदानसमर्थमपारसंसारसागरोत्तारणयानपात्रमतिपवित्रं चारित्रमवाप्यैवं प्रवर्त्तते इति मतिर्यस्य स तथा भवेदित्यर्थः, तथा कस्यचित्साधोश्चेत्क्वापि स्खलितं पश्यति तर्हि तत्र निःस्नेहतां न भजेत्, किं त्वेकांते तस्मै मातापितराविव सुशिक्षां दद्यात् । यदुक्तं-साहुस्स कहवि खलिअं, दट्ठूण न होइ तत्थ निन्नेहो । पुण एगंते अम्मा-पिओ व्व से चोअणं देइ ॥ १ ॥ एतेन श्रावकः साधूनां मातापितृप्रायो भवेदिति सूचितं । यत्स्थानांगसूत्रं-चत्तारि समणोवासया पण्णत्ता, तं जहा-अम्मापिउसमाणे १ भाउसमाणे २ मित्तसमाणे ३ सवक्किसमाणे ४ । एतत्स्वरूपज्ञापिकाश्चैता गाथाः-चिंतइ मुणिकज्जाइं, न दिट्ठखलिओवि होइ निन्नेहो । एगंतवच्छलो मुणि-जणस्स जणणीसमो सड्ढो ॥१॥ हिअए ससिणेहो च्चिअ, मुणीण मंदादरो विणयकज्जे । भाउसमो साहूणं, पराभवे होइ सुसहाओ ॥ २ ॥ मित्तसमाणो माणाई, रूसइ अपुच्छिओ कज्जे । मन्नंतो अप्पाणं, मुणीण सयणाओ अब्भहिअं ॥ ३ ॥ थद्धो छिद्दप्पेही, पमायखलिआणि निच्चमुच्चरइ । सड्ढो सवक्किकप्पो, साहुजणं तणसमं गणइ ॥ ४ ॥ इति ।

अथ श्राद्धस्य अहोरात्रकृत्यानि लेशतो दर्श्यंते—

प्रबुध्य दोषाष्टमभागमात्रे, स्मृत्वोज्ज्वलां पंचनमस्कृतिं च ।
अव्यापृतोऽन्यत्र विशुद्धचेता, धर्मार्थिकां जागरिकां स कुर्यात् ॥ ७९ ॥

व्याख्या—दोषाया रात्रेरष्टमे भागमात्रे चतुर्घटिकामाने काले प्रबुध्य निद्रां विहाय शयनादुत्थानसमये एव च उज्ज्वलां पंचनमस्कृतिं पंचपरमेष्ठिनमस्कारं स्मृत्वा स श्रावकोऽन्यत्र कार्यांतरेऽव्यापृतस्तत्क्षणं सुप्तोत्थितत्वाद्यापि गृहव्यापारेऽलग्नः, अत एव विशुद्धचेता अकलुषितचित्तः सन् धर्मजागरिकां कुर्यात् । कथमित्याशंक्य तत्प्रकारो दर्श्यंते—

कोऽहं कामेऽवस्था, किं च कुलं के पुनर्गुणा नियमाः ।
किं न स्पृष्टं क्षेत्रं, श्रुतं न किं धर्मशास्त्रं च ? ॥ ८० ॥

व्याख्या—स हि रात्रौ निद्रामुद्रितचेतनस्तदानीं प्रथमोत्थितत्वाद्यापि अप्राप्तचित्तपाटवः सन् पूर्वमेवं ध्यायति—कोऽहं मनुष्यो देवादिर्वा ? तत्र तावन्मनुष्योऽस्मि, तर्हि का ममावस्था ? बाल्या यौवना वा (यौवना वृद्धा वा) ? तत्र यूनो मम मा भूद्बाल्योचिता चेष्टा, वृद्धस्य वा मा भूत्तारुण्योचितेति । पुनः किं मम कुलं ? श्रावकमत्कं अन्यद्वा, श्रावककुलं चेत्तर्हि के मम गुणाः मूलगुणा उत्तरगुणा वा ? के पुनर्नियमा अभिग्रहविशेषाः ? तथा सति विभवे जिनभवन १ बिंब २ तत्प्रतिष्ठा ३ पुस्तक ४ चतुर्विध-

गृहप्रतिमापूजनं कृत्वा गृहीतपूजोपकरणः सन् महोत्सवेन जिनालये गत्वा मुखकोशं विधाय 'तिन्नि निसीहिये' त्यादिशास्त्रोक्तविधिना जिनपूजनं कुर्यात् । पूजाभेदास्तु प्रथमप्रकाशे ज्ञाताधर्मकथादिसिद्धांतानुसारेण सविस्तरं व्याख्याताः संतीत्यतस्ते तत एवावगंतव्याः, यच्च शुद्धमनोऽङ्गवस्त्र इत्युक्तं तदित्थं-प्रथमं सर्वसावद्याध्यवसायवर्जनं मनःशुद्धिः, ततो निर्जीवायां शुषिरकचवरादिरहितायां च भूमौ अल्पेन वारिणा अल्पेन च करव्यापारेण सर्वांगस्नानमंगशुद्धिः, ततः शुचित्वेनाखंडितवस्त्रधारणं वस्त्रशुद्धिः, न च वाच्यं स्नानेन देहशुद्धिं विनापि देवपूजा युज्यते इति, आशातनाप्रसंगात् । यदि नाम आजन्म निर्मलशरीरधारिणो देवा अपि विशेषशुद्ध्यर्थं स्नात्वैव देवपूजार्थं प्रवर्तेरन्, तर्हि कथं नवैकादशस्रोतःस्रवन्निरंतरदुर्गंधमलैर्मानवैः स्नानं विना सा क्रियते ? अत एव देवपूजाकारिणां सिद्धांते प्रतिपदं 'ण्हाया कयबलिकम्मे' त्यादि विशेषणं गृहीतं । ननु यतनापराणां श्रावकाणां बह्वारंभत्वात्स्नानमनुचितमिति चेन्न, जलधूपपुष्पादीनामप्यारंभहेतुत्वात्तन्निषेधोऽप्यापद्येत, न च तन्निषेधः शिष्टानामिष्टः-छज्जीवकायसंजमो, दव्वत्थ एसो वि सुज्झई कसिणो। तो कसिण संजमविऊ, पुप्फाईयं न इच्छंति ॥ १ ॥ अकसिणपवत्तयाणं, विरयाविरयाण एस खलु जुत्तो । संसारपयणुकरणो, दव्वत्थए कूवदिट्ठंतो ॥ २ ॥

इत्याद्यागमप्रामाण्यादिति पर्याप्तं प्रपंचेन । तदेवं देवपूजां विधाय तदनंतरं विनयेन गुरुवंदनं समाचरेत् । ततोऽसौ यत्करोति तदुच्यते—

शृंगी यथा क्षारजले पयोनिधौ, वसन्नपि स्वादुजलं पिबेत्सदा ।
तथैव जैनामृतवाणीमादरा-द्व्रजेद्गृही संसृतिमध्यगोऽपि सन् ॥ ८२ ॥

व्याख्या—शृंगमस्यास्तीति शृंगी मत्स्यविशेषः, स यथा क्षारजलभृते समुद्रे वसन्नपि तत्रैव गंगादिसरित्प्रवेशस्थानस्थितं मिष्टं जलमुपलक्ष्य सदा तदेव जलं पिबेत्, तथैव गृही श्रावकः संसारक्षारसमुद्रमध्यस्थितोऽपि सन् गुरुसन्निधौ गत्वाऽऽदराज्जिनप्रणीतामृततुल्यवाणीं सर्वदा भजेत् शृणुयादित्यर्थः। ततो बालग्लानादिसाधूनां प्रातराशौषधादिदाने यत्नवान् भवतीत्यनुक्तमपि द्रष्टव्यं। तदनंतरं यद्विधत्ते तद्दर्श्यते—

द्रव्यार्जनं सद्व्यवहारशुद्ध्या, करोति सद्भोजनमादरेण।
पूजादिकृत्यानि विधाय पूर्वं, निजोचितं मुक्तविशेषलौल्यः ॥ ८३ ॥

व्याख्या—स श्रावकस्ततो व्यवहारशुद्ध्या द्रव्योपार्जनं करोति, तदनंतरं च पूर्वमादरेण मध्याह्निकीं देवपूजां कृत्वा तथा मुनिभ्यो दानं दत्वा तथा वृद्धातुरातिथिचतुष्पदादेः स्थितां कृत्वा त्यक्तविशेषलौल्यः सन् निजोचितं सद्भोजनं करोति। एतावता स्वकाभक्ष्यादिलोकविरुद्धं संसक्तानंतकायाद्यागमविरुद्धं मद्यमांसाद्युभयविरुद्धं च भोजनं न कुर्यात्। तथा लौल्यात्स्वकीयमग्निबलमविचार्याधिकमपि न भुंक्ते। तच्चोत्तरकाले वमनविरेचनरोगोत्पत्तिमरणादिबह्वनर्थकारकं स्यादतो मितमेव भुंक्ते इत्यर्थः। ततो धर्मशास्त्रपरमार्थचिंतनेनोचितव्यवसायेन चापराह्णं गमयित्वा अस्तमनादर्वाक् संध्यायां पुनर्जिनपूजां करोति। तथा द्विभुक्तप्रत्याख्यानं चेत्कृतं भवेत्तर्हि चतुर्घटिकादिशेषे दिने वैकालिकं कुर्यादित्याद्यनुक्तमपि मंतव्यं। त्रिकालपूजाविधानं त्वित्थं—

प्रातः प्रपूजयेद्वासै-र्मध्याह्ने कुसुमैर्जिनं। संध्यायां धूपनैर्दीपै-स्त्रिधा देवं प्रपूजयेत् ॥ १ ॥ वासैश्चंदनादिद्रव्यैरित्यर्थः। एवं दिनकृत्यान्युक्त्वाथ रात्रिकृत्यं किंचिदुच्यते—

कृत्वा षडावश्यकधर्मकृत्यं, करोति निद्रामुचितक्षणे च।
हृदि स्मरन् पंचनमस्कृतिं स, प्रायः किलाब्रह्म विवर्जयंश्च ॥ ८४ ॥

व्याख्या—तदनंतरं स श्रावकः षडावश्यकरूपं धर्मकृत्यं कृत्वोचितक्षणे योग्यायां वेलायां निद्रां करोति। किं कुर्वन्? हृदि पंचपरमेष्ठिनमस्कारं स्मरन्, च पुनः प्रायो बाहुल्येनाब्रह्मसेवां परिहरन् ऋतुकाले संतानार्थं वेदयापनार्थं वा, स्वपत्न्यां तस्यानियमितत्वात्प्रायोग्रहणं कृतं। एतेन श्राद्धो नात्यंतं मैथुनलोलुपः स्यादित्यावेदितं। इत्युक्तानि लेशतः श्रावकस्य समस्ताहोरात्रकृत्यानि।

अथ स्थानांगनाम्नस्तृतीयांगस्य चतुर्थस्थानोक्ताः श्राद्धसत्काश्चतस्रो विश्रामभूमयः प्रदर्श्यंते–जहा भारं णं वहमाणस्स चत्तारि आसासा पण्णत्ता, तं जहा–जत्थ णं अंसाओ अंसं साहरइ १, जत्थ वि य णं उच्चारं पासवणं वा परिट्ठवेइ २, जत्थ वि अ णं नागकुमारावासंसि वा सुवण्णकुमारावासंसि वा वासं उवेइ ३, जत्थ वि अ णं आवकहाए चिट्ठइ ४। एवामेव समणोवासस्स णं चत्तारि आसासा पण्णत्ता तं जहा–जत्थ णं सीलव्वयगुणविरमणपच्चक्खाणपोसहोववासाइं पडिवज्जइ १, जत्थ वि अ णं सामाइयं देसावगासियं वा पडियज्जइ २, जत्थ वि य णं चाउद्दसट्ठमुद्दिट्ठपुण्णिमासिणीसु पडिपुन्नं पोसहं सम्मं अणु-

पालेइ ३, जत्थ वि अ णं अपच्छिममारणंतियसंलेहनाझूसणाझूसिए भत्तपडिआइक्खिए पावोवगए कालं अणवकंखमाणे विहरइ ४ इति। एतावतस्रो विश्रामभूमयो बोध्याः। अथ श्राद्धस्य सद्भूतगुणवर्णनं क्रियते—

जिनप्रणीतार्थविदो यथार्थ-वाग्युक्तितोऽपास्तमतांतरस्थाः।
स्वकीयधर्मोज्ज्वलमार्गमग्नाः, श्रद्धालवः शुद्धधियो जयंतु ॥ ८५ ॥

व्याख्या—जिनैरनंततीर्थंकरैः प्रणीता निर्दिष्टा येऽर्था यथावस्थितजीवाजीवादिपदार्थास्तद्विदस्तेषां ज्ञातारः, अत एव मद्दुकादिवत् यथार्थवाग्युक्त्याऽपास्ता निरुत्तरीकरणात्पराजयं नीता मतांतरस्थाः कुलिंगिनो यैस्ते, तथा पुनरात्मधर्मस्य य उज्ज्वलो मार्गस्तत्र मग्ना एकाग्रचित्ता एवंविधाः शुद्धबुद्धिधारकाः श्रद्धालवो जयंतु इति। मद्दुकश्राद्धवृत्तांतस्तु विस्तरतः पंचमांगे निर्दिष्टोऽस्ति। स च लेशतोऽत्रापि दर्श्यते—

राजगृहं नाम नगरं, तस्य पार्श्वे गुणशीलकं नाम चैत्यमभूत्। तत्समीपप्रदेशे च बहवः कालोदायिशैवालोदायिप्रभृतयोऽन्ययूथिका वसंति स्म। तेषां चैकदा एकत्र मिलितानां मिथः कथासंलापः समुत्पन्नः, यदुत महावीरो धर्मास्तिकायादीन् पंचास्तिकायान् प्ररूपयति। तत्र च धर्माधर्माकाशपुद्गलास्तिकायान् अचेतनान् जीवास्तिकायं च सचेतनं प्ररूपयति। तथा धर्माधर्माकाशजीवास्तिकायानरूपिणः पुद्गलास्तिकायं च रूपिणं प्ररूपयति। एवं हि सचेतनाचेतनादिरूपेणादृश्यमानत्वात्कथमेतन्मन्यते ? इति। तथा तत्रैव नगरे मद्दुको नाम श्रमणोपासको वसति स्म। स च महासमृद्धिमान् सर्वलोकमान्योऽधिग-

तज्जीवाजीवपदार्थो नित्यं धर्मकृत्यैरात्मानं भावयन् सुखेन कालं गमयति स्म । तत एकदा तत्र गुणशीलकचैत्ये श्रीवीरस्वामी समवसृतस्तदा स्वाम्यागमनवार्त्तां निशम्य स मद्रुको हृष्टः सन् स्वामिवंदनार्थं गच्छन्नगराद्बहिर्निःसृत्य यावत्तेषामन्ययूथिकानां नातिदूरं नातिसमीपं चागतस्तावत्तेऽन्ययूथिकास्तं गच्छंतं विलोक्य सर्वेऽप्येकत्रीभूय तत्पार्श्वे गत्वैवं प्रोचुः–'भो मद्रुक ! तव धर्माचार्यो यत्पंचास्तिकायादिकं प्ररूपयति तत्कथं ज्ञायते ? ।' तदा मद्रुकस्तानुवाच–' यदि धर्मास्तिकायादिभिः स्वकीयं कार्यं क्रियते तदा तेन कार्येण तान् जानीमो धूमेन वह्निमिव । यदि तैः कार्यं न क्रियते तदा न जानीमः, एतावता कार्यादिलिंगद्वारेणैव छद्मस्थानामतींद्रियपदार्थज्ञानं भवति । न च धर्मास्तिकायादीनामस्मत्प्रतीतं किंचित्कार्यादिलिंगं दृश्यते इति । तदभावान्न जानीम एव वयमिति । ततो धर्मास्तिकायाद्यपरिज्ञानमंगीकुर्वाणं मद्रुकं प्रति उपालंभयितुं ते प्रोचुः–' हे मद्रुक ! यद्येतमप्यर्थं न जानासि तर्हि कस्त्वं श्रावकः ? ।' तदैवमुपालब्धः सन्नसौ मद्रुको यत्तैरदृश्यमानत्वेन धर्मास्तिकायसंभवो निगदितस्तद्विघटनायोवाच–एत्थं आउसो वाउआए वाति ? हंता अत्थि तुब्भेणं आउसो वाउआयस्स वायमाणस्स रूवं पासह ? णो तिणट्ठे समत्थे, अत्थि णं आउसो घाणसहगया पोग्गला ? हंता अत्थि, तुब्भे णं आउसो घाणसहगयाणं पोग्गलाणं रूवं पासह ? णो तिणट्ठे समत्थे, अत्थि णं आउसो अरणिसहगए अगणिकाए ? हंता अत्थि तुब्भे णं आउसो अरणिसहगयस्स अगणिकायस्स रूवं पासह ? णो ति०, अत्थि णं आउसो समुद्दस्स पारगयाइं रूवाइं ? हंता अत्थि, तुब्भे णं आउसो ताइं रूवाइं पासह ? णो ति०, अत्थि णं आउसो देवलोगगयाइं रूवाइं ? हंता अत्थि, तुब्भे णं आउसो ताइं रूवाइं पासह ? णो ति०, एवामेव आउसो अहं वा तुब्भे वा अन्नो वा छउमत्थो यदि जो जं न जाणति तं सव्वं न भवति । किं च एवं हि भवतां सुबहुर्लोकोऽपि न

भविष्यति । इत्थं तानन्ययूथिकान् निरुत्तरीकृत्य ततः स मद्रुको गुणशीलके चैत्ये श्रीवीरस्वामिपार्श्वे गत्वा वंदनादिपूर्वमुचितस्थाने उपविष्टस्तदा स्वामी मद्रुकं प्रत्युवाच—'हे मद्रुक ! त्वं शोभनोऽसि, येन त्वयास्तिकायानजानता अन्ययूथिकानामग्रे न जानीम इत्युक्तं, अन्यथा अजानन्नपि यदि जानीम इत्यभणिष्यस्तर्हि अर्हदादीनामाशातनाकारकोऽभविष्यस्त्वमिति ।' तत इत्थं प्रभुवचः श्रुत्वा स मद्रुको हृष्टः सन् स्वामिनं नत्वा धर्मोपदेशं च श्रुत्वा स्वस्थानं जगाम । आयुःक्षये च 'अरुणाभ'विमाने देवत्वेनोत्पन्नो महाविदेहे च सेत्स्यति । इति मद्रुकश्राद्धवृत्तांतः ॥

अथैवंविधं श्रावकत्वमवाप्य तत्पालनाय सर्वथा प्रमादपरित्यागो विधेय इति दर्श्यते—

निशम्य विप्रोपनयं सुधीभिः, प्रमादसंगोऽपि न कार्य एव ।
इहोत्तरत्रापि समृद्धिहेतौ, महोज्ज्वलेऽस्मिन्निजधर्मकार्ये ॥ ८६ ॥

व्याख्या—सुधीभिः शुद्धबुद्धिभिर्भव्यैर्दरिद्रब्राह्मणस्योपनयं निशम्य श्रुत्वा पश्चात्तापकारणस्य प्रमादस्य संगोऽपि न कर्तव्य एव, प्रमादसेवा तु दूरे तिष्ठतु इत्यपि शब्दार्थः, क्वेत्याह-इहभवे उत्तरभवे च समृद्धिकारणेऽत एव महानिर्मलेऽस्मिन् देशविरतिलक्षणे आत्मधर्मकार्ये इति । एतावता धर्मकार्ये सदा निरालस्यैर्भाव्यमित्यर्थः । दरिद्रब्राह्मणोपनयस्त्वेवं—

कस्मिंश्चिन्नगरे एक आजन्मदरिद्रो महालस्यवान् विप्रो वसति स्म । स चैकदा भार्यया प्रेरितः सन् दानग्रहणार्थं नृपपार्श्वे ययौ, तदा चिर जीवेत्यादिवाचाशिषं ददानं तं विप्रं आकृत्यादिना महादारिद्र्याभिभूतं विज्ञायानुकंपापूरितहृदयेन

राज्ञा प्रोक्तं–' भो विप्र! सूर्यास्तगमनादर्वाग् यदृच्छया मद्भांडागाराद्द्रव्यं गृहीत्वा त्वं स्वगृहं पूरय, ममाज्ञास्ति।' इत्युक्त्वा तत्प्रवृत्तिसूचकं स्वनामांकितं पत्रं लेखयित्वा तस्मै दत्तं। सोऽपि हृष्टः सन् तत्पत्रं गृहीत्वा स्वगृहमागत्य स्वपत्न्यै सर्वमपि तं वृत्तांतं निवेदितवान्। तदा पत्न्या भणितं–' स्वामिंस्तत्र गत्वा तान्द्रव्यमानय, अत्रार्थे विलंबं मा कार्षीः, श्रेयांसि बहुविघ्नानीत्याद्युक्तत्वात्।' तदा स प्रोचे–' शतं विहाय भोक्तव्यमिति नीतिवचनं विद्यते, अतो भोजनं कृत्वा स्थिरचित्तो भूत्वा पश्चाद्द्रव्यार्थं यास्यामि।' ततस्तया प्रातिवेश्मिकगृहाच्चूर्णादि समानीय सद्योऽन्नपाकं निष्पाद्य तस्मै भोजनं कारयित्वा पुनः प्रोक्तं–' स्वामिन्नथ शीघ्रं तत्र गत्वा स्वकार्यं साधय।' तदा स प्रोचे–' भुक्त्वा शतपदं गच्छे–द्यदि शय्या न लभ्यते' इति शास्त्रे उक्तत्वात् क्षणं शयित्वा पश्चाद्यास्यामीत्युक्त्वा सुप्तः, परं दरिद्रस्य प्रायो निद्रा बह्वी भवति, अतः स बहुनिद्रया व्याप्तः सन् तथा सुप्तो यथा बहुभिः कराच्छोटनधूननादिक्रियाभिः स्त्रिया मुहुः प्रबोध्यमानोऽपि तृतीयप्रहरे कष्टेन प्रबुद्धः, ततः पुनर्भार्याप्रेरितः स विप्रो गृहान्निःसृत्य चतुष्पथमार्गेण गच्छन्नंतराले नाटकं जायमानं विलोक्य चिंतयति स्म–' अद्यापि दिनं बहु विद्यतेऽतो नाट्यं दृष्ट्वा पश्चात्सद्यो द्रव्यमानेष्यामि' इति विचिंत्य नाटकं पूर्णं वीक्ष्याग्रे व्रजन् मार्गमध्ये स्थाने स्थाने कौतुकानि विलोकयन् दिवसं च गच्छंतमजानन् सूर्यास्तगमनसमये नृपभांडागारसमीपं प्राप्तः, तत्र च सूर्यास्तगमनाद्भांडागारद्वारे तालकं दत्त्वा स्वगृहं गच्छंतं भांडागारिणं प्रति स विप्रस्तत्पत्रं दर्शितवान्, तेन च पत्रं दृष्ट्वा प्रोक्तं–' भो विप्र! नृपोक्तनियमस्य पूर्णीभवनादथ त्वं किमपि न प्राप्स्यसि, अतः स्वगृहं गच्छ।' ततः स प्रमादवशाद्धनमप्राप्य हस्तौ घर्षयन् पश्चात्तापं कुर्वन् ततो व्यावृत्त्य स्वगृहमायातः, प्राग्व-

दरिद्र एव च स्थितः। अयं च लौकिकदृष्टांतः प्रोक्तः, अथात्मोपर्येतदुपनयः कार्यः। तथाहि—

संसारनगरे दरिद्रब्राह्मणप्रायो महादुःखी संसारी जीवस्तस्य सत्कार्ये प्रेरिका सुमतिश्च भार्योपमा, तथा राज्ञः समानोऽत्र तीर्थंकरादिः, सद्गुरुर्धर्मधनदाता, नरभवश्च भांडागारोपमस्तं विना धर्मधनस्याप्राप्तेः, पुनः सूर्यसमानमायुर्विद्यते, यथा सूर्यास्तगमनादर्वाक् धनग्रहणे राज्ञ आज्ञाभूत्, तथायुःक्षयादर्वाक् धर्मः कर्त्तव्य इति गुर्वाज्ञास्ति। यदुक्तं—जरा जाव न पीडेई, वाही जाव न वड्डई। जाव न इंदियहाणी, ताव धम्मं समायरे ॥ १ ॥ इत्यादि, पुनर्यथा स ब्राह्मणो दिवसं बहु मन्वानो निद्रानाटकदर्शनादिप्रमादासक्तः सन् धनाप्राप्त्या पश्चात्तापपरो जातस्तथाऽयं जीवोऽपि स्वायुर्बहु मन्वानः पंचेंद्रियविषयासक्तः सन् आयुषः पूर्णीभवनाद्धर्ममकृत्वैव गत्यंतरे गत्वा दुःखार्त्तः सन् पश्चात्तापं प्राप्नोति—'अहो! मया प्राग्भवे विषयसंगेन सत्यामपि सामग्र्यां श्रीजिनधर्मो नाराधित इति।' परं पश्चात्किमपि कार्यं न सिध्यति, तस्माद्भो भव्याः! प्रथमत एव प्रमादं परित्यज्य सद्धर्मपालने तत्परा भवत, येन भवतां सर्वेष्टसिद्धिः संपद्यते। इति प्रमादोपरि निःलक्षणोपनयः। अथेदृक्श्रावकत्वं संप्राप्तुकामैर्भव्यैर्निह्नवादिकुदृष्टिवचनेषु विश्वासिभिर्न भाव्यमिति दर्श्यते—

जनस्य सत्कांचनकंकणद्वयी-निर्मापकस्योपनयं निशम्य सः। कुदृष्टिवाक्याश्रयणे पराङ्मुखो, भवेन्न चेद्वंचनमश्नुते ध्रुवं ॥

व्याख्या—स्वर्णकारपार्श्वे सम्यक्स्वर्णमयकटकयुगलस्य कारयितुर्जनस्योपनयं निशम्य स श्रावकोचितधर्माभिलाषी भव्यः कुदृष्टीनां यानि वाक्यानि तेषामाश्रयणे पराङ्मुखो भवेत्, तद्वचनेषु विश्वासं न कुर्यादित्यर्थः, चेद्यदि तत्र पराङ्मुखो न भवेत्तर्हि ध्रुवं निश्चितं वंचनं प्राप्नोति. एतावता तन विश्वासं कुर्वाणस्तद्वचनव्युद्ग्राहितचित्तः सन् सद्गुरूपदेशमना-

११

इत्यात्मधर्माद्भ्रष्टो भवतीत्यर्थः। स्वर्णकंकणनिर्मापकनरोपनयस्त्वेवं—

एकः कश्चिन्मुग्धः पुमान् स्वर्णकारपार्श्वे स्वर्णमयं कंकणयुगलं कारितवान्। तदा तेन धूर्तेन स्वर्णकारेण तं मुग्धं विज्ञाय तद्वंचनार्थं कंकणयुगले कृते, तत्रैकं कंकणयुगलं स्वर्णमयमितरच्च पित्तलमयं। ततस्तस्मै स्वर्णमयं कंकणयुगलं दत्वा विप्रतारणबुद्ध्या एकांते तेनोक्तं-'अस्मिन् ग्रामे सर्वेऽपि लोका मम द्वेषिणः संति, ते हि मत्कृतमाभरणं शुद्धमप्यशुद्धं वक्ष्यंति, तस्मात्त्वं पूर्वं मम नामागृहीत्वा सर्वेभ्यो लोकेभ्य इदं दर्शयित्वा शुद्धाशुद्धपरीक्षां च कारयित्वाऽऽगच्छ, उज्ज्वलीकृत्य तव हस्तयोः परिधापयामि।' ततः स मुग्धस्तत्कैतवमजानन् तद्भूषणं तथैव लोकेभ्यो दर्शयित्वा लोकमुखाच्च तस्य शुद्धतां श्रुत्वा पश्चादागत्य स्वर्णकाराय तद्वृत्तांतं निगद्य तद्भूषणं दत्तवान्। तदनंतरं तेन स्वर्णकारेण स्वहस्तलाघवात्तत्स्वर्णमयं कंकणयुगलं प्रच्छन्नदेशे मुक्त्वा तत्तुल्यवर्णप्रमाणाकारमेवान्यत्पित्तलमयं कंकणयुगलं सद्यः समुज्ज्वलं विधाय तस्य हस्तयोः परिधाप्य प्रोक्तं-'अतः परं मन्नामश्रवणाद्यदि कोऽपि लोक एतत्पित्तलमयं ब्रूयात्तर्हि त्वया तद्वचो न मंतव्यं, मद्वचने विश्वासो रक्षणीयः।' ततस्तेनापि मुग्धतया तथैव प्रतिपन्नं। ततः स पुमान् तदशुद्धमपि भूषणं शुद्धं मन्वानश्चतुष्पथादौ व्रजन् लोकैः पृष्टो 'ननु एतत्कंकणयुगलं केन स्वर्णकारेण कृतं?।' तेनोचे-'अमुकस्वर्णकारेण।' तदा परीक्षकलोकैः सम्यग्निरीक्ष्य प्रोक्तं-'इदं तु पित्तलमयं विद्यते, वंचितस्त्वं तेन धूर्तेन।' ततः स पुमान् तेन व्युद्ग्राहितचित्तत्वादेवं चिंतयति स्म-'एते सर्वेऽपि लोकास्तस्य द्वेषिणः संति अत इत्थं वदंति, इदं मम भूषणं तु शुद्धस्वर्णमयं विद्यते, तस्माद्यथेच्छमेते कथयंतु, अहमेतत्त्यागं न कुर्वे' इति। तदेवं सत्पुरुषवचोऽनादरणात्तस्य धूर्तस्य वचसि विश्वासकरणाच्च स पुमानशुद्धवस्तुप्राप्त्या

वंचनं प्राप्तः, शुद्धवस्तुभागी च न बभूव। अयं हि लौकिकदृष्टांतः प्रोक्तः, अथायमेवात्मोपरि आनेतव्यस्तथाहि—

यः स्वर्णकंकणग्राही पुमान् सोऽत्र धर्मार्थी जीवः, यश्च स्वर्णकारः सोऽत्र निह्नवादिः कुगुरुः, यच्च प्राक् स्वर्णमयं कंकणं तेन दर्शितं, तदत्र प्राक् ग्रन्थाख्यानदानदयादिधर्मकृत्यं तेन दर्श्यते, यत्पुनस्तेन स्वाविश्वासमुत्पाद्य तस्मै पित्तलमयं कंकणं दत्तं, तदत्र कुदृष्टिना विविधवचःकल्पनया तथिचं व्युद्ग्राह्य एकांतवादयुक्तं श्रीमदर्हद्धर्मविरुद्धं धर्मस्वरूपं तस्मै ग्राह्यते, ततश्च स यथा तत्प्रेरितत्वात्सत्पुरुषवाक्यं द्वेषमूलकं ज्ञात्वा नामंस्त, तथायमपि मिथ्यात्विव्युद्ग्राहितचित्तत्वात् शुद्धधर्मोपदेशकगुरुवचनं द्वेषसंभवं ज्ञात्वा न मन्यते। ततः स यथाऽशुद्धवस्तुप्राप्त्या वंचनं प्राप्तस्तथायमपि शुद्धधर्माप्राप्त्या वंचनं प्राप्तः सन् दुर्गतिभाग्भवति, पश्चात्तत्सद्धर्मप्राप्तिर्दुर्लभा भवेत्। तस्माद्भो भव्या! यदि भवतां शुद्धधर्मेच्छा स्यात्तर्हि प्रथमत एव निह्नवादिकुदृष्टीनां वचनेषु विश्वासं परिहरत, श्रीमदर्हत्प्रणीतानेकांतधर्मोपदेशकसद्गुरुवचनेषु च विश्वासं कुरुत, येन सद्यः परमात्मसंपदः प्रादुर्भवेयुः। इति कुदृष्टिवचनविश्वासे स्वर्णकंकणनिर्मापकोपनयः। इत्युक्तं सप्रसंगं देशविरतिस्वरूपं। इत्थं स्वरूपं परमात्मरूप–निरूपकं चित्रगुणं पवित्रं। सुश्रावकत्वं परिगृह्य भव्या, भजंतु दिव्यं सुखमक्षयं च ॥ १ ॥ लेशाद्देशाद्विरते–र्विचार एषोऽत्र वर्णितोऽस्ति मया। अनुसाराद्ग्रंथस्यो–पदेशचिंतामणिप्रभृतेः ॥ २ ॥

॥ इति श्रीमद्बृहत्खरतरगच्छाधिराजश्रीजिनभक्तिसूरींद्रचरणाब्जहंसोपमैः श्रीजिनलाभसूरिभिः संगृहीते आत्मप्रबोधग्रंथे देशविरतिनिर्णयो नाम द्वितीयः प्रकाशः समाप्तः ॥ श्रीरस्तु ॥



# ॥ अथ तृतीयः प्रकाशः ॥

अथ क्रमायातस्तृतीयः सर्वविरतिप्रकाश आरभ्यते, तत्र तावत्तत्प्राप्तिप्रकारसूचिकेयमार्या—

प्रत्याख्यानावरण–कषायचतुष्कक्षयोपशमभवनात् ।
लभते मानव एतां, देशविरतिमानविरतो वा ॥ ८८ ॥

व्याख्या—देशविरतिमान् पंचमगुणस्थानवर्त्ती वाथवा अविरतः प्रथमगुणस्थानवर्त्ती चतुर्थगुणस्थानवर्त्ती वा मानवः प्रत्याख्यानावरणलक्षणतृतीयकषायचतुष्टयक्षयोपशमे जाते सति एतां सर्वविरतिं लभते । त्रिविधत्रिविधभंगकेन सर्वसावद्ययोगेभ्यो निवृत्तिः सर्वविरतिरित्युच्यते । देवतिर्यग्नैरयिकास्तु तथाभवस्वाभाव्यान्नैतां लभंते इति मानवस्यैव ग्रहणं । किं चेयं हि सर्वविरतिर्देशविरतिप्राप्तिसमयभाविन्याः कर्मस्थितेर्मध्यात्संख्यातेषु सागरोपमेषु क्षपितेषु सत्स्वेव प्राप्यते, इत्युपदर्शितं प्राग् विस्तरेण । तथा स्थितिमानं तु अस्या अपि देशविरतिवज्जघन्यतोऽन्तर्मुहूर्त्तमुत्कर्षतो देशोना पूर्वकोटिरित्यवगंतव्यं । एवंरूपा सर्वविरतिर्येषां विद्यते ते सर्वविरताः साधव उच्यंते । ते च द्विविधाः छद्मस्थाः केवलिनश्च । तत्र छद्मस्थाः षष्ठगुणस्थानादारभ्य द्वादशगुणस्थानवर्त्तिनो मुनयः, केवलिनस्तु त्रयोदशचतुर्दशगुणस्थानद्वयवर्त्तिनो जीवाः । तत्रास्मिन् प्रकाशे तु छद्मस्थानामेवाधिकारः, केवलिनस्तु परमात्मस्वरूपाः संति, अतस्तेषां स्वरूपं चतुर्थप्रकाशे वक्ष्यते इति ।

अथात्रादौ सर्वविरतिप्रतिपत्तौ पुंस्त्रीनपुंसकानां योग्यायोग्यत्वं दर्श्यते—

अट्ठारसपुरिसेसु, वीसं इत्थीसु दस नपुंसेसु ।

पव्वावणा अणरिहा, इय अणला आहिया सुत्ते ॥ ८९ ॥

स्पष्टा, नवरं, अनला अयोग्या आख्याताः कथिताः । तत्र दीक्षानर्हा अष्टादश पुरुषास्त्वमी—

बाले १ वुड्ढे २ नपुंसे ३ य, कीवे ४ जड्डे ५ य वाहिए ६ ।

तेणे ७ रायावगारी ८ य, उम्मत्ते ९ य अदंसणे १० ॥ ९० ॥

दासे ११ दुट्ठे १२ य मूढे १३ य, अन्नत्ते १४ जुंगिए १५ इय ।

उच्चट्ठए १६ य भयए १७, सेहनिप्फेडिया १८ इय ॥ ९१ ॥

व्याख्या—जन्मत आरभ्य सप्ताष्टवर्षाणि यावद्बाल उच्यते, स च यस्य तस्य वा पराभवस्थानत्वाच्चारित्रपरिणामाभावाच्च न दीक्षार्हः, किं च बालदीक्षणे संयमविराधनादयो दोषाः संभवंति, यस्मात्स बालोऽज्ञानित्वेनायोगोलकतुल्यत्वात् यतो यतः स्पंदते ततस्ततः षड्जीवनिकायवधाय भवति, यथा निर्दया अमी श्रमणा यदेवं बालानपि बलाद्दीक्षाकारागारे प्रक्षिप्य तेषां स्वाधीनतामुच्छिंदंतीति लोके निंदा जायते, पुनर्मातृजनोचितायां तत्परिचर्यायां क्रियमाणायां स्वाध्यायभंगः

सादिति। नन्वेवं तर्हि–'छव्वरिसो पवइओ, निग्गंथं रोइऊण पावयण' मित्यादौ षड्वार्षिकस्यातिमुक्तककुमारस्य 'दीक्षाप्रतिपत्तिः कथं श्रूयते ? इति चेदत्रैवं संभाव्यते, तस्य त्रिकालज्ञेन भगवता स्वयं दीक्षितत्वान्न दोष इति। इहातिमुक्तकवृत्तांतस्तु अंतकृद्दशांगाद्यनुसारेणैवं—

पोलासपुरे नगरे विजयो नाम राजा। तस्य श्रीनाम्नी पट्टदेवी। तयोश्चातिमुक्तको नाम पुत्रः, स च बहुयत्नेन वर्द्धमानः क्रमेण षड्वार्षिको जातः। तस्मिन्नवसरे पुराद्बहिः श्रीवीरस्वामी समवसृतः। ततो गौतमो भगवान् स्वामिनमापृच्छ्य भिक्षार्थं पुरमध्ये समेतस्तदा बालैः सह रममाणोऽतिमुक्तककुमारो गौतमं दृष्ट्वैवमवादीत्–'के यूयं ? किं चाटथ ?।' गौतमेनोक्तं–'श्रमणा वयं, भिक्षार्थं च पर्यटामः।' 'तर्हि पूज्या आगच्छत, भवद्भ्यो भिक्षां दापयामीति' भणित्वा स कुमारोऽङ्गुल्यां गौतममवलंब्य स्वगृहमानैषीत्। तदा श्रीदेवी हृष्टा सती भक्त्या गौतमं नत्वा प्रतिलाभयामास। ततोऽतिमुक्तकः पुनरेनमवोचत्–'यूयं क वसथ ?।' गौतमः प्रोचे–'हे भद्र ! यत्रोद्यानेऽस्माकं धर्माचार्याः श्रीवर्द्धमानस्वामिनो वसंति तत्र वयं परिवसामः।' तदा स प्रोचे–'स्वामिन् ! आगच्छाम्यहं भवत्सार्धं श्रीवीरस्वामिनं वंदितुं।' गौतमोऽवादीत्–'यथासुखं देवानुप्रिय !।' ततो गौतमेन सहागत्यातिमुक्तकुमारो भगवंतं वंदते स्म। भगवता धर्मोपदेशो दत्तः, तं श्रुत्वा प्रतिबुद्धोऽतिमुक्तको दीक्षां ग्रहीतुमिच्छन् पित्रोरनुज्ञाग्रहणार्थं गृहमागत्य पितरावेवमब्रवीत्–'हे अंब ! हे तात ! मयाद्य श्रीवीरस्वामिनः पार्श्वे धर्मः श्रुतः, स धर्मो मे रुचितः।' तदा तावूचतुः–'हे पुत्र ! धन्योऽसि त्वं कृतपुण्योऽसि कृतार्थोऽसि त्वं यत्त्वया वीरस्वाम्यंतिके धर्मः श्रुतः, स पुनस्ते रुचित' इति। ततः स कुमारः पुनरेवमुवाच–'हे अंब ! हे तात ! अहं

तद्धर्मश्रवणादिना संसारभयोद्विग्नो जन्ममरणेभ्यो भीतश्चास्मि, तस्माद्भवदनुज्ञया श्रीवीरप्रभुसमीपे प्रव्रज्यां ग्रहीतुमिच्छामि।' ततो माता तदनिष्टमेकांतमप्रियमश्रुतपूर्वं वचः श्रुत्वा सद्यः शोकभरं प्राप्ता दीनवदना सती मूर्छां प्राप्यांगणतले धमत्ति सर्वांगैर्निपतिता। तदा चेटीभिस्त्वरितं कंचनकलशमादाय तन्मुखविनिर्गतशीतलविमलधाराभिः परिषिक्ता कृतशीतवातोपचारादिभिश्चेतनां प्राप्य विलपंती पुत्रं प्रत्येवमवादीत्–'हे जात! त्वमस्माकमेकः पुत्र इष्टः कांतः प्रिय आभरणकरंडकसमानोऽमूल्यरत्नभूतो हृदयानंदजनक उदुंबरपुष्पमिव दुर्लभोऽसि, अत एव क्षणमपि त्वद्वियोगं सोढुं न शक्नुमो वयं, तस्मात् हे जात! यावद्वयं जीवामस्तावत्त्वमवतिष्ठस्व, पश्चात्सुखेन प्रव्रज्याग्रहणं कुर्याः।' ततः कुमारो जगाद–'हे अंब! भवदुक्तं सत्यं परमेष मनुष्यभवोऽनेकजन्मजरामरणस्वरूपशारीरमानसिकप्रकामदुःखवेदनोपद्रवाभिभूतोऽध्रुवोऽशाश्वतः संध्याभ्ररागसदृशो जलबुद्बुदसमानो विद्युल्लताचंचलः शटनपतनविध्वंसनधर्मः पूर्वं वा पश्चाद्वाऽवश्यं विप्रहातव्यः, अथ को जानाति अस्माकं मध्ये कः पूर्वं परलोकं यास्यति? को वा पश्चाद्यास्यति? तस्माद्भवदाज्ञयाऽधुनैवाहं प्रव्रजितुमिच्छामि।' ततः पुनर्मातापितरौ तमेवमवादिष्टां–'हे पुत्र! इदं ते शरीरं विशिष्टरूपं लक्षणव्यंजनगुणोपपेतं विविधव्याधिविवर्जितं ससौभाग्यं निरुपहतोदात्तकांतपंचेंद्रियोपशोभितमनेकोत्तमगुणयुक्तं विद्यते। तस्मात्पूर्वं स्वशरीरस्य रूपसौभाग्यादिगुणाननुभूय परिणतवयस्को भूत्वा पश्चात्प्रव्रज्यां गृह्णीयाः।' ततः कुमारः पुनरेवमुवाच–'हे अंब! तात! यद्भवद्भ्यां शरीरस्वरूपमुक्तं तन्मानुष्यकं शरीरं खलु दुःखायतनं विविधव्याधिशतनिकेतनमस्थिकाष्ठोच्छ्रितं शिरास्नायुजालसंवेष्टितं मृत्तिकाभांडमिव दुर्बलं अशुचिपुद्गलसंक्लिष्टं शटनपतनविध्वंसनधर्मं पूर्वं वा पश्चाद्वाऽवश्यं त्याज्यं भविष्यति, अतः कोऽत्र शरीरे धीमान्

रज्यति ?।' ततो मातापितरौ पुनरूचतुः-'हे पुत्र ! इदं ते पितामहप्रपितामहादिभ्य आगतं विपुलधनकनकरत्नमणिमौक्तिकशंखप्रवालप्रभृति स्वायत्तं प्रधानं द्रव्यं विद्यते, यत्सप्तमं पुरुषं यावदत्यर्थं दीनादिभ्यो दीयमानमपि स्वयं भुज्यमानमपि च न क्षयं याति। तदेवंविधमेतद्द्रव्यं स्वेच्छया सम्यगनुभूय स्वसमानरूपलावण्यादिगुणशालिनीः स्वमनोऽनुगामिनीर्बह्वी राजकन्याः परिणीय ताभिः समभद्भुतानि सांसारिककामभोगसुखानि भुक्त्वा पश्चात्प्रव्रज्यां गृह्णीयाः।' ततः कुमार उवाच-'भो अंब ! तात ! यद्भवद्भ्यां द्रव्यादिस्वरूपमुक्तं तद् द्रव्यं खलु अग्निजलचौरराजदायादप्रभृतीनां बहूनां साधारणमध्रुवमशाश्वतं पूर्वं वा पश्चाद्वावश्यं त्याज्यं भविष्यति तथा मानुष्यकाः कामभोगा अपि अशुचयोऽशाश्वता वातपित्तकफशुक्रशोणिताश्रया अमनोज्ञा विरूपमूत्रपुरीषपूर्णा दुर्गंधोच्छ्वासनिःश्वासा अबुधजननिषेविताः सदा साधुजनस्य गर्हणीया अनंतसंसारवर्द्धनाः कटुकफलविपाकाः संति, अत एतदर्थं कः स्वजीवितं विफलीकुर्यात् ?।' ततो मातापितरावित्थं विषयानुलोमैर्बहुभिर्वचनैस्तं लोभयितुमशक्नुवंतौ विषयप्रातिलोमैः संयमभयोपदर्शकैर्वचनैरेवमूचतुः-'हे पुत्र ! नैर्ग्रंथं प्रवचनं सत्यमनुत्तरं शुद्धं शल्यकर्त्तनं मुक्तिमार्गरूपं सर्वदुःखनाशकं चास्ति। अत्र स्थिता एव जीवाः सिद्ध्यंति, परमेतल्लोहमयचणकचर्वणमिवातिदुष्करं वालुकाकवल इव निरास्वादं भुजाभ्यां महासमुद्रवद्दुस्तरं, पुनर्यदेतत्प्रवचनं तत्तीक्ष्णं खड्गादि क्रमितव्यं, तथा रज्ज्वादिनिबद्धं महाशिलादिकं हस्तादिना धारयितव्यं, तथासिधाराभं व्रतमासेवितव्यं। पुनः साधूनामाधाकर्मिकौद्देशिकादि भोक्तुं न कल्पते। त्वं तु हे पुत्र ! सर्वदा सुखसमुदितो न कदापि दुःखसमुदितोऽत एव त्वं शीतोष्णक्षुत्पिपासादंशमशकविविधरोगादिपरीषहोपसर्गान् सोढुं न समर्थोऽसि, तस्मादधुना तु भवंतं न प्रव-

ज्यायै अनुज्ञातुमिच्छामो वयमिति।' ततः कुमारो जगाद–'हे अंब! तात! या भवद्भ्यां संयमस्य दुष्करता दर्शिता सा खलु क्लीबानां कातराणां कापुरुषाणामिहलोकप्रतिबद्धानां परलोकपराङ्मुखानां विषयतृष्णावतां विद्यते, न खलु धीरस्य संसारभयोद्विग्नस्येति। तस्मादहं भवदनुज्ञयाऽधुनैव प्रव्रजितुमिच्छामि।' ततस्तौ पुनरूचतुः–'हे बाल! एतावंतं हठं मा कार्षीः, त्वं किं जानासि?।' तदातिमुक्तकोऽवादीत्–'हे अंब! तात! यदहं जानामि तदेव न जानामि, यच्च न जानामि तदेव जानामि।' ततस्तावूचतुः–'हे पुत्र! कथमेतत्?।' सोऽब्रवीत्–'हे पितरौ! जानाम्यहं यदुत जातेनावश्यं मर्त्तव्यं, परं न जानामि कदा वा कस्मिन् वा कथं वा कियच्चिराद्वा? तथा न जानामि कैः कर्मभिर्नरकादिषु जीवा उत्पद्यंते? एतत्पुनर्जानामि यत्स्वयं कृतैः कर्मभिरिति।' ततो मातापितरौ तस्य संयमे स्थिरचित्तं विज्ञाय महताडंबरेण निष्क्रमणमहोत्सवं चक्रतुः। तदातिमुक्तककुमारः स्नानविलेपनवस्त्राभरणादिविभूषितशरीरो मातापितृप्रभृतिबहुपरिवारपरिवृतो महाशिबिकामारुह्य विविधवादित्रादिध्वनौ जायमाने यदा पुरमध्ये निर्जगाम तदा बहवो द्रव्यार्थिनो भट्टादिजना मनोज्ञवाणीभिरित्थमाशिषं ददुः–'हे राजकुमार! त्वं धर्मेण तपसा च कर्मशत्रून् जय जय, पुनर्हे जगदानंदकर! ते भद्रं भूयात्, पुनस्त्वमुत्तमैर्ज्ञानदर्शनचारित्रैरजितानींद्रियाणि जय, जितं च साधुधर्मं सम्यक् पालय, पुनस्त्वं निर्विघ्नेन सिद्धिस्थानं प्राप्नुहीति।'

ततोऽतिमुक्तककुमार इत्थं याचकजनैः स्तूयमानः पौरनरनारीभिश्च सादरं विलोक्यमानोऽर्थिजनेभ्यश्चेप्सितं दानं ददानः पुराद्बहिर्निर्गत्य यत्र वीरस्वामी समवसृतस्तत्रागत्य शिबिकात उत्तीर्णः। ततो मातापितरौ तं कुमारमग्रे कृत्वा श्रीवीरस्वामिसमीपं समागत्य वंदनादिपूर्वकमेवमूचतुः–'हे स्वामिन्! अयमतिमुक्तककुमारोऽस्माकमिष्टः कांत एकः पुत्रोऽस्ति, परं यथा

कमलं पंके जायते जले च संवर्द्धते, न पुनः पंकजलाभ्यामवलिप्तं भवति, तथायमपि शब्दरूपलक्षणेषु कामेषु जातो गंधरसस्पर्शलक्षणेषु भोगेषु च वृद्धिमुपगतो न पुनः कामभोगेषु मित्रज्ञातीयस्वजनसंबंधिषु चानुलिप्तो भवति। किं त्वसौ संसारभयोद्विग्नः सन् भवतां पार्श्वे दीक्षां ग्रहीतुमिच्छति, तस्माद्वयं भवद्भ्य एतां शिष्यभिक्षां दद्मो, भवंतोऽप्येतां प्रतीच्छंतु।' स्वामिना भणितं–' यथासुखं देवानुप्रिय! मा प्रतिबंधं कुरु [त]।' ततोऽतिमुक्तककुमारो भगवद्वचनं श्रुत्वा हृष्टः सन् भगवंतं त्रिःप्रदक्षिणीकृत्य नत्वा चोत्तरपूर्वस्यां दिशि अपक्रम्य स्वयमेवाभरणमाल्यालंकारान् विमुंचति स्म। तदा माता हंसलक्षणेन पटशाटकेनाभरणादिकं गृहीत्वा नेत्राभ्यामश्रूणि विमुंचंती अतिमुक्तककुमारमेवमवादीत्–'हे पुत्र! प्राप्तेषु संयमयोगेषु त्वया प्रयत्नः कार्योऽप्राप्तानां संयमयोगानां प्राप्तये घटना कार्या, पुनः प्रव्रज्यापालने स्वपुरुषत्वाभिमानः सफलः कार्यः, प्रमादस्तु न कार्य' इति। ततो मातापितरौ भगवंतं नत्वा सपरिकरौ स्वस्थानं गतौ। तदनंतरमतिमुक्तकः स्वामिसमीपमागत्य वंदनादि कृत्वा प्रव्रजितः। स्वामिनापि पंचमहाव्रतग्राहणापूर्वकं क्रियाकलापादिशिक्षणाय गीतार्थस्थविरेभ्यः समर्पितः। ततः प्रकृतिभद्रको विनीतोऽतिमुक्तको नाम कुमारश्रमण एकदा महावृष्टौ निपतंत्यां कक्षायां प्रतिग्रहकं रजोहरणं च समादाय बहिः संप्रस्थितः, तत्र च जलवाहं वहमानं दृष्ट्वा बालावस्थावशान्मृत्तिकया पालिं बद्ध्वा नौवाहको नावमिवासौ प्रतिग्रहकं नौका ममेयमिति संकल्प्य तत्र प्रवाहयन् रमते स्म। तदा स्थविरास्तदीयात्यंतानुचितां तां चेष्टां दृष्ट्वा तमुपहसंत इव भगवत्समीपमागत्य भगवंतमेवं पप्रच्छुः–'स्वामिन्! भवदंतेवासी अतिमुक्तको नाम कुमारश्रमणः कतिभिर्भवग्रहणैः सेत्स्यति?।' भगवता भणितं–' भो आर्याः! मदंतेवासी अतिमुक्तकसाधुरनेनैव भवग्रहणेन सेत्स्यति, तस्माद्भो आर्याः! यूयमतिमुक्तक-

कमलं पंके जायते जले च संवर्द्धते, न पुनः पंकजलाभ्यामवलिप्तं भवति, तथायमपि शब्दरूपलक्षणेषु कामेषु जातो गंधरसस्पर्शलक्षणेषु भोगेषु च वृद्धिमुपगतो न पुनः कामभोगेषु मित्रज्ञातीयस्वजनसंबंधिषु चानुलिप्तो भवति। किं त्वसौ संसारभयोद्विग्नः सन् भवतां पार्श्वे दीक्षां ग्रहीतुमिच्छति, तस्माद्वयं भवद्भ्य एतां शिष्यभिक्षां दद्मो, भवंतोऽप्येतां प्रतीच्छंतु।' स्वामिना भणितं–'यथासुखं देवानुप्रिय! मा प्रतिबंधं कुरु[त]।' ततोऽतिमुक्तककुमारो भगवद्वचनं श्रुत्वा हृष्टः सन् भगवंतं त्रिःप्रदक्षिणीकृत्य नत्वा चोत्तरपूर्वस्यां दिशि अपक्रम्य स्वयमेवाभरणमाल्यालंकारान् विमुंचति स्म। तदा माता हंसलक्षणेन पटशाटकेनाभरणादिकं गृहीत्वा नेत्राभ्यामश्रूणि विमुंचंती अतिमुक्तककुमारमेवमवादीत्–'हे पुत्र! प्राप्तेषु संयमयोगेषु त्वया प्रयत्नः कार्योऽप्राप्तानां संयमयोगानां प्राप्तये घटना कार्या, पुनः प्रव्रज्यापालने स्वपुरुषत्वाभिमानः सफलः कार्यः, प्रमादस्तु न कार्य' इति। ततो मातापितरौ भगवंतं नत्वा सपरिकरौ स्वस्थानं गतौ। तदनंतरमतिमुक्तकः स्वामिसमीपमागत्य वंदनादि कृत्वा प्रव्रजितः। स्वामिनापि पंचमहाव्रतग्राहणापूर्वकं क्रियाकलापादिशिक्षणाय गीतार्थस्थविरेभ्यः समर्पितः। ततः प्रकृतिभद्रको विनीतोऽतिमुक्तको नाम कुमारश्रमण एकदा महावृष्टौ निपतंत्यां कक्षायां प्रतिग्रहकं रजोहरणं च समादाय बहिः संप्रस्थितः, तत्र च जलवाहं वहमानं दृष्ट्वा बालावस्थावशान्मृत्तिकया पालिं बध्ध्वा नौवाहको नावमिवासौ प्रतिग्रहकं नौका ममेयमिति संकल्प्य तत्र प्रवाहयन् रमते स्म। तदा स्थविरास्तदीयात्यंतानुचितां तां चेष्टां दृष्ट्वा तमुपहसंत इव भगवत्समीपमागत्य भगवंतमेवं पप्रच्छुः–'स्वामिन्! भवदंतेवासी अतिमुक्तको नाम कुमारश्रमणः कतिभिर्भवग्रहणैः सेत्स्यति?।' भगवता भणितं–'भो आर्याः! मदंतेवासी अतिमुक्तकसाधुरनेनैव भवग्रहणेन सेत्स्यति, तस्माद्भो आर्याः! यूयमतिमुक्तक-

कुमारश्रमणं मा हीलयत, मा निंदत, मा गर्हध्वं, मावमन्यध्वं, किं तु भो देवानुप्रियाः ! यूयमेनमखेदेन संगृह्णीत अखेदेनोपगृह्णीत, तथा भक्तपानविनयैरस्य वैयावृत्त्यं कुरुत, यदुतायं मुनिर्भवांतकर एव चरमशरीर एवेति।' ततस्ते स्थविरा भगवता वीरस्वामिना एवमुक्ताः संतः प्रभुं वंदित्वा नत्वा भगवद्वाक्यं विनयेनांगीकृत्यातिमुक्तककुमारश्रमणमखेदेन संगृह्णंति स्म यावद्वैयावृत्त्यं कुर्वंति स्म। ततोऽतिमुक्तकमुनिरपि तत्पापस्थानमालोच्य विविधतपश्चर्यादिना संयमं सम्यगाराध्य प्रांते अंतकृत्केवलीभूय सिद्धिं जगाम। अयं संबंधोऽन्तकृद्दशाभगवत्यंगाद्यनुसारेणोक्तः। इति बालदीक्षायामतिमुक्तकमुनिवृत्तांतः १ ॥

तथा षष्टेः सप्ततेर्वा वर्षेभ्यः परतो वृद्धोऽभिधीयते, तस्यापि समाधानादि कर्त्तुमशक्यमतो दीक्षाऽनर्हत्वं । यदुक्तं-उच्चासणं समीहइ, विणयं न करेइ गव्वमुव्वहइ । वुड्ढो न दिक्खियव्वो, जइ जाओ वासुदेवेण ॥ १ ॥ इत्यादि । इदं च वर्षशतायुष्कं प्रति द्रष्टव्यं । अन्यथा तु यस्मिन् काले यदुत्कृष्टमायुस्तद्दशधा विभज्याष्टमनवमदशमभागेषु वर्त्तमानस्य वृद्धत्वमवसेयं २ । तथा स्त्रीपुंसोभयाभिलाषी पुरुषाकृतिः पुरुषो नपुंसकः ३ । तथा यः स्त्रीभिर्निमंत्रितोऽसंवृतां वा स्त्रियं दृष्ट्वा संजातकामाभिलाषः सन् वेदोदयं सोढुं न शक्नोति स पुरुषः क्लीबः ४ । एतौ च द्वावपि उत्कटवेदतयाऽकस्माद्दुड्डाहादिकारित्वाद्दीक्षाऽनर्हावेव । तथा जडस्त्रिविधो-भाषया शरीरेण क्रियया च । तत्र पुनर्भाषाजडस्त्रिधा-जलमूको मन्मनमूक एलमूकश्च । तत्र यो जलमग्न इव बुडबुडायमानो जल्पति स जलमूकः, यस्य तु जल्पतः खच्यमानमिव वचः स्खलति स मन्मनमूकः, यश्चैलक इव मूकतयाऽव्यक्तं शब्दमात्रमेव करोति स एलमूकः । तथा योऽतिस्थूलतया पथि १ भिक्षाटने २ वंदनादिषु ३ चाशक्तो भवति स शरीरजडः, तथा क्रियां प्रतिक्रमणप्रत्युपेक्षणादिकां पुनः पुनरुपदिश्यमानामपि जडतया यो

ग्रहीतुं न शक्नोति स क्रियाजडः। तत्र भाषाजडो ज्ञानग्रहणेऽसमर्थत्वात्, शरीरजडस्तु मार्गगमनादिष्वशक्तत्वात्, क्रियाजडश्च क्रियाया अग्राहकत्वान्न दीक्षार्हः ५। तथा कुष्ठभगंदरातिसारादिरोगैर्ग्रस्तो व्याधितः सोऽप्यनर्हो, यतस्तच्चिकित्सने षट्कायविराधना स्वाध्यायादिहानिश्च स्यात् ६। तथा खात्रखननमार्गपातनादिचौर्यक्रियानिरतः स्तेनः, सोऽपि गच्छस्य वधबंधनादिबह्वनर्थहेतुतया दीक्षाऽनर्ह एव ७। तथा श्रीगृहांतःपुरनृपशरीरादिद्रोहकारको राजापकारी सोऽप्युक्तहेतोरेवायोग्यः ८। तथा यक्षादिभिर्महामोहोद्भवेन वा विकलत्वं नीत उन्मत्तः, सोऽपि बहुदोषहेतुत्वादनर्ह एव ९। तथा न विद्यते दर्शनं नेत्रं सम्यक्त्वं वा यस्य सोऽदर्शनोऽन्धः, स्त्यानर्द्धिनिद्रोदयवांश्च, अयं हि दीक्षितः सन् यान् दृग्विकलतया प्रतिपदं षट्कायविराधक आत्मोपघातकोऽपि च स्यात्। स्त्यानर्द्धिमांस्तु प्रद्विष्टः सन् गृहिणां साधूनां च मारणादि कुर्यात्, अतोऽनर्हः १०। तथा गृहदास्याः संजातो, द्रव्यादिना वा क्रीतः, ऋणावर्धं वा धृतो दास उच्यते, सोऽप्यनर्हो, यतस्तस्य दीक्षायां तत्स्वामिकृताः प्रव्रज्यात्याजनादयो दोषाः संभवंति ११। तथा दुष्टो द्विधा-कषायदुष्टो विषयदुष्टश्च, तत्र गुरुगृहीतसर्षपमार्जिकाभिनिविष्टसाध्वादिवत् उत्कटकषायः कषायदुष्टः, अतीव परनार्यादिषु गृद्धो विषयदुष्टः, सोऽपि दीक्षाऽयोग्योऽतिसंक्लिष्टाध्यवसायत्वात्, १२। तथा स्नेहाज्ञानादिवशाच्चज्ञानशून्यहृदयो मूढः, स च कृत्याकृत्यादिविवेकविकलत्वाद्विवेकधामार्हतीदीक्षापात्रमनर्हः १३। तथा ऋणार्त्तः प्रतीतस्तस्य दीक्षादानेन दोषा अपि प्रतीता एव १४। तथा जातिकर्मशरीरादिभिर्दूषितो जुंगितस्तत्र मातंगकोलिकछिंपकसूचिकादयोऽस्पृश्या जातिजुंगिताः, स्पृश्या अपि स्त्रीमयूरकुक्कुटशुकादिपोषकाः जातिजुंगिताः। वंशवरत्रारोहणनखप्रक्षालनशौकरिकत्ववागुरिकत्वादिनिंदितकर्मकारिणः कर्मजुंगिताः। करचरण-

कर्णादिवर्जिताः पंगुकुब्जवामनकाणकप्रभृतयश्च शरीरजुंगितास्तेऽपि न दीक्षार्हाः, लोकेऽवर्णवादसंभवात् दोषांतरोद्भवनाच्च १५ । तथार्थग्रहणपूर्वकं विद्यानिमित्तं वा एतावंति दिनानि त्वदीयोऽहमित्येवं येन स्वस्य पराधीनता कृता भवेत्सोऽवबद्ध उच्यते, तस्य च कलहादिदोषहेतुत्वाद्दीक्षाऽनर्हता १६ । तथा रूपकादिमात्रया भृत्या धनिनामादेशकरणाय प्रवृत्तो भृतकः, सोऽपि दीक्षाऽयोग्यः, यतस्तस्मिन् दीक्ष्यमाणे यस्यासौ भाक्तार्यं कृतवान् स गृहस्थो महतीमप्रीतिमादधाति १७ । तथा शैक्षस्य दीक्षितुमिष्टस्य निःस्फेटिका अपहरणं शैक्षनिःस्फेटिका, उपलक्षणान्मातापित्रादिभिरननुज्ञातस्य यद्दीक्षणं तदपि शैक्षनिःस्फेटिकोच्यते, इयमप्ययोग्या अदत्तादानादिदोषप्रसंगात् १८ । इत्येतेष्वष्टादशपुरुषेषु दीक्षाऽनर्हा, कारणे तु एष्वपि केषांचिद्दीक्षाऽनुज्ञातैव, वज्रस्वाम्यादिवदिति ॥ ९१ ॥

अथ स्त्रीषु विंशतिर्दीक्षानर्हा यथा—

जे अट्ठारस भेआ, पुरिसस्स तहित्थिआइ ते चेव ।
गुव्विणी सबालवच्छा, दुन्नि इमे हुंति अन्नेवि ॥ ९२ ॥

व्याख्या—येऽष्टादश भेदाः पुरुषेषु दीक्षाऽनर्हा उक्तास्तथा तेनैव प्रकारेण ते एवाष्टादश भेदाः स्त्रिया अपि विज्ञेयाः, गुर्विणी सबालवत्सा चेति इमौ द्वावन्यावपि भेदौ भवतः । तत्र गुर्विणी सगर्भा, सबालवत्सा च स्तन्यपायिना बालेन सह वर्तमाना । तदेवमेते सर्वेऽपि विंशतिः स्त्रीभेदा व्रतायोग्याः, दोषा अप्यत्र पूर्ववद्वाच्याः ॥ ९२ ॥

ग्रहीतुं न शक्नोति स क्रियाजडः। तत्र भाषाजडो ज्ञानग्रहणेऽसमर्थत्वात्, शरीरजडस्तु मार्गगमनादिष्वशक्तत्वात्, क्रियाजडश्च क्रियाया अग्राहकत्वान्न दीक्षार्हः ५। तथा कुष्ठभगंदरातिसारादिरोगैर्ग्रस्तो व्याधितः सोऽप्यनर्हो, यतस्तच्चिकित्सने षट्कायविराधना स्वाध्यायादिहानिश्च स्यात् ६। तथा क्षात्रखननमार्गपातनादिचौर्यक्रियानिरतः स्तेनः, सोऽपि गच्छस्य वधबंधनादिबह्वनर्थहेतुतया दीक्षाऽनर्ह एव ७। तथा श्रीगृहांतःपुरनृपशरीरादिद्रोहकारको राजापकारी सोऽप्युक्तहेतोरेवायोग्यः ८। तथा यक्षादिभिर्महामोहोदयेन वा विकलत्वं नीत उन्मत्तः, सोऽपि बहुदोषहेतुत्वादनर्ह एव ९। तथा न विद्यते दर्शनं नेत्रं सम्यक्त्वं वा यस्य सोऽदर्शनोऽधः, स्त्यानर्द्धिनिद्रोदयवांश्च, अयं हि दीक्षितः सन् यान् दृग्विकलतया प्रतिपदं षट्कायविराधक आत्मोपघातकोऽपि च स्यात्। स्त्यानर्द्धिमांस्तु प्रद्विष्टः सन् गृहिणां साधूनां च मारणादि कुर्यात्, अतोऽनर्हत्वं १०। तथा गृहदास्याः संजातो, द्रव्यादिना वा क्रीतः, ऋणाद्यर्थं वा धृतो दास उच्यते, सोऽप्यनर्हो, यतस्तस्य दीक्षादाने तत्स्वामिकृताः प्रव्रज्यात्याजनादयो दोषाः संभवंति ११। तथा दुष्टो द्विधा-कषायदुष्टो विषयदुष्टश्च, तत्र गुरुगृहीतसर्षपभर्जिकाभिनिविष्टसाध्वादिवत् उत्कृष्टकषायः कषायदुष्टः, अतीव परनार्यादिषु गृद्धो विषयदुष्टः, सोऽपि दीक्षाऽयोग्योऽतिसंक्लिष्टाध्यवसायत्वात्, १२। तथा स्नेहाज्ञानादिवशाच्चज्ञानशून्यहृदयो मूढः, स च कृत्याकृत्यादिविवेकविकलत्वाद्विवेकमूलायामार्हतीदीक्षायामनर्हः १३। तथा ऋणार्त्तः प्रतीतस्तस्य दीक्षादानेन दोषा अपि प्रतीता एव १४। तथा जातिकर्मशरीरादिभिर्दूषितो जुंगितस्तत्र मातंगकोलिकछिंपकसूचिकादयोऽस्पृश्या जातिजुंगिताः, स्पृश्या अपि स्त्रीमयूरकुक्कुटशुकादिपोषकाः जातिजुंगिताः। चंक्रमवस्त्रारोहणनखप्रक्षालनशौकरिकत्ववागुरिकत्वादिनिंदितकर्मकारिणः कर्मजुंगिताः। करचरण-

कर्णादिवर्जिताः पंगुकुब्जवामनकाणकप्रभृतयश्च शरीरजुंगितास्तेऽपि न दीक्षार्हाः, लोकेऽवर्णवादसंभवात् दोषांतरोद्भवनाच्च १५ । तथार्थग्रहणपूर्वकं विद्यानिमित्तं वा एतावंति दिनानि त्वदीयोऽहमित्येवं येन स्वस्य पराधीनता कृता भवेत्सोऽवबद्ध उच्यते, तस्य च कलहादिदोषहेतुत्वाद्दीक्षाऽनर्हता १६ । तथा रूपकादिमात्रया भृत्या धनिनामादेशकरणाय प्रवृत्तो भृतकः, सोऽपि दीक्षाऽयोग्यः, यतस्तस्मिन् दीक्ष्यमाणे यस्यासौ भ्राकार्यं कृतवान् स गृहस्थो महतीमप्रीतिमादधाति १७ । तथा शैक्षस्य दीक्षितुमिष्टस्य निःस्फेटिका अपहरणं शैक्षनिःस्फेटिका, उपलक्षणान्मातापित्रादिभिरननुज्ञातस्य यद्दीक्षणं तदपि शैक्षनिःस्फेटिकोच्यते, इयमप्ययोग्या अदत्तादानादिदोषप्रसंगात् १८ । इत्येतेष्वष्टादशपुरुषेषु दीक्षाऽनर्हा, कारणे तु एष्वपि केषांचिद्दीक्षाऽनुज्ञातैव, वज्रस्वाम्यादिवदिति ॥ ९१ ॥

अथ स्त्रीषु विंशतिर्दीक्षानर्हा यथा—

जे अट्ठारस भेआ, पुरिसस्स तहित्थिआइ ते चेव ।
गुव्विणी सबालवच्छा, दुन्नि इमे हुंति अन्नेवि ॥ ९२ ॥

व्याख्या—येऽष्टादश भेदाः पुरुषेषु दीक्षाऽनर्हा उक्तास्तथा तेनैव प्रकारेण त एवाष्टादश भेदाः स्त्रिया अपि विज्ञेयाः, गुर्विणी सबालवत्सा चेति इमौ द्वावन्यावपि भेदौ भवतः । तत्र गुर्विणी सगर्भा, सबालवत्सा च स्तन्यपायिना बालेन सह वर्तमाना । तदेवमेते सर्वेऽपि विंशतिः स्त्रीभेदा व्रतायोग्याः, दोषा अप्यत्र पूर्ववद्वाच्याः ॥ ९२ ॥

तथा नपुंसकस्य तु षोडश भेदा आगमे उक्ताः संति, तेषु दश सर्वथा दीक्षाऽनर्हा अतिसंक्लिष्टत्वात्। ते चामी—

पंडए वाइए कीवे, कुंभी ईसालुएइ अ। सउणी तक्कमसेवी य, पक्खियापक्खिएइ अ ॥१३॥
सोगंधिए अ आसत्ते, दस एए नपुंसगा। संकिलिट्ठ त्ति साहूणं पव्वाइउमकप्पिया ॥१४॥

व्याख्या—पंडको १ वातिकः २ क्लीबः ३ कुंभी ४ ईर्ष्यालुः ५ शकुनिः ६ तत्कर्मसेवी ७ पाक्षिकापाक्षिकः ८ सौगंधिक ९ आसक्तश्च १० एते दश नपुंसकाः संक्लिष्टचित्ता इति हेतोः साधूनां प्रव्राजयितुमकल्प्या व्रतायोग्या इत्यर्थः। संक्लिष्टत्वं चैषां सर्वेषामपि अविशेषात् नगरमहादाहसमानकामाध्यवसाययुक्तत्वेन स्त्रीपुरुषसेवामाश्रित्य विज्ञेयं, उभयसेविनो ह्येते इति एषां स्वरूपं तु निशीथभाष्यात्प्रवचनसारोद्धाराच्चावसेयं। ननु पुरुषभेदेष्वपि इहापि च नपुंसकाः प्रोक्तास्तत्र को विशेष इति चेदुच्यते-तत्र पुरुषाकृतीनां ग्रहणं, इह तु नपुंसकाकृतीनामिति विशेषः, एवं स्त्रीष्वपि वाच्यं।

अथ षोडशभेदेषु अवशिष्टा ये षट् प्रव्रज्यार्हास्ते दर्श्यंते—

वद्धिए १ चिप्पिए २ चेव, मंतओसहिओहए ३–४ ।
इसिसत्ते ५ देवसत्ते य ६, पव्वावेज्ज नपुंसए ॥ १५ ॥

व्याख्या—आयत्यां राजांतःपुररक्षार्थं बाल्येऽपि छेदं दत्त्वा यस्य वृषणौ गाल्येते स वर्द्धितकः १, यस्य तु जात-

मात्रस्य वृषणौ अंगुष्ठांगुलीभिर्मर्दयित्वा द्राव्येते स चिप्पितः २. एवं च कृते इमौ नपुंसकवेदोदयं प्राप्नुतः । तथा कस्यचिन्मंत्रसामर्थ्यात्कस्यापि तु तथाविधौषधीप्रभावात्पुरुषवेदे स्त्रीवेदे वा समुपहते सति नपुंसकवेदोदयः स्यात् ३–४, तथा कस्यचित् ऋषिशापात्कस्यापि पुनर्देवशापात्तदुदयो जायते ५–६ । इत्येतान् षट् नपुंसकान् प्रव्राजयेदिति ८ ।

अथाष्टादशविंशतिदशभेदव्यतिरिक्तेष्वपि पुंस्त्रीनपुंसकेषु ये सर्वविरतिं प्रतिपद्यंते ते दर्श्यंते—

अमंदवैराग्यनिमग्नबुद्धय–स्तनूकृताशेषकषायवैरिणः ।
ऋजुस्वभावाः सुविनीतमानसा, भजंति भव्या मुनिधर्ममुत्तमं ॥ १६ ॥

व्याख्या—अमंदमविनश्वरं यद्वैराग्यं तत्र निमग्ना लीना बुद्धिर्येषां ते तथा अत एव तनूकृता हीनबलीकृता अशेषाः समस्ताः कषायरूपवैरिणो यैस्ते तथा, पुनर्ऋजुस्वभावाः सरलप्रकृतयोऽत एव सुविनीतं मानसं येषां ते तथा, एवंविधा भव्या उत्तमं मुनिधर्मं सर्वविरतिलक्षणं भजंति प्राप्नुवंतीत्यर्थः । इहाद्यपादे वैराग्यस्य अमंदेति विशेषणविधानाद्रोगादिजन्यक्षणमात्रस्थायिवैराग्येण न कापि सिद्धिरिति सूचितं। उक्तं च–रोगेण व सोगेण व, दुक्खेण व जं जडाण उल्लसइ। मग्गंति न वेरग्गं, तं विबुहा अप्पकालं ति ॥ १ ॥ सुहिअस्स व दुहिअस्स व, जं वेरग्गं भवे विवेएणं । पायं अपच्चवायं, तं चिय चारित्ततरुबीअं ॥ २ ॥ व्याख्या—जडानां निर्विवेकानां कासश्वासादिरोगेण पुत्रवियोगादिजन्यशोकेन वधबंधादिदुःखेन वा, धिगमुं रोगशोकादिकष्टबहुलमसारं संसारमिति विचारणात्मकं यद्वैराग्यमुल्लसति तद्वैराग्यं विबुधा न मार्गयंति न स्पृहयंति सर्वविरत्यनर्ह-

स्यात्, तदनर्हत्वं तस्य कस्मादित्याह अप्पकालं ति अल्पकालावस्थायित्वात्, अल्पकालावस्थायित्वं च रोगादिनिवृत्तौ तस्यापि निवर्तनात्, अत एव नैतत्सुधियां स्पृहणीयमिति । ननु किं तर्हि सर्वविरतियोग्यं वैराग्यमित्यत्राह—सुहिअस्सेत्यादि, सुखितस्य वा दुःखितस्य वा जंतोर्विवेकेन यद्वैराग्यं भवेत्तदेव वैराग्यं प्रायोऽत्यवायं वा अविनश्वरं, विवेकमूलतया दुःखादेर्निवृत्तावपि तस्यानिवर्तनात्तत एवैतच्चारित्रतरोरुत्पादकत्वाद्बीजमिव बीजं भवति । अत्र चारित्रस्य तरूपमा तु सम्यक्त्वमूलत्वेन प्रथमव्रतस्कंधत्वेन शेषव्रतशाखत्वेन प्रशमादिप्रशाखत्वेन सकलक्रियाकलापप्रवालत्वेन लब्धिकुसुमत्वेन मोक्षफलत्वेन चावगंतव्या । इह प्रायोग्रहणान्नंदिषेणादिषु सत्यपि व्यभिचारे न दोषः, नंदिषेणो हि वसुदेवप्राग्भवजीवः स चातिकुरूपत्वात्स्त्रीभिरनाद्रियमाणो मनस्यतिदुःखितः सन् अविवेकतोऽप्यविनश्वरं वैराग्यं प्राप्त इति गाथाद्वयार्थः ।

अथावसरायातं दशविधयतिधर्मस्वरूपं निरूप्यते—

खंती १ मद्दव २ अज्जव ३, मुत्ती ४ तव ५ संजमे य ६ बोधव्वे ।
सच्चं ७ सोयं ८ आकिं–चणं ९ च बंभं च १० जइधम्मो ॥ १७ ॥

व्याख्या—क्षांतिः क्षमा सर्वथा क्रोधपरित्याग इत्यर्थः १, मार्दवं मृदुता सर्वथा मानत्यागः २, आर्जवं सरलता सर्वथा मायापरित्यागः ३, मुक्तिर्निर्लोभता सर्वथा लोभत्याग इत्यर्थः ४, एतेन मुनिभिः प्रथमं कषायचतुष्टयविजयो विधेय इति सूचितं, कषाया हि उभयलोके प्राणिनां स्वार्थध्वंसकारिणः संति । यदुक्तं—कोहो पीइं विणासेइ, माणो विणयनासणो ।

माया मित्ताणि नासेई, लोहो सव्वविणासओ (णो) ॥ १ ॥ कोहो नाम मणूसस्स, देहाओ जायए रिऊ । जेण च्चयंति मित्ताइं, धम्मो य परिभस्सई ॥ २ ॥ नासियगुरुवएसं, विज्जाअहलत्तकारणमसेसं । कुग्गइगयआलाणं, को सेवइ सुव्वओ माणं ॥ ३ ॥ कुडिलगई कूरमई, सयाचरणवज्जिओ मलिणो । मायाइ नरो भुअगु व, दिट्ठमित्तो वि भयजणओ ॥ ४ ॥ किच्चाकिच्चविवेयं, हणइ सया जो विडंवणाहेऊ । तं किर लोहपिसायं, को धीमं सेवए लोए ॥ ५ ॥ इत्यादि—

अन्यच्च सर्वेष्वपि मोक्षाङ्गेषु कषायत्यागस्यैव मुख्यं मोक्षाङ्गत्वं विद्यते, तं विनेतरक्रियाभिः कदापि मुक्त्यप्राप्तेः । उक्तं च—कडकिरियाहि देहं, दमंति किं ते जडा निरत्थराहं । मूलं सव्वदुहाणं, जेहि कसाया न निग्गहिया ॥ १ ॥ सव्वेसु वि तवेसुं, कसायनिग्गहसमं तवो नत्थि । जं तेण नागदत्तो, सिद्धो बहुसो वि भुंजंतो ॥ २ ॥ नागदत्तस्तु अपरनामा कूरगडूकसाधुः, स हि प्रतिदिवसं त्रिकृत्वो भोजनं कुर्वन्नपि केवलं कषायनिग्रहबलात्सद्यः केवलश्रियं संप्राप्तः, एतत्कथानकं तु प्रसिद्धमेवेति नात्र दर्शितं । अथापवादमार्गमाश्रित्यात्रैव विशेषो दर्श्यते—

यः शासनोड्डाहनिवारणादि—सद्धर्मकार्याय समुद्यतः सन् ।
तनोति मायां निरवद्यचेताः, प्रोक्तः स चाराधक एव सुज्ञैः ॥ ९८ ॥

व्याख्या—यो मुनिर्जिनशासनसंबंध्युड्डाहनिवारणादिसम्यग्धर्मकार्ये कर्त्तुं समुद्यतः सन् तथा निरवद्यमतिसंक्लिष्टाध्यवसायवर्जितत्वान्निर्दोषं चेतो यस्य स तथाभूतः सन् माया समाचरति स मुनिः सुज्ञैः शोभनज्ञानवद्भिर्जिनमताराधकैर्महा-

मुनिभिराराधक एव प्रोक्तो न तु जिनाज्ञाविराधकः, शासनापभ्राजनानिवारणात् स्वयं समाचरितमायाकषायलेशस्यालोचनादिभिर्विशुद्धीकरणाच्चेति भावः। अत एव च सिद्धांतेऽपि नवमगुणस्थानं यावत्संज्वलनमायोदयः प्रोक्तोऽस्तीति। अत्रार्थे दृष्टांतो यथा—

एकस्मिन्नवसरे कोऽपि महामिथ्यात्वी राजा राज्यं पालयति स्म। तस्य राज्ञी च परमजिनधर्मानुरागिण्यासीत्। ततश्च परस्परमत्यंतानुरक्तयोरपि तयोर्धर्मचिंतायां सर्वदा विवादः प्रवर्त्तते स्म। तदा राज्ञा चिंतितं–'यदि केनापि प्रकारेणास्या धर्मगुरूणामनाचारं प्रकटीकृत्य दर्शयामि तदैषा तूष्णीभूय तिष्ठति, नान्यथेति' विचिंत्यैकदा लब्धोपायेन तेन पुरपार्श्ववर्तिचंडिकाचैत्यस्य पूजकं समाहूयैकांते प्रोक्तं–'यदा कोऽपि जैनमुनिश्चंडिकाचैत्ये रात्रौ निवासं कुर्यात्तदा त्वया कांचिद्गणिकामपि तन्मध्ये प्रक्षिप्य सद्यो द्वारे कपाटौ पिधायैषा प्रवृत्तिर्मह्यं निवेद्या।' ततः सोऽपि नृपाज्ञां प्रमाणीकृत्य स्वस्थानं गत्वा कियद्भिर्दिनैस्तथैव तत्कार्यं विधाय राज्ञो ज्ञापयति स्म। राज्ञोक्तं–'प्रातर्यदाहं तत्रागच्छेयं तदा त्वया कपाटावुद्घाटनीयाविति।' ततः स नृपवचोऽङ्गीकृत्य स्वस्थानं जगाम। तस्मिन्नवसरे साधुना चिंतितं–'केनापि मिथ्यात्विना द्वेषबुद्ध्याऽयं मे उपसर्गो विहितो दृश्यते। अथाहं त्वेनमुपसर्गं सम्यक् सहिष्ये, परं प्रातःकाले इहागमिष्यतां जनानां मध्ये मत्रिमित्तिका जिनमतापभ्राजना भविष्यति, अतस्तन्निवारणायात्र कमप्युपायं कुर्वे।' इति विचिंत्य सद्यः संप्राप्तबुद्धिना तेन मुनिना चैत्यस्य मध्यभागस्थितेन दीपेन स्वस्य वस्त्राद्युपकरणसमूहं सर्वं प्रज्वाल्य तद्भस्मना समंतात्स्वगात्रमनुलिप्य रजोहरणमध्यगतां यष्टिं च हस्ते गृहीत्वा वेश्याश्रितकोणाद्दूरस्थे चैत्यकोणे

गत्वा निश्चिंतीभूय स्थितं। वेश्या तु तस्य तादृग्भयानकं स्वरूपं वीक्ष्य मनस्यतिविस्म्यती मौनं कृत्वा एकांतप्रदेशे तस्थौ। ततः प्रातःसमये नृपेण राज्ञीं प्रति साधोरनाचारं दर्शयितुमिच्छताऽत्याग्रहेण तां स्वसार्थे गृहीत्वा बहुभिर्नगरमुख्यजनैः सह तत्र गत्वा पूजकाय प्रोक्तं-'भोः! शीघ्रं कपाटावुद्घाटय, यथा मातुर्दर्शनं कुर्मः।' तेन च नृपादेशाद्यावत्कपाटावुद्घाटितौ तावत्स मुनिः करे यष्टिं गृहीत्वा नग्नस्वरूपः सन् सत्वरं मुखात् अलखेतिशब्दमुच्चरन् ततो निःसृत्य नृपादिसर्वजनमध्ये भूत्वाऽन्यत्र जगाम। तत्पृष्ठतो वेश्यापि निःसृता। तदा नृपस्तु तत्स्वगुरोरेव दुःस्वरूपं विलोक्यातीव लज्जितः सन् अधोमुखीभूय स्थितः। तदा राज्ञ्या भणितं-'स्वामिन्! कात्र चिंता? मिथ्यात्वोदयेन प्राणिनां का का विडंबना नोत्पद्यते?' इति। ततो नृपेण सद्यः समुत्थाय स्वस्थानमागत्य पूजकाय क्रोधात्तत्स्वरूपे पृष्टे सति स प्रोचे-'स्वामिन्! मया तु भवदुक्त्यनुसारेणैव कार्यं कृतमासीत्, अधुना पुनर्यदिदं विपरीतं जातं तदहं न वेद्मि।' ततो राज्ञा तां वेश्यां समाहूय तत्स्वरूपं पृष्टं, तदा वेश्यया सर्वोऽपि वृत्तांतो निगदितो, मुनिमनोधैर्यं च वर्णितं। ततो राजा तत्प्रवृत्तिश्रवणाद्राज्ञीवचनाच्च प्रतिबुद्धः सन् सम्यक्त्वी श्रावको बभूव। स मुनिस्तु पुनर्मुनिवेषं समादाय तत्कपायस्थानमालोच्य शुद्धसंयममाराध्य प्रांते सद्गतिभाग्बभूव। इति शासनोड्डाहनिवारणनिमित्तमायाविधायिमुनिवृत्तांतः॥

अथ क्रमायातस्य तपसः किंचित्स्वरूपं दर्श्यते-तपो द्विधा-बाह्यमाभ्यंतरं च। तत्पुनरेकैकं षोढा, तत्र बाह्यं यथा—

अणसणमूणोयरिया-वित्तीसंखेवणं रसच्चाओ।
कायकिलेसो संली-णया य बज्झो तवो होइ॥ ९९॥

व्याख्या-तत्रानशनमाहारत्यागः, तद् द्विधा-इत्वरं यावत्कथिकं च। तत्रेत्वरं वीरतीर्थे नमस्कारसहितादिषण्मासांतं, प्रथमजिनतीर्थे च वर्षांतं, शेषजिनतीर्थेषु तु अष्टमासांतं, यावत्कथिकं तु पादपोपगमनं १ इंगितमरण २ भक्तपरिज्ञा ३ भेदात्त्रिविधं। तत्र भक्तपरिज्ञायां त्रिविधं चतुर्विधं वाहारं प्रत्याचष्टे, शरीरपरिकर्म च स्वतः परतश्च कारयति १, इंगितमरणे तु नियमाच्चतुर्विधाहारत्यागः परतः परिकर्मविवर्जनं च भवति, स्वयं पुनरिंगितदेशमध्ये उद्वर्तनादिपरिकर्म करोत्यपि २, पादपोपगमने तु पादपवत्स्वकीयमंगमुपांगं वा समविषमदेशेषु यद्यथा पतितं तत्तथैव धारयन् निश्चलः सन् तिष्ठतीति ३। तथा ऊनोदरिका-बत्तीसं किर कवला, आहारो कुच्छिपूरओ भणिओ। पुरिसस्स महिलयाए, अट्ठावीसं भवे कवला ॥ १ ॥ इत्येवंरूपस्य निजाहारमानस्य संक्षेपरूपा बोध्या २। तथा वृत्तेर्भिक्षाचर्यायाः संक्षेपो द्रव्यक्षेत्राद्यभिग्रहविशेषैः संकोचनं वृत्तिसंक्षेपः ३। तथा रसा दुग्धादयस्तत्परिहारो रसत्यागः ४। तथा कायस्यागमबंधेन लोचादिना वा कष्टकरणं कायक्लेशः ५। तथा संलीनता गुप्तता सा चेंद्रिय १ कषाय २ योग ३ विषया, स्त्रीपशुपंडकादिवर्जितस्थानेऽवस्थानरूपा ६ च। एतत्तपः क्रियमाणं लोकैरपि ज्ञायते कथंचित्कुतीर्थिकैरपि क्रियते इति बाह्यमुच्यते। अथाभ्यंतरं यथा—

पायच्छित्तं विणओ, वेयावच्चं तहेव स ज्झाओ।
झाणं उस्सग्गो वि य, अब्भिंतरओ तवो होइ ॥ १०० ॥

व्याख्या—तत्र प्रायश्चित्तं दशधा, यदाहुः-आलोयण १ पडिकमणे २, मीस ३ विवेगे ४ तहा विउस्सग्गो ५। तव

६ च्छेय ७ मूल ८ अणवट्ठया ९ य पारंचियं १० चेव ॥ १ ॥ तत्रालोचना गुरोः पुरतः स्वदुष्कृतस्य वचसा प्रकटनं १, तथा प्रतिक्रमणं दोषात्प्रतिनिवर्त्तनमपुनःकरणतया मिथ्यादुष्कृतप्रदानमित्यर्थः, न तु गुरुसमक्षमालोचनं सहसाऽनुपयोगतः श्लेष्मादिप्रक्षेपस्येव २, तथा यद्दुष्कृतमनयोरेकतरेण न शुध्यति तच्छुद्ध्यर्थमालोचनाप्रतिक्रमणयोरुभयोर्विधानं मिश्रं ३, तथा यदकृत्यं आधाकर्माद्याहारग्रहणप्रभृतिकं गृहीताहारादेस्त्यागे एव कृते शुध्यति नान्यथा तच्छुद्ध्यर्थं यस्तस्याहारादेः परित्यागः स विवेकः ४, तथा व्युत्सर्गो दुःस्वप्नजनितदुष्कृतादिशुद्ध्यर्थं कायचेष्टानिरोधः ५, तथा तपः प्रागुक्तोपायैरशुद्ध्यतो दुष्कृतस्य शुद्ध्यर्थं यथायोग्यं निर्विकृतादिषण्मासांततपश्चरणं ६, तथा छेदः शेषचारित्रपर्यायरक्षानिमित्तं संदूषितपूर्वपर्यायच्छेदनं ७, तथा कस्मिंश्चिन्महादोषे समुत्पन्ने सति निरवशेषपर्यायोच्छेदं विधाय भूयो महाव्रतारोपणं मूलं ८, तथा क्रोधादेरुदयात्प्रतिसेवितस्य दुष्कृतस्य शुद्ध्यर्थं यथोक्तं तपो यावन्न कृतं तावद्व्रतेषु लिंगे वा न स्थाप्यते इत्यनवस्थाप्यस्तस्य भावोऽनवस्थाप्यता ९, तथा मुनिघातराजवधादिमहाऽकृत्यसेवनात् लिंगक्षेत्रकालतपसां पारमंचति गच्छतीति पारांचितं, एतच्चाव्यक्तलिंगधारिणां जिनकल्पिकप्रतिरूपाणां क्षेत्राद्बहिः स्थितानां सुविपुलं तपः कुर्वतामाचार्याणामेव जघन्यतः षण्मासानुत्कर्षतो द्वादश वर्षाणि यावद्भवति, ततश्चातिचारपारगमनानंतरं ते प्रव्राज्यंते, नान्यथेति, १० । एतेषु दशसु अंत्यं प्रायश्चित्तद्वयं प्रथमसंहननी चतुर्दशपूर्वी च यावद्भवति तावदेव स्यात्, ततः परं तु दुःप्रसभसूरिं यावदष्टविधमेव प्रायश्चित्तं बोध्यमिति १ । तथा विनयो ज्ञानादिभेदात्सप्तधा, तत्र ज्ञानदर्शनचारित्रविनयो ज्ञानादेर्भक्त्यादिरूपः ३, मनोवाक्कायविनयस्तु आचार्यादिषु सर्वकालमकुशलानां मनोवाक्कायानां निरोधः, कुशलानां चोदीरणं ६, औपचारिकविनयश्च गुर्वादीनामनुकूल-

प्रवृत्त्यादिरूपः ७। अयं सप्तविधोऽपि विनयो मुनिभिः सर्वदा समाचरणीयः २। तथा वैयावृत्त्यमाचार्यादीनामन्नपानादिसंपादनविधौ व्यापृतत्वं ३। तथा सुष्ठु आ मर्यादयाऽकालवेलादिपरिहारेण पौरुष्यपेक्षया वाऽध्यायोऽध्ययनं स्वाध्यायः, स च पंचधा, वाचनापृच्छनापरावर्त्तनाऽनुप्रेक्षाधर्मकथाभेदात्, तत्रानधीतस्य सूत्रस्य शास्त्रोक्तविधिना गुरुमुखाद्ग्रहणं वाचना १, ततः संदेहे सति पृच्छना २, पृच्छया निश्चितस्य सूत्रस्य अविस्मरणार्थं गुणनं परावर्त्तना ३, सूत्रवदर्थस्यापि चिंतनमनुप्रेक्षा ४, अभ्यस्तसूत्रार्थस्य परं प्रत्युपदेशदानं धर्मकथा ५। इह सूत्रं च द्विविधं-अंगप्रविष्टमंगबाह्यं च तत्र-पायदुगं २ जंघो ४ रू ६, गायदुगद्धं तु ८ दो य बाहू अ १०। गीवा ११ सिरं १२ च पुरिसो, बारस अंगो सुअविसिट्ठो ॥ १ ॥ एवंविधेषु प्रवचनपुरुषस्यांगेषु प्रविष्टं व्यवस्थितं अंगप्रविष्टं द्वादशविधं । तथाहि-प्रवचनपुरुषस्य पादयुगं स्याचारसूत्रकृते अंगे, जंघाद्विकं स्थानसमवायौ, ऊरुद्विकं भगवतीज्ञाताधर्मकथांगे, गात्रद्विकं पृष्ठोदररूपं उपासकांतकृद्दशांगे बाहुद्विकं अनुत्तरोपपातिकदशा प्रश्नव्याकरणं च ग्रीवा विपाकश्रुतं, शिरश्च दृष्टिवादः इति । अंगबाह्यं तु आवश्यकोपांगप्रकीर्णकादिभेदादनेकविधं बोध्यं ।

अथ दीक्षाग्रहणानंतरं यावद्भिर्वर्षैर्यस्य वाचना ग्राह्या तत्स्वरूपं व्यवहारसूत्रोक्तगाथाभिर्दर्श्यते—

कालक्कमेण पत्तं, संवच्छरमाइणाओ जं जंमि । तं तंमि चेव धीरो, वाएज्जा सो य कालोयं ॥ १०१ ॥ तिवरिसपरियागस्स उ, आयारपकप्पनाममज्झयणं । चउवरिसस्स य सम्मं,

सूयगडं नाम अंगं ति ॥ १०२ ॥ अत्र आचारप्रकल्पो निशीथाध्ययनं ।

दसकप्पव्ववहारो, संवच्छरपणगदिक्खियस्सेव । ठाणं समवाओ तिय, अंगे ते अट्ठवासस्स ॥ १०३ ॥ दशाकल्पव्यवहारास्त्रयोऽपीत्यर्थः ।

दसवासस्स वियाहो, इक्कारसवासियस्स य इमेओ । खुड्डियविमाणमाई, अज्झयणा पंच नायव्वा ॥ १०४ ॥ अत्र वियाहोत्ति व्याख्याप्रज्ञप्तिर्भगवतीत्यर्थः ।

बारसवासस्स तहा, अरुणुववायाइ पंच अज्झयणा । तेरसवासस्स तहा, उट्ठाणसुयाइया चउरो ॥ १०५ ॥ चउदसवासस्स तहा, आसीविसभावणं जिणा बिंति । पन्नरसवासिगस्स य, दिट्ठीविसभावणं तह य ॥ १०६ ॥ सोलसवासाईसु य, एगोत्तरवुड्ढिएसु जहसंखं । चारणभावण महसुवि(मि)—णभावणा तेयगानिसग्गा ॥ १०७ ॥ एगुणवीसगस्स य, दिट्ठीवाओ दुवालसममंगं । संपुण्णवीसवरिसो, मणुवाई सव्वसुत्तस्स ॥ १०८ ॥ स्पष्टार्थाः । नवरं अनुपाती योग्य इत्यर्थः । किं च—

तदहं तुभ्यं ददामि, यदि त्वं ममैतां विद्यां दद्यात्तदा तेनापि तद्वचने प्रतिपन्ने सति अभयकुमारो न्यूनाक्षरं तस्मै दत्त्वा तां विद्यां च तस्माद्गृहीत्वा स्वस्थानमगात्। विद्याधरोऽपि संप्राप्तपूर्णविद्यः सन् आकाशे उत्पतितः क्रमेण स्वस्थानं च प्राप्तः। इति विद्याधरवृत्तांतः। अमुं दृष्टांतलेशं निशम्य मुनिभिः दोषत्यागे यत्नो विधेयः। अन्यच्च स्वयं स्वाध्यायं कुर्वता परं प्रति कारयता च मुनिना प्रथमं षोडश वचनानि अवश्यं ज्ञेयानि, तानि चानुयोगद्वारादिसूत्रोक्तान्यमूनि—

लिंगतियं ३ वयणतियं ६, कालतियं ९ तह परोक्ख १० पच्चक्खं ११ ।

उवणयवणयचउक्कं १५, अज्झत्थं १६ चेव सोलसमं ॥ ११० ॥

व्याख्या—इयं स्त्री अयं पुमान् इदं कुलमित्यादीनि त्रीणि स्त्रीपुंनपुंसकलिंगप्रधानानि वचनानि। तथा देवः देवौ देवाः इत्येवं रूपाणि त्रीणि एकवचनद्विवचनबहुवचनप्रधानानि वचनानि। अकरोत् करोति करिष्यतीत्यादीनि त्रीणि अतीतवर्त्तमानानागतकालनिर्देशप्रधानानि वचनानि। तथा स इति परोक्षनिर्देशः परोक्षवचनं। अयमिति प्रत्यक्षनिर्देशः प्रत्यक्षवचनं तथा उपनयापनयवचनं चतुर्धा, तत्र उपनयवचनं प्रशंसावचनं यथा रूपवतीयं स्त्री, अपनयवचनं निंदावचनं यथा कुरूपेयं स्त्री, उपनयापनयवचनं यत्प्रशस्य निंदति, यथा रूपवतीयं स्त्री परं दुःशीला, अपनयोपनयवचनं यन्निंदित्वा प्रशंसति, यथेयं कुरूपा परं सुशीलेति। तथान्यच्चेतसि निधाय विप्रतारकबुद्ध्याऽन्यद्वक्तुमिच्छन्नपि सहसा यच्चेतसि तदेव वक्ति तदध्यात्मवचनं षोडशमिति। ये किल एतानि षोडशवचनान्यजानंत एव सूत्रवाचनादौ प्रवर्त्तंते ते मूढा जिनवचनोल्लंघनाज्जिनाज्ञया

स्वाध्यायं कुर्वद्भिः संयममार्गाविराधकैर्मुनिभिः ।
व्याविद्धत्वप्रमुखा, अतिचाराः सर्वथा वर्ज्याः ॥ १०९ ॥

सुगमा । अस्य भावार्थस्त्वयं–व्याविद्धत्वं विपर्यस्तता १, व्यत्याम्रेडितत्वमन्योन्यालापकमीलनेन द्विस्त्रिरुक्तिः २, हीनाक्षरत्वं ३, अत्यक्षरत्वं ४, पदहीनत्वं ५, विनयहीनत्वं ६, उदात्तादिघोषहीनत्वं ७, योगहीनत्वं अकृतयोगोपचारता ८, सुष्ठुदानं अल्प श्रुतार्हस्य पात्रस्य गुरुणा अधिकप्रदानमित्यर्थः ९, दुष्टुप्रतीप्सनं कलुषहृदा ग्रहणं १०, अकाले स्वाध्यायस्य करणं ११, कालेचाकरणं १२, अस्वाध्याये सति स्वाध्यायकं १३, स्वाध्यायके सति न स्वाध्यायकं १४। एतत्स्वरूपं विशेषत आवश्यकादेर्ज्ञेयं । एतानतीचारान् वर्जयित्वा स्वाध्यायं कुर्वतां मुनीनां महालाभः संपद्यते, अन्यथा विद्याधरस्येव विद्यावैफल्याद्यो महादोषाः संभवेयुरिति । तत्र हीनाक्षरत्वदोषे विद्याधरदृष्टांतस्त्वयं—

एकदा राजगृहनगरस्य पार्श्वस्थोद्याने श्रीवीरस्वामी समवसृतः, तदा स्वाम्यागमनवार्ताश्रवणात् हृष्टः सन् श्रेणिको राजा अभयकुमारादिसंयुतस्तत्रागत्य स्वामिनं त्रिःप्रदक्षिणीकृत्य नत्वा प्रवरतरसुरासुरविद्याधरनरनिकरविराजितायां सभायां स्वोचितस्थाने उपविष्टः । ततो धर्मं श्रुत्वा पर्षदि प्रतिगच्छंत्यां सत्यां एकः कश्चिद्विद्याधरो गगने गंतुमुत्पतन् पुनः पुनः पृथिव्यां पपात । तदा श्रेणिकस्तस्य तत्स्वरूपं वीक्ष्य विस्मितः सन् स्वामिनं प्रति तदुत्पातनिपातकारणं पप्रच्छ । तदा स्वामिना भणितं–अस्य गगनगामिन्या विद्याया एकमक्षरं प्रभ्रष्टमस्ति, तेनासौ उच्चैर्गंतुं न क्षमः ।' ततो नृपपार्श्वस्थेनाभयकुमारेण तज्जिनवचः श्रुत्वा सद्यस्तत्र गत्वा विद्याधरं प्रत्युक्तं–' भोस्तव विद्याया एकमक्षरं प्रभ्रष्टमस्ति

तदहं तुभ्यं ददामि, यदि त्वं मह्यमेतां विद्यां दद्यास्तदा तेनापि तद्वचने प्रतिपन्ने सति अभयकुमारो न्यूनाक्षरं तस्मै दत्त्वा तां विद्यां च तस्माद्गृहीत्वा स्वस्थानमगात् । विद्याधरोऽपि संप्राप्तपूर्णविद्यः सन् आकाशे उत्पतितः क्रमेण स्वस्थानं च प्राप्तः । इति विद्याधरवृत्तांतः । अमुं दृष्टांतलेशं निशम्य मुनिभिः दोषत्यागे यत्नो विधेयः । अन्यच्च स्वयं स्वाध्यायं कुर्वता परं प्रति कारयता च मुनिना प्रथमं षोडश वचनानि अवश्यं ज्ञेयानि, तानि चानुयोगद्वारादिप्रोक्तान्यमूनि—

लिंगतियं ३ वयणतियं ६, कालतियं ९ तह परोक्ख १० पच्चक्खं ११ ।

उवणयवणयचउक्कं १५, अज्झत्थं १६ चेव सोलसमं ॥ ११० ॥

व्याख्या—इयं स्त्री अयं पुमान् इदं कुलमित्यादीनि त्रीणि स्त्रीपुंनपुंसकलिंगप्रधानानि वचनानि । तथा देवः देवौ देवाः इत्येवं रूपाणि त्रीणि एकवचनद्विवचनबहुवचनप्रधानानि वचनानि । अकरोत् करोति करिष्यतीत्यादीनि त्रीणि अतीतवर्तमानानागतकालनिर्देशप्रधानानि वचनानि । तथा स इति परोक्षनिर्देशः परोक्षवचनं । अयमिति प्रत्यक्षनिर्देशः प्रत्यक्षवचनं तथा उपनयापनयवचनं चतुर्धा, तत्र उपनयवचनं प्रशंसावचनं यथा रूपवतीयं स्त्री, अपनयवचनं निंदावचनं यथा कुरूपेयं स्त्री, उपनयापनयवचनं यत्प्रशस्य निंदति, यथा रूपवतीयं स्त्री परं दुःशीला, अपनयोपनयवचनं यन्निंदित्वा प्रशंसति, यथेयं कुरूपा परं सुशीलेति । तथान्यचेतसि निधाय विप्रतारकबुद्ध्याऽन्यद्वक्तुमिच्छन्नपि सहसा यच्चेतसि तदेव वक्ति तदध्यात्मवचनं षोडशमिति । ये किल एतानि षोडशवचनान्यजानंत एव सूत्रवाचनादौ प्रवर्तंते ते मूढा जिनवचनोल्लंघनाज्जिनाज्ञाया

विराधका एव, न त्वाराधकाः, अतः सुसाधुभिरेतत्परिज्ञानपूर्वकमेव प्रागुक्तविधिना सूत्रार्थस्वाध्यायो विधेयः ४। तथा ध्यानं अंतर्मुहूर्तमात्रकालमेकाग्रचित्ताध्यवसायं, तच्चतुर्धा–आर्त्त १ रौद्र २ धर्म ३ शुक्ल ४ भेदात्। तत्र ऋते दुःखे पीडिते वा प्राणिनि भवमार्त्तं तच्चेष्टवियोगा १ निष्टसंयोग २ रोगचिंता ३ ऽग्रशोचविषयं ४। तत्रेष्टानां शब्दरूपरसस्पर्शगंधलक्षणानां विषयाणां वियोगः कदापि मे मा भूदित्यादिचिंतनमिष्टवियोगविषयं १, अनिष्टानां शब्दादिविषयाणां संयोगस्याप्रार्थनमनिष्टसंयोगविषयं २, रोगोत्पत्तौ सत्यां बहुचिंताकरणं रोगचिंताविषयं ३, देवत्वचक्रवर्त्तित्वादिऋद्धिप्रार्थनप्रभृतिकमनागतकालविषयिककार्यशोचनं अग्रशोचविषयं ४। एतद्ध्यानं हि शोकाक्रंदनस्वदेहताडनादिलक्षणलक्ष्यं तिर्यग्गतिगमनकारणं च विज्ञेयं, अस्य संभवस्तु षष्ठगुणस्थानं यावद्बोध्यः। तथा रोदयति दुर्बलान् सत्त्वानिति रुद्रः प्राणिवधादिपरिणत आत्मा, तस्येदं कर्म रौद्रं, तच्चतुर्धा–हिंसानुबंधि १ मृषानुबंधि २ चौर्यानुबंधि ३ परिग्रहरक्षणानुबंधि च ४। तत्राद्यं प्राणिषु वधबंधनदहनांककरणमारणादिचिंतनं १, द्वितीयं पैशुन्यासभ्यासत्यघातादिवचनचिंतनं २, तृतीयं च तीव्रकोपलोभाकुलं प्राण्युपघाततत्परं परलोकभयनिरपेक्षं परद्रव्यापहरणचिंतनं ३, चतुर्थं तु सर्वजनाभिशंकनपरंपरोपघातपरायणं विषयसुखसाधकं द्रव्यसंरक्षणचिंतनं ४, इदं हि प्राणवधादिलक्षणलक्ष्यं नरकगतिगमनकारणं चावसेयं, अस्य संभवस्तु पंचमगुणस्थानं यावद् ज्ञेयः, केचित्त्वस्य चतुर्थं प्रकारं षष्ठं यावदपि मन्यंते, इति। तथा धर्मः क्षमादिदशविधस्तस्मादनपेतं धर्म्यं धर्मयुक्तमित्यर्थः, तच्चाज्ञाविचया १ पायविचय २ विपाकविचय ३ संस्थानविचय ४ भेदाच्चतुर्विधं। तत्राद्यं श्रीमतां सर्वज्ञपुरुषाणामाज्ञाया अनुचिंतनं १, द्वितीयं रागद्वेषकषायेंद्रियवशवर्त्तिनो जंतूनां सांसारिकापायविचिंतनं २, तृतीयं ज्ञानावरणादिषु शुभाशुभकर्मविपाक-

संसरणं ३, चतुर्थं च भूवलयद्वीपसमुद्रप्रभृतिवस्तूनां संस्थानादिधर्मालोचनात्मकं ४। इदं ध्यानं हि जिनोक्ततत्त्वश्रद्धानादिचिह्नगम्यं देवगत्यादिफलसाधकं च ज्ञातव्यं। एतत्संभवस्तु चतुर्थात्पंचमाद्वा गुणस्थानादारभ्य सप्तमाष्टमे यावदवगंतव्यः। तत्र चतुर्थे आद्यौ द्वौ भेदौ पंचमे तु त्रय इति विशेषः। तथा शोधयति अष्टप्रकारं कर्ममलमिति शुक्लं, तच्च पृथक्त्ववितर्कसप्रवीचारं १ एकत्ववितर्काप्रवीचारं २ सूक्ष्मक्रियाऽप्रतिपाति ३ समुच्छिन्नक्रियाऽनिवृत्ति ४ भेदाच्चतुर्विधं। तत्र च यस्मिन् भावश्रुतानुसारेण अंतरंगध्वनिरूपो वितर्कोऽर्थादर्थांतरे, शब्दात् शब्दांतरे योगाद्योगांतरे च संक्रमते, पुनर्निजशुद्धात्मद्रव्याद् द्रव्यांतरं याति, गुणाद्गुणांतरं याति, पर्यायाद्वा पर्यायांतरं याति तत्प्रथमं, उक्तं च—श्रुतचिंता वितर्कः स्याद्वीचारः संक्रमो मतः। पृथक्त्वं स्यादनेकत्वं, भवत्येतत्त्रयात्मकं ॥ १ ॥ स्वशुद्धात्मानुभूत्यात्म-भावश्रुतावलंबनात्। अंतर्जल्पो वितर्कः स्यात्, यस्मिंस्तत्सवितर्कजम् ॥ २ ॥ अर्थादर्थांतरे शब्दात्, शब्दांतरे च संक्रमः। योगाद्योगांतरे यत्र, सवीचारं तदुच्यते ॥ ३ ॥ द्रव्याद्द्रव्यांतरं याति, गुणाद्याति गुणांतरम्। पर्यायादन्यपर्यायं, स पृथक्त्वं भवत्यतः ॥ ४ ॥ एतच्चाष्टमगुणस्थानादारभ्य एकादशं यावद्भवति १। यत्पुनर्निश्चलस्यैकद्रव्यस्यैकपर्यायस्य वा एकगुणस्य वा शब्दात् शब्दांतरमित्यादिसंक्रमणरहितं भावश्रुतावलंबनेन चिंतनं तद् द्वितीयं, इदं च द्वादश एव गुणस्थाने भवति, त्रयोदशे तु ध्यानांतरिका भवेत् २। ततो यत्र केवली भगवान् अचिंत्यात्मशक्त्या बादरकाययोगे स्वभावतः स्थितिं कृत्वा बादरवचनमनोयोगयुगलं सूक्ष्मीकरोति, ततः सूक्ष्मवचनमनसोः स्थितिं कृत्वा बादरकाययोगं सूक्ष्मत्वं प्रापयति, ततः सूक्ष्मकाययोगे पुनः क्षणमात्रं स्थितिं कृत्वा सद्यः सूक्ष्मवाक्चित्तयोः सर्वथा निग्रहं कुरुते, ततः सूक्ष्मकाययोगे क्षणं स्थितिं कृत्वा सूक्ष्मक्रियं चिद्रूपं निजात्मानं स्वयमेवानु-

भवति, तयोरप्यशुभपरिणामप्रतिपातं च न प्राप्नोति तच्तृतीयं, एतच्च त्रयोदशगुणस्थानस्यांते भवेत् ३। ततो यत्र सूक्ष्मक्रियाया अपि समुच्छेदो भवति, अक्रियत्वयोग्यपरमविशुद्धपरिणामानिवृत्तिश्च न स्यात् तच्चतुर्थं, इदं तु चतुर्दशे गुणस्थाने भवति, ततो जीवः सिद्धिं याति ४। एतद्ध्यानं हि अबाधाऽसंमोहादिलिंगगम्यं मोक्षादिफलसाधकं च विज्ञेयं। एषु च धर्मशुक्लध्यानद्वयमेव निर्जरार्थत्वादाभ्यंतरतपोरूपं बोध्यं, आर्त्तरौद्रे तु बंधहेतुत्वान्न तथेति सुदृष्टिभिस्तयोः सर्वथा परिहार एव कार्योऽन्यथा नंदमणिकारकंडरीकादिवन्महादुःखावाप्तिः स्यात्। यदि पुनश्चेतोऽतिचंचलत्वात्कुध्यानमुपैति तथापि धीरधीभिः प्रसन्नचंद्रादिवत्तन्निवारणे एवात्मवीर्योल्लासो विधेयः, सद्ध्यानयोस्तु अव्यवच्छेदेनाभ्यासः कार्यः ५।

तथा उत्सर्गस्त्याज्यवस्तुपरित्यागः, स द्विधा–बाह्य–आभ्यंतरश्च। तत्राद्यो गणशरीरोपध्याहारत्यागः, द्वितीयस्तु क्रोधादिकषायत्यागः। ननु उत्सर्गः प्रायश्चित्तेपूक्त एव, किं पुनरत्र भणनेनेति चेत्सत्यं, स हि प्रागतिचारविशुद्ध्यर्थमुक्तः, इह तु सामान्यतो निर्जरार्थ इत्यपौनरुक्त्यं ६। इदं षड्विधं तपो लोकैरनभिलक्ष्यत्वात् शास्त्रांतरीयैश्च सम्यगनासेव्यमानत्वात् मोक्षप्राप्त्यंतरंगत्वादाभ्यंतरकर्मणां तापकत्वाच्चाभ्यंतरमित्युच्यते। इत्युक्तं तपःस्वरूपं॥

अथ क्रमप्राप्तस्य संयमस्य स्वरूपं किंचिद्वर्ण्यते–सं सामस्त्येन यमनं सावद्ययोगेभ्यो निवर्त्तनं संयमः, स च सप्तदशविधस्तथाहि—

पंचाश्रवाद्विरमणं, पंचेंद्रियनिग्रहः कषायजयः। दंडत्रयविरतिश्चे–ति संयमः सप्तदशभेदः ॥१११॥

व्याख्या—आश्रवपंचकं प्राणातिपातादिलक्षणं तस्माद्विरमणं पंचमहाव्रतधारणमित्यर्थः। तेषां व्रतानां स्वरूपं चेदं-साधुस्त्रसान् स्थावरांश्च सर्वानपि जीवान् मनसा वचसा कायेन च स्वयं न हंति न चान्यैर्घातयति नापि घ्नंतमन्यमनुजानाति १। तथा त्रिविधत्रिविधभंगकेनैव रागद्वेषक्रोधमानमायालोभहास्यभयकलहादिभिः प्राणांतेऽपि मृषावादं न वक्ति। मृषावादश्चतुर्धा सद्भावनिषेधो १ ऽसद्भावोद्भावन २ मर्थांतराभिधानं ३ गर्हावचनं च ४। तत्राद्यं यथा नास्त्यात्मेत्यादि, द्वितीयं यथा श्यामाकतंडुलमात्र आत्मा ललाटस्थो वेत्यादि, तृतीयं तु गवादेरश्वादिशब्देन कथनं, चतुर्थं च काणस्य काणशब्देनैव चाभिधानमित्यादि २। तथा साधुरुपयुक्तः सन् त्रिविधत्रिविधभंगकेनैव जीव १ तीर्थंकर २ स्वामि ३ गुरुभि ४ रदत्तं स्वल्पमपि वस्तु न गृह्णाति। तत्र जीवादत्तं सचि(चि)त्तमुच्यते, स्वविनाशशंकिना जीवेन स्वाश्रितशरीरस्यानर्पणात्, तद्गृह्णतो जीवाऽदत्तं, यद्वा बलात्प्रव्राज्यमानः शिष्योऽपि जीवादत्तमित्यभिधीयते १। तथा अचित्तमपि यद्वस्तु तीर्थंकरैर्नानुज्ञातं सुवर्णादि तद्गृह्णतस्तीर्थंकरादत्तं २। तथा तीर्थंकरैरनुज्ञातमपि यद्वसनाशनादिवस्तु स्वामिना न दत्तं तद्गृह्णतः स्वाम्यदत्तं ३। तथा स्वामिनाऽनुज्ञातमपि यद्वस्तु केनापि कारणेन गुरुणा निषिद्धं, यथा-'भो मुने! यत्त्वमिदं मा ग्रहीरिति।' तल्लोभादिवशाद्गृह्णतो गुर्वदत्तं। यद्वा गुरोरनालोच्य भक्तादिकं भुंजानस्य गुर्वदत्तं भवतीति ४। ३। तथा साधुरष्टादशविधं मैथुनं न सेवते। तत्रौदारिकशरीरविषयं मैथुनं मनसा स्वयं न सेवते, न चान्यान् तत्सेवने प्रेरयति, नापि सेवमानमन्यमनुमन्यते, इति त्रयो भेदाः, एवं वचसापि त्रयः, कायेनापि त्रयः, सर्वेऽप्येते नव भेदाः। औदारिकेण यथामी नव भेदाः प्राप्तास्तथा वैक्रियेणापि मैथुनेन नव भेदाः प्राप्यंते, सर्वेऽप्येतेऽमी अष्टादशेति ४। तथा साधुः संयमो-

पकारकोपधिव्यतिरिक्तस्य सर्वस्यापि परिग्रहस्य त्रिविधत्रिविधभंगकेन परित्यागं करोति । संयमोपकारकोपधिश्च द्विधा-औधिक औपग्रहिकश्च । तत्र यः प्रवाहेण गृह्यते कारणे च मुज्यते स औधिको वस्त्रपात्ररजोहरणादिश्चतुर्दशादिभेदः, यश्च कारणे सति गृह्यते कारणे च मुज्यते स औपग्रहिकः संस्तारोत्तरपट्टादिरनेकविधः, एतयोरौघिकौपग्राहिकोपध्योर्विषयेऽपि मुनिर्ममत्वं न दधाति, ममत्वरहितत्वादेव च संयमयात्रार्थं द्विविधमुपधिं धारयंतोऽपि मुनयो निष्परिग्रहा एव । यदुक्तं-न सो परिग्गहो वुत्तो, नायपुत्तेण ताइणा । मुच्छा परिग्गहो वुत्तो, इइ वुत्तं महेसिणा ॥ १ ॥ इत्यादि । अथवा मुनिर्द्रव्यादिषु चतुर्षु ममत्वं न करोति, तत्र द्रव्यत उपध्यादौ श्रावकादौ वा, क्षेत्रतो नगरग्रामादौ मनोज्ञवसत्यादौ वा, कालतः शरदादौ दिवसादौ वा, भावतः शरीरपुष्ट्यादौ क्रोधादौ वेति ५ । तथा महाव्रतोपयोगित्वात्षष्ठं रात्रिभोजननिवृत्तिव्रतमपि मुनिभिरवश्यं धार्यं । रात्रिभोजनं हि चतुर्धा-दिवा गृहीतं दिवा भुक्तं १, दिवा गृहीतं रात्रौ भुक्तं २, रात्रौ गृहीतं दिवा भुक्तं ३, रात्रौ गृहीतं रात्रौ भुक्तं ४ मिति। तत्र दिवाशनादिकं गृहीत्वा रात्रौ तद्वसतौ संरक्ष्य पुनर्द्वितीयदिने भुंजानस्य प्रथमो भेदः, शेषास्त्रयोऽपि भेदाः सुगमाः । इदं चतुर्विधमपि निशि भुक्तं पंचमहाव्रतविघातकत्वात् स्वपरसमयेषु निषिद्धत्वादशक्यपरिहारकुंथ्वादिसूक्ष्मजीववधत्वाच्च व्रतिभिरवश्यं परिहर्त्तव्यमित्युक्तं पंचमहाव्रतपालनस्वरूपं ॥

अथ पंचेंद्रियनिग्रहस्वरूपं यथा-एतानि पंच महाव्रतानि पालयितुमिच्छन्मुनिः शब्दरूपगंधरसस्पर्शलक्षणेषु पंचसु विषयेषु रागद्वेषपरित्यागेन श्रोत्रनेत्रघ्राणजिह्वास्पर्शनलक्षणानां पंचानामिंद्रियाणां निग्रहं करोति । तथाहि-सुस्वरमुरजवेणुवीणावनितादीनां शुभं, काककरभघूकरासभखरट्टादीनां त्वशुभं शब्दं श्रुत्वा १, अलंकृतगजवाजिवनितादीनां शुभं, कुब्जकु-

स्थविरमृतकादीनां त्वशुभं रूपं दृष्ट्वा २, चंदनकर्पूरागरुकस्तूरिकादीनां शुभं, मलमूत्रमृतकलेवरादीनां त्वशुभं गंधमाघ्राय ३, मत्स्यंडीशर्करामोदकादीनां शुभं, रूक्षपर्युषितान्नक्षारजलादीनां त्वशुभं रसमास्वाद्य ४, अंगनातूलिकादुकूलादीनां शुभं, पाषाणकंटककर्करादीनां त्वशुभं स्पर्शमनुभूय ५, यदा इष्टमेतन्ममेति रागमनिष्टमेतन्ममेति द्वेषं च न दधाति तदा क्रमेण श्रोत्रादींद्रियनिग्रहो भवति। यदा पुनः कस्यचित्साधोर्भुक्तभोगस्य पूर्वक्रीडितस्मरणादिना, अन्यस्य च कस्यचित्कुतूहलितया इंद्रियाण्युद्धतानि भवंति तदा तेनेत्थं स्वात्मानुशासितव्यः–परिमियमाउं जुव्वण–मसंठियं वाहिवाहियं देहं। परिणइविरसा विसया, अणुरज्जसि तेसु किं जीव ॥ १ ॥ इत्यादि। यः पुनः साधुरिंद्रियाणां निग्रहं न करोति किं तु उद्धतान् घोटकानिव तानि स्वेच्छासंचारीणि करोति, स इह परत्र च महादुःखभाजनं भवेत्। अत्रान्वयव्यतिरेकाभ्यां ज्ञाताधर्मकथांगोक्तकूर्मद्वयदृष्टांतो यथा–वाराणस्या नगर्याः समीपे गंगायां मृदंगतीरद्रहे गुप्तेंद्रियागुप्तेंद्रियौ द्वौ कच्छपौ वसतः, तावेकदा स्थलचारिकीटिकाग्रासिपार्थिनौ द्रहाद्बहिर्निर्गतौ दुष्टशृगालाभ्यां च दृष्टौ। तदा तौ भीतौ स्वकीयां चतुष्पदीं ग्रीवां च करोटिमध्ये संगोप्य निश्चेष्टौ निर्जीवाविव स्थितौ। ततो जंबुकाभ्यां पुनः पुनर्लोलनोत्पातनाधःपातनापादघातादिभिः किमपि विरूपं कर्त्तुमशक्ताभ्यां किंचिद्दूरं गत्वैकांते स्थितं। तदानीमगुप्तेंद्रियः कूर्मश्चापल्यात् स्वपादान् ग्रीवां च यावद्बहिर्निचकर्ष तावत्ताभ्यां सद्यः खंडशः कृतो मरणं प्राप्तः। द्वितीयस्तुचपलस्तावद्बहुकालं तथैव स्थितो यावत्तौ शृगालौ बहु स्थित्वा श्रांतौ अन्यत्र गतौ। ततः स कूर्मः शनैः शनैर्दिगवलोकं कृत्वोत्प्लुत्य सद्यो द्रहे प्राप्तः सुखी जातः। इत्थं पंचांगगोपककूर्मवत्पंचेंद्रियगोप्ता भव्यात्मा सदा सुखी भवेत्, अन्यस्तु द्वितीयकूर्मवद्दुःखी स्यादतो मुनिभिः पंचेंद्रियजये यत्नो विधेयः। इतींद्रियजये

कूर्मद्वयोपनयः ॥ तदेवमुक्त इंद्रियनिग्रहरूपः संयमः ।

अथ कषायजयस्वरूपं यथा–पंचेंद्रियनिग्रहिता साधुः क्रोधादीनां चतुर्णां कषायाणामनुदितानामनुदीरणेन, उदयप्राप्तानां च विफलीकरणेन जयं करोति निरोधं कुर्यादित्यर्थः। कष्यंते प्राणिनोऽत्रेति कषः संसारस्तमयंते गच्छंति एभिरिति कषायास्ते च क्रोधमानमायालोभभेदाच्चत्वारस्तेषां चतुर्णामपि प्रत्येकमनंतानुबंध्यादयश्चत्वारो भेदाः, तत्रानंतं भवं भ्रमणीयत्वेनानुबध्नंतीति अनंतानुबंधिनः क्रोधादयो, येषामुदये जीवैः सम्यक्त्वं न प्राप्यते प्राप्तं वा सम्यक्त्वं वम्यते १ । तथा नास्ति सर्वथापि विरतिरूपं प्रत्याख्यानं विद्यमानेषु येषु तेऽप्रत्याख्यानाः, येषामुदये प्राप्तसम्यक्त्वानामपि जीवानां देशविरतिरूपः परिणामो न जायते, जातो वाऽवश्यं नश्यते २ । तथा प्रत्याख्यानं सर्वविरतिरूपमावृण्वंतीति प्रत्याख्यानावरणाः, येषामुदये जीवैः सर्वविरतिर्न प्राप्यते, प्राप्तापि सा विनश्यति, देशविरतेस्तु न निषेधः ३ । तथा सम् ईषज्ज्वालयंति परीषहोपसर्गोपनिपाते सति साधूनपि औदयिकभावमानयंति ये ते संज्वलनाः, येषामुदये सति यथाख्यातचारित्रं न भवति, शेषचारित्रभेदास्तु भवंति ४ । एते हि अनंतानुबंध्यादयः कषायाः क्रमेण यावज्जीववर्षचतुर्मासपक्षस्थितिका नरकतिर्यग्नरामरगतिप्रयोजका एकादशगुणस्थानस्याग्रभागं समारूढमपि साधुं प्रपात्य पुनर्मिथ्यात्वांधकूपप्रापकाः शुद्धात्मगुणघातकाः सर्वानर्थमूलभूताश्च विद्यंते । अतः सुबुद्धिभिरेते सर्वथा न विश्वसितव्याः, किंत्वेतन्निग्रहे एव यतितव्यं । उक्तं च–जाजीववरिसचउमास–पक्खगा नरयतिरियनरअमरा । सम्माणुसव्वविरई–अहक्खायचरित्तघायकरा ॥ १ ॥ जइ उवसंतकसाओ, लहइ अणंतं पुणो वि पडिवायं । न हु तो वीससिअव्वं, थोवे वि कसायसेसंमि ॥ २ ॥ तत्तमिणं सारमिणं, दुवालसंगीइ एस भावत्थो । जं भव-

भमणसहाया, इमे कसाया चइअंति ॥ ३ ॥ इति । तदेवमुक्तः कषायजयरूपसंयमः ॥

अथ दंडत्रयविरतिस्वरूपं यथा–एतत्कषायचतुष्टयनिर्जेता साधुर्मनोवचनकायदंडत्रयाद्विरमति गुप्तित्रयं दधातीत्यर्थः, इहागमोक्तविधिनाऽकुशलकर्मभ्यो निवर्त्तिताः कुशलकर्मणि च प्रवर्त्तिता मनोवचनकायलक्षणा योगास्तिस्रो गुप्तय उच्यंते। तत्र मनोगुप्तौ चिंत्यमानायां मनसो हि मर्कटवदतिचंचलत्वं विद्यते। यदुक्तं–लंघइ वरुणो गिरिणो य, लंघए लंघए जलनिहिं पि। भमइ सुरासुरठाणे, एसो मणमक्कडो कोइ ॥ १ ॥ अत एव चैतन्मुनीनामपि दुर्जेयं सर्वकर्मणां बंधे मुख्यं कारणं चास्ति, ततस्तद्दमनं कर्त्तुमिच्छता मुनिना बहुविधा असद्भावनाः परिहृत्य द्वादशसद्भावनासु विशेषत आदरः कर्त्तव्यो, येन तादृक् चंचलमपि चेतः सुखेन स्ववशमायातीति १। तथा वचनगुप्तौ चिंत्यमानायां साधुः स्वाध्यायक्षणादन्यत्र काले प्रायो मौनमेवाश्रित्य तिष्ठति, भ्रूहस्तादिसंज्ञामपि न करोति, तथाविधप्रयोजने तु सति सत्यमसत्यामृषा (पं च) वचनं भाषते, तत्र यद्वस्तुप्रतिष्ठाश्रया उच्यते तत्सत्यं यथास्ति जीवः कर्त्ता भोक्ता चेत्यादि। यत्पुनः प्रतिष्ठाशां विनोच्यते तदसत्यामृषा (पं) आमंत्रणाज्ञापनादि, यथा भो देवदत्त! इदं कार्यं कुर्वित्यादि। इह सत्यमपि यत् श्रोतुः प्रियं निरवद्यं च भवेत्तदेव वचनं ब्रूते, अप्रियस्य सावद्यस्य च सत्यस्यापि क्रोधोत्पत्तिजीवघातादिबह्वनर्थहेतुत्वेनासत्यप्रायत्वात्तत्परिहारं कुरुते, पुनः प्रयोजनं विना निरवद्यमपि वातूलवद्यथा तथा न ब्रूते। अथ सत्यमपि प्रियमेव ब्रूते इति यदुक्तं—

नृपसचिवेभ्यनरार्दी–स्तथैव जल्पयति न खलु काणादीन्।

न च संदिग्धे कार्ये, भाषामवधारिणीं ब्रूते ॥ ११२ ॥

व्याख्या—नृपो राजा, सचिवो मंत्री, इभ्यनरः श्रीमान् पुरुषस्ते आदयो येषां ते तान्, आदिशब्दात् सामंतश्रेष्ठिसार्थवाहादीन् तथैव जल्पयति आह्वयति, यथा ते नृपत्वादिभावेन संति, एतावता नृपतिं नृपतिरिति, मंत्रिणं मंत्रीति, इभ्यं इभ्य इति ब्रूयादित्यर्थः। तथा चाचारांगसूत्रं-जे यावन्ने तहप्पगारा तहप्पगाराहिं भासाहिं बूया नो कुप्पंति माणवा ते आवि तहप्पगारा तहप्पगाराहिं भासाहिं अभिकंख भासिज्ज त्ति। न च काणादिष्वपि अयं न्यायोऽनुसर्त्तव्य इत्याह-न खलु काणादीन् काणादिनाम्ना जल्पयति, आदिशब्दात्कुष्ठिखंजकुब्जचौरादिग्रहणं। यदुक्तमागमे—तहेव काणं काणं ति पंडगं पंडगं ति वा वाहिअं वावि रोगि त्ति तेणं चोरं ति नो वए त्ति। तथा संदिग्धे संदेहविषयीभूते कार्ये एवमेवैतदित्येवंरूपामवधारिणीं भाषां न ब्रूते, किं तु वर्त्तमानयोगमेव ब्रूयादित्यर्थः। यदुक्तं-आउस्स न वीसासो, कज्जस्स बहूणि अंतरायाणि। तम्हा साहूणं वट्टमाणजोगेण ववहारो ॥ १ ॥ त्ति। किं च एते कल्होडका ( बालवृषभाः ) धुर्यत्वयोग्याः संति, एतानि आम्रादिफलानि भक्षणयोग्यानि संति, एते वृक्षाः स्तंभभारपट्टकशय्यासनादियोग्या वर्त्तंते, एतानि शालिगोधूमाद्यन्नानि लवनयोग्यानि संतीत्येवंरूपाणि वचनानि साधुर्न जल्पति, साधुवचनानां प्रतीतिपात्रत्वादेते वृषभादयो दमनादिक्रियायां प्राप्तकाला इति निश्चित्य श्रोतृपुरुषाणां तत्र तत्र दमनादौ प्रवर्त्तनेन महारंभसंभवात्। तथा मातृपितृभ्रातृभगिन्यादिस्वजनान् हे मातः! हे तात! हे भ्रातरित्यादिसंबंधशब्दैर्न जल्पयति, साधूनामलौकिकाचारनिष्ठत्वेन लौकिकसंबंधभाषणेऽनधिकारात् उक्तं च-दम्मे वसहे

खज्जे, फले य थंभाइसमुचिए रुक्खे । गिम्मे अन्ने जणयाचिइ यत्ति सयणे वि न लवेइ ॥१॥ त्ति । अत्र पुनर्विशेष उच्यते–

राजेश्वराद्यैश्च कदापि धीमान्, पृष्टो मुनिः कूपतडागकार्ये ।
अस्तीति नास्तीति वदेन्न पुण्यं, भवंति यद्भूतवधांतरायाः ॥ ११३ ॥

व्याख्या—राजानो मांडलिकाः । ईश्वरा युवराजाः, आद्यशब्दाद् ग्रामाधिपादयः, एभिः कदापि कूपतडागयोः, उपलक्षणत्वात् प्रपासत्रागारादीनां च कार्ये, कूपादीन् कारयतो मम पुण्यमस्ति न वेति पृष्टो धीमान् सम्यगागमज्ञो मुनिः कारयेदं कूपादिकमस्त्यत्र महापुण्यमिति, तथा मा कार्षीस्त्वमेतन्नास्त्यत्र स्वल्पमपि पुण्यमिति, उभयथापि न वदेत् अत्रोपपत्तिमाह–यद्यस्मात्कारणादस्ति पुण्यमिति वदतो भूतवधः स्यात्, खोपसमये जलाश्रितसेवालाद्यनंतकायिकानां पूतरसंयुक्तमत्स्यमंडूकादीनां त्रसानां च प्रत्यक्षं विनाशदर्शनात्, मत्स्यादीनामप्यन्योऽन्यं जीवभक्षणाच्च । तथा नास्ति पुण्यमिति वदतश्चांतरायदोषः स्यात्, बहूनां पशुपक्षिमनुष्याणां तृषार्त्तानां जलपानव्यवच्छेदात् । तस्मान्मौनमेवावलंबेत । यद्वा नेदृशेषु लौकिककार्येषु अस्माकं भाषणाधिकार इति ब्रूयात् । यदुक्तं सूत्रकृदंगसूत्रे–जहा गिरं समारम्भे, अत्थि पुण्णंति नो वए । अहवा नत्थि पुण्णंति, एवमेयं महब्भयं ॥ १ ॥ दाणट्ठयाइ जे पाणा, हम्मंति तसथावरा । तेसिं सा रक्खणट्ठाए, तम्हा अत्थित्ति नो वए ॥ २ ॥ जेसिं तं उवकप्पंइ, अन्नपाणं तहाविहं । तेसिं लाभंतरायं ति, तम्हा नत्थि त्ति नो वए ॥ ३ ॥ जे अ दाणं पसंसंति, वहमिच्छंति पाणिणं । जे अण्णं पडिसेहंति, वित्तिच्छेयं करोंति ते ॥ ४ ॥ दुहओ वि न भासंति, अत्थि वा नत्थि

वा पुणो। आयंरहस्स हिचा णं, नव्वाणं पाउणंति ते ॥ ५ ॥ इति ।

तथा दत्तस्य पुरः कालिकाचार्यैरिव सुकृतार्थिभिः साधुभिर्विपत्तावपि सत्यमेव वचो भाषणीयं न पुनर्मृषेति । यथा तुरमिणीनगर्यां कालिकाचार्याणां भागिनेयेन दत्तनाम्ना पुरोहितेन छलात्स्वस्वामिनृपं कारागारे निक्षिप्य स्वयं राज्यभारं बिभ्रता अन्यदा मातृप्रेरणयाचार्यसमीपं गतेनोन्मत्ततया धर्मेर्ष्यया च सक्रोधं साग्रहं श्रीकालिकाचार्येभ्यो यज्ञफले पृष्टे सति श्रीगुरुर्धैर्यमवलंब्य तस्य पुरो यज्ञो हिंसारूपो हिंसायाः फलं च नरक इति सत्यमेव वचः प्रोक्तवान्, न पुनरन्यथा । ततः 'कोऽत्र प्रत्ययः ?' इति तेन पृष्टे सति सूरिणोक्तं-त्वं सप्तमे दिने श्वानैर्भक्षितः कुंभ्यां पक्ष्यसे।' 'अत्रापि कः प्रत्ययः ?' इति तेन पुनः पृष्टे सति गुरुणोक्तं-'तस्मिन्नेव दिनेऽकस्मात्तव मुखे विष्ठा पतिष्यति।' ततो क्रुद्धेन दत्तेनोक्तं-त्वं कथं मरिष्यसि ?।' गुरुणोक्तं-'अहं समाधिनैव मर्त्तास्मि, मृतोऽपि च स्वर्गं गंतास्मि।' तदा दत्तः सहुंकृतिः सन् तत उत्थाय सूरिं निजभटै रुध्ध्वा स्वगृहमागत्य समाधिना प्रच्छन्नं स्थितः। ततः स दत्तो मतिमोहेन सप्तममपि दिनमष्टमं मन्वानोऽद्याचार्यप्राणैः शांतिकं कुर्वे' इति विचिंत्य गृहान्निर्गतः, तदैको मालिकः पुर्यां प्रविशन् कार्याकुलत्वाद्राजमार्गे एव मलोत्सर्गं कृत्वा तत्पुष्पैराच्छादयामास। तावत्तत्रैव मार्गे गच्छतो दत्तस्याश्वखुरोत्क्षिप्ता सा विष्ठा मुखे पतिता तदा स विष्ठास्वादाच्चमत्कृतः सन् तत्सप्तमं दिनं विज्ञाय विषण्णः सन् पश्चान्निवृत्तः, तदैतस्य बहुविधदुराचारेण खिन्नैर्मूलमंत्रिभिर्जितशत्रुर्नृपः पंजरान्निष्कास्य राज्ये स्थापितः, दत्तस्तु छलाद् बध्ध्वा राज्ञे समर्पितः, राज्ञा च कुंभ्यां प्रक्षिप्याधोऽग्निं प्रज्वाल्य शुनो विमुच्य कदर्थितः सन् मृत्वा नरकं गतः। आचार्यास्तु राजादिभिर्बहुमानिताः इति वाग्गुप्तौ कालिकाचार्यवृत्तांतः ॥

एवं सन्मुनिभिर्वचनगुप्तिर्ध्यार्या २। तथा कायगुप्तौ चिंत्यमानायां साधुः कायोत्सर्गेण पद्मासनादिना वा शरीरव्यापारं निरुणद्धि। तथाविधे गमनशयनादिके प्रयोजने तु जाते सति शरीरं अवर्त्तयन् पदे पदे मम शरीरेण मा कोऽपि जीवो वधं प्राप्नुयादित्येवंरूपां यतनां चिंतयेत्, यतनां विना हि प्रतिपदं षड्जीवनिकायविघातः स्यात्। यदुक्तं—गमणट्ठाणनिसीयण, तुअट्टणगाहणनिसरणाईसु। कायं असंवरंतो, छण्हं पि विराहओ होइ ॥ १ ॥ त्ति। तदेवमुक्ता कायगुप्तिः ३। तदुक्तौ च उक्तास्तिस्रोऽपि गुप्तयः। तद्भणनेन च भणितः सप्तदशविधोऽपि संयमः ६। ततो दशविधयतिधर्मस्यात्रशिष्टाश्चत्वारो भेदाः सत्यादयः, तत्र सत्यं मृषावादविरतिलक्षणं ७। शौचं संयमं प्रति निरुपलेपता निरतिचारतेत्यर्थः ८। आकिंचन्यं निःपरिग्रहत्वं ९। ब्रह्मचर्यं सर्वथा कामक्रीडानिषेधः १०। इह केषांचिद्भेदानां केषुचिदंतर्भूतत्वेऽपि पृथगुपादानं स्पष्टप्रतिपत्त्यर्थमित्यादि सुधीभिः स्वयं विभाव्यमित्युक्तो दशविधो यतिधर्मः। अथैतस्मिन् सुदुर्लभे मुनिधर्मे निर्ग्रंथैः सर्वथा प्रमादपरिहारो विधेय इत्युपदर्श्यते—

भवसयसहस्सदुलहे, जाईजरामरणसागरुत्तारे।

जइधम्मंमि गुणायर, खणमवि मा काहिसि पमायं ॥ ११४ ॥

व्याख्या—हे गुणाकर! हे गुणवत्साधो! भवानां शतसहस्रेषु लक्षेषु दुर्लभे तथा जन्मजरामरणसागरोत्तारके एवंविधे यतिधर्मे क्षणमपि प्रमादं मा कार्षीर्महानर्थहेतुत्वात्तस्येति। किं च—

सेणावई मोहनिवस्स एसो, सुहाण जं विग्घकरो दुरप्पा ।
महारिऊ सव्वजियाण एसो, कयावि कज्जा न तओ पमाओ ॥ ११५ ॥

व्याख्या—यद्यस्मात्कारणादेष दुरात्मा प्रमादो मोहनृपस्य सेनापतिर्विद्यते, अत एव मोक्षसुखानां विघ्नकरोऽस्ति, विघ्नकरत्वादेव च सर्वजीवानां महारिपुर्विद्यते, ततस्तस्माद्विज्ञातपरमार्थैर्मुनिभिः कदापि एष प्रमादो न कार्यः। अपि च—

थोवोऽवि कयपमाओ, जइणो संसारवड्ढणो भणिओ ।
जह सो सुमंगलमुणी, पमायदोसेण पयवद्धो ॥ ११६ ॥

व्याख्या—स्तोकोऽपि प्रमादः कृतः सन् साधोः संसारवर्द्धनो भणितः, यथा स सुमंगलाचार्यो मुनिर्मनाक् प्रमाददोषेण पदयोर्बद्धश्चमीवनद्धपादयुग एव जन्म संप्राप्त इत्यर्थः। एतद्वृत्तान्तस्तु इत्थं–अस्मिन् भारते वर्षे पंचशतशिष्यपरिवृतः सुमंगलो नामाचार्य आसीत्। स चाप्रमत्तः सन् सर्वदा शिष्येभ्यः सूत्रार्थवाचनां ददौ। एकदा वातादिवशादाचार्यस्य कटिप्रदेशे वेदना समुत्पन्ना। ततो वाचनायोत्थातुमशक्नुवताचार्येण शिष्येभ्य उक्तं–'अहो गृहस्थगृहाद्योगपट्टमानयत।' शिष्यैरपि गुरुभक्त्यानीतो योगपट्टः, तत आचार्येण तं कटीप्रदेशे संस्थाप्य पल्हंठिका बद्धा, तदा तद्योगादतीव संप्राप्तसुखः सन् आचार्यस्तं क्षणमपि न मुंचति स्म। ततः कियद्भिर्दिनैः शिष्यैर्भणितं–'भगवन्! संप्रति भवच्छरीरे सुखं जातं, अतोऽयं

योगपट्टो गृहस्थेभ्यः प्रत्यर्पणीयः, एतत्प्रमादस्थानं च त्याज्यं, यतः स्तोकेनापि प्रमादेन बह्वी संसारवृद्धिः स्यादिति।' तदा सूरिणा भणितं–'योगपट्टधारणे कः प्रमादः? अयं तु मम शरीरस्य सुखकारकोऽस्ति।' ततस्ते विनीतशिष्या मौनमालंब्य स्थिताः। अथ कियता कालेन स सुमंगलसूरिः श्रुतोपयोगतः स्वायुःसमयं ज्ञात्वा एकं विशिष्टगुणं शिष्यं सूरिपदे स्थापयित्वा स्वयं च संलेखनां विधाय कालमनवकांक्षन् तिष्ठति स्म। ततस्तैः शिष्यैः शुभध्यानोपगतस्य गुरोर्निर्यामणां कुर्वद्भिरेवं भणितं–'हे भगवंतः! व्रतग्रहणादारभ्य यत्किमपि प्रमादस्थानमासेवितं तदालोचयत प्रतिक्रमत।' तदा सूरिणा योगपट्टधारणव्यतिरिक्तं सर्वं प्रमादस्थानमालोचितं प्रतिक्रांतं च। ततः शिष्यैरुक्तं–'स्वामिन्! योगपट्टधारणप्रमादोऽप्यालोच्यतां।' तद्वचनं श्रुत्वा सूरिः कोपानलेन प्रज्वलितो भणति स्म–'अरे दुष्टा! यूयमतिदुर्विनीता यदद्यापि योगपट्टभवं मम दूषणं गृह्णीथ।' ततस्ते शिष्या गुरुं कुपितं ज्ञात्वा विनयेन भणंति स्म–'हे स्वामिनः! अस्माकमपराधं क्षमध्वं, अस्माभिरज्ञानद्भिर्भवतामप्रीतिकारि वचनं प्रोक्तं, अतः परं नैवं वक्ष्यामः।' अथ तद्वचनेन सूरिरुपशांतकोपो जातः, परं योगपट्टविषये ध्यानं स्थितं। तेन स सूरिस्तत्प्रमादस्थानमनालोच्य कालमासे कालं कृत्वाऽनार्यदेशे कूडागारनगरे मेघरथस्य राज्ञो विजयानाम्न्या देव्याः कुक्षौ गर्भत्वेनोत्पन्नः, प्रसवसमये च कटिवेष्टितचर्मपट्टेन बद्धपाद एव पुत्रो जातः, राज्ञा तस्य जन्ममहोत्सवं कृत्वा द्वादशे दिवसे दृढरथ इति नाम दत्तं, ततः स पंचधात्रीभिः पाल्यमानो यदाष्टवार्षिको जातस्तदा कलाचार्यसमीपे द्वासप्ततिकलाभ्यासं कृतवान्, क्रमेण सकलकलाकुशलो जातः, तत्रापि संगीतशास्त्रे विशेषतो निपुणो बभूव। तदा दृढरथकुमारं संगीतशास्त्रनिपुणं श्रुत्वा बहवो गंधर्वाः स्वस्वकलादर्शनार्थं तत्रागच्छंति, परं संपूर्णसंगीतभेदानजानंतस्ते

कुमारचित्तं रंजयितुं न शक्नुवंति। ततः कुमारस्तान्निरुत्साहान् विलोक्य बहुद्रव्यदानेन संतोषयति, ते च संतुष्टाः संतः स्थाने स्थाने दृढरथस्य कीर्तिं तन्वंति, एवं सुखेन कालो गच्छति स्म। इतश्च ये पंचशतशिष्यास्तेषां मध्ये विशुद्धज्ञानदर्शन-चारित्रधरा बहुविधतपःकारिण आचार्यादयः केचित्साधवो विशुद्धाध्यवसायैरवधिज्ञानं प्राप्य तद्बलेन स्वगुरुस्वरूपं विलोकयंतोऽनार्यक्षेत्रे तादृगवस्थयाऽवस्थितं स्वगुरोर्जीवं दृष्ट्वा धिग्धिक्प्रमादाचरितं, यत्स्तोकेनापि प्रमादेनेह संसारे जीवा अस्मद्गुरुरिव बहुतरदुःखभाजो भवंतीत्यादि चिंतयंति स्म। ततस्तेषां मध्ये यः सूरिस्तस्य मनसीत्थं विचारः समुत्पन्नः–'यदि केनाप्युपायेनायमस्मद्गुरुरनार्यक्षेत्रादिहार्यक्षेत्रे आनीयते तद्वरमिति।' ततः सूरिरमुं विचारं सर्वसाधुभ्यो निवेद्य एकस्मै योग्यसाधवे स्वगणभारं समर्प्यानार्यदेशे शुद्धाहारं दुर्लभं मत्वा तथाविधदृढतरसंहननान् तपश्चरणशक्तियुक्तान् कतिपयानेव साधून् सार्धं गृहीत्वा ततो विहृत्य प्रतिग्रामं विचरन् आर्यक्षेत्रात्परत आहारगवेषणामकुर्वन् क्रमेणानार्यक्षेत्रे यानकविषये यत्र कूडागारनगरं तत्र समागत्य तत्पार्श्ववर्त्तिनि उद्याने प्रासुकभूमिकां प्रतिलेख्य इंद्राद्यवग्रहं गृहीत्वा स्थितः, तदा तन्नगरवास्तव्यजनास्तददृष्टपूर्वं साधुस्वरूपं दृष्ट्वा–'के इमे?' इति चिंतयंतः साधुसमीपमागत्य पृच्छंति स्म–'के यूयमिति।' साधुभिरुक्तं–'वयं नटाः स्मः।' लोकैर्भणितं–'यदि नटास्तर्हि नृपसमीपं व्रजत, येन भवतां यथेष्टधनप्राप्तिर्भवेत्।' साधवोऽवदन्–'वयं कस्यापि समीपे न व्रजामो, योऽस्माकं समीपे आगच्छति तस्मै स्वनृत्यकलां दर्शयामः।'

तदा पुनर्लोकाः प्रोचुः–'यदि यूयं नृपसमीपे न व्रजिष्यथ तर्हि कस्य गृहे भोजनं करिष्यथ?।' तैर्भणितं–'अस्माभिर्भोजनं न क्रियते।' ततस्ते सर्वेऽपि लोका विस्मिता जाताः, केचित् पुनः साधून्प्रतिलेखनां प्रतिक्रमणादिक्रियां च

कुर्वतो वीक्ष्य पृच्छन्ति स्म–'यूयं किमिदं कुरुथ ?।' साधुभिरुक्तं–'वयं नृत्यसंबंधिपरिश्रमं कुर्मः।' ततस्ते लोकाः स्व-स्थानं गताः, एषा प्रवृत्तिश्च पुरमध्ये विस्तारिता। राजापि कस्यचिन्मुखात्तां वार्त्तां श्रुत्वा विस्मितः सन् तेषां स्वरूपं द्रष्टुं समागतः। तत्र च तान् साधून् दृष्ट्वा एवमुवाच–'के यूयं ? कुतः स्थानात्कस्मै प्रयोजनाय च इह समागताः ?।' सूरिर्ज-गाद–'भो देवानुप्रिय! वयं नटा दूरदेशात्प्रवराः स्वकलादर्शनार्थमिहागताः स्मः।' ततो नृपः प्रोचे–'नृत्यं दर्शयत।' सूरिणा भणितं–'यः संगीतशास्त्रे निपुणो भवेत्तस्याग्रे नृत्यं कुर्मः।' नृपेणोक्तं–'मम पुत्रः सर्वं जानाति' गुरुणोक्तं–'तर्हि तं शीघ्रमत्रानयत।' ततो राज्ञा नरान् प्रेष्याहूतः कुमारः। सोऽपि शिबिकामारुह्य तत्रागत्य साधूनेवमुवाच–'यदि यूयं संगीतशास्त्रकुशलास्तर्हि तानसंगीतभेदान् वदत।' तदा सूरिणा श्रुतादिगतज्ञानतोऽपि संगीतभेदाः कुमाराग्रे प्रोक्ताः, तान् श्रुत्वा कुमारोऽतिविस्मितो मनसि चिन्तयति स्म–'एष नटः सर्वशास्त्रविशारदो महाचार्योऽस्ति, ईदृग्जनः कोऽपि न विद्यते, ततोऽमुनास्य नृत्यस्य कला निरीक्ष्यते।' इति विचिन्त्य स साधूनेवमुवाच–'भो नटाः! नृत्यं कुरुत, यतो मम मनः परीक्ष्यते।' आचार्यैर्भणितं–'वाद्यसूत्रोपकरणान्यानयत।' तदा कुमारेण मधुरध्वनिसंगीतकानि वाद्यानि [illegible]। तत आचार्यैर्नानाविधानि कुर्वद्भिः एवं मधुरस्वरेण तथा गीतं कृतं यथा तं श्रुत्वा सर्वेऽपि लोकाश्चमत्कृता [illegible] इव च संजाताः। ततो नृत्यारंभे सूरिरेवं गाथां गायति स्म। तद्यथा–जिन जिन [illegible], [illegible]। किं सुविणो अंतरेणं, पमायसि न जाणह गुरुपाया ॥ १ ॥ तद्गाथां [illegible] सर्वे [illegible] च, वीणादिकं च वादयति स्म। तदा कुमारः पुनः पुनः पठ्यमानां तद्गाथां श्रुत्वा चित्ते चिन्तयामास–

'किमेते भणंति ? कः सुमंगलः ? कथं च तेन प्रमादो विहितः ?' इत्यादि। ततो यावत्स एवमीहापोहं कर्तुं लग्नस्ताव-त्सद्यो मूर्छां प्राप्य भूमौ पतितो हाहारवश्च संजातः, तदा नृपादिभिः शीतलोपचारे कृते सति संप्राप्तचेतनः कुमारः स्वपूर्व-भवं संस्मृत्य तान् पूर्वशिष्यांश्च दृष्ट्वेत्थं विलपितुं लग्नः-'अहो दुःखमयोऽयं संसारः, अहो कर्मणां विचित्रा गतिः, यदिह संसारे दुष्कर्मोदयजन्यप्रमाददोषेणैते जीवा बहुविधं दुःखमनुभवंति, अहमपि मनाक् प्रमादाचरणेनेदृशीमवस्थां प्राप्तः।' तदा कुमारमेवं विलपंतं दृष्ट्वा राज्ञा चिंतितं-'नूनममीभिर्धूर्तैर्ममायं कुमारो ग्रथिलः कृतोऽतोऽमी हंतव्याः।' ततो राज्ञा रोषात्सेवकानां तद्बंधनादेशे दत्ते सति कुमारो जगाद-'हे तात! इमे हितकराः परकार्यकरा अतः पूजनयोग्याः संति, नो वधबंधनादियोग्याः।' ततो राजापि कुमारवचनात्साधूनां बहुसत्कारादिप्रतिपत्तिं चकार, तदनंतरं कुमारः साधूनेकांते समा-दायेत्थं प्रोवाच-'हे देवानुप्रियाः! एतदनार्यक्षेत्रं लोका अपि अनार्याः, इह सद्धर्मस्य वार्तापि न श्रूयते, ततोऽधुना मम का गतिः?।' तदा सूरिरुवाच-'यूयमस्माभिः सार्द्धमागच्छत, यतो भवतां कार्यसिद्धिः स्यात्।' कुमारेणोक्तं-यद्भूपाद-त्वादहं चलितुं न शक्नोमि अतोऽग्रे कथं मे निर्वाहः?।' सूरिणा भणितं-'एते सर्वेऽपि साधवो युष्मास्वार्यक्षेत्रं प्राप्तेषु सत्सु सम्यग् रीत्या भवद्वैयावृत्त्यं करिष्यंति।' तद्वचनं श्रुत्वा कुमारस्तत्कालं पित्रोः समीपं गत्वा विज्ञप्तिं चकार-'भो अंब! तात! यदि भवदाज्ञा भवेत्तर्हि एतस्य महाकलाचार्यस्य सार्थेऽहं कलाशिक्षणार्थं व्रजामि।' तदा मातापितरावूचतुः-'हे पुत्र! वयं त्वद्वियोगं सोढुं न शक्नुमोऽतस्त्वमेतानदान् इहैव संरक्ष्य कलाभ्यासं कुरु।' कुमार उवाच-'भवद्भिः सत्य-मुक्तं परमेते विदेशिनोऽस्मद्द्रव्याद्यग्राहकाः कथमत्रावतिष्ठंते? तस्माद्विचारांतरं मुक्त्वा मह्यमाज्ञां प्रयच्छत? यतोऽहमेतेषां

पार्श्वे परिपूर्णं कलाभ्यासं कुर्वे इति । ततो मातापितरौ तस्यात्याग्रहं मत्वाज्ञां दत्तवंतौ, आरोहणार्थं च कियत्सेवकजनसंयुक्तामेकां शिबिकां ददतुः । तदा हृष्टः सन् कुमारः शिबिकामारुह्य चलितस्तत्पृष्ठे च सर्वेऽपि साधवश्चलिताः, क्रमेण तेऽनार्यक्षेत्रमतिक्रम्यार्यक्षेत्रं संप्राप्ताः, शिबिका च पश्चाद्वालिता, ततः साधवो मार्गमध्यस्थे कस्मिंश्चिन्नगरे भिक्षार्थं गत्वा शुद्धमाहारमानीय महातपःपारणकं चक्रुः, कुमारेणोक्तं–'अथ मया किं कर्तव्यं ?' सूरिणोक्तं– 'यूयं व्रतं गृह्णीत ।' ततो गृहीतं तेन व्रतं, पूर्वभवशिष्याश्च अखेदेन तस्य वैयावृत्त्यं चक्रुः, क्रमेण स्वगणस्थाः सर्वेऽपि साधवो मिलिता आनंदिताश्च । ततः कुमारो व्रतग्रहणादारभ्य यावज्जीवं षष्ठं षष्ठं तपः कृत्वाऽप्रमादेन संयमं प्रपाल्यावधिज्ञानं च प्राप्य क्रमेणायुःक्षये समाधिना कालं कृत्वा नवमग्रैवेयके देवत्वेनोत्पन्नः । ततश्च्युत्वा महाविदेहे सेत्स्यति । अन्येऽपि ते साधवः संयमं सम्यगाराध्य क्रमेण सद्गतिभाजो जाताः । इति प्रमादोपरि सुमंगलाचार्यदृष्टांतः । अमुं प्रमादलेशोद्भूतं विपाकं निशम्य संसारभीरुभिः साधुभिः सर्वथा प्रमादपरिहारो विधेयः ॥

अथ प्रमादपरिहारेण संयमपालनोद्यता मुनयो मनोनिग्रहाद्यर्थं या द्वादश सद्भावना भावयंति तत्स्वरूपं किंचिद् दर्शयते–

पढममणिच्च १ मसरणं २, संसारो ३ एगया य ४ अन्नत्तं ५ ।
असुइत्तं ६ आसव ७ सं–वरो य ८ तह निज्जरा ९ नवमी ॥ ११७ ॥
लोगसहावो १० बोहिय–दुल्लहा ११ धम्मस्स साहगा अरिहा १२ ।

एयाओ भावणाओ, भावेयव्वा पयत्तेणं ॥ ११८ ॥

व्याख्या—एता अनित्यत्वादयो द्वादश भावनाः सुदृष्टिभिः प्रयत्नेन भावयितव्या अहर्निशमभ्यसनीया इत्यर्थः। तत्रेह संसारे मोहादिवशात्सर्ववस्तुषु विपर्यस्तधियो मूढजनाः स्वामित्वधनयौवनवपुर्लावण्यबलायुर्विषयसुखवल्लभजनसंयोगादिभावान् पर्वतोत्तीर्णमहानदीनीरपूरानिव प्रबलतरवातव्रातोद्धूतध्वजपटानिव निजेप्सितप्रदेशस्वेच्छाविहारकारिसमंताद्भृंगकुलाश्रितमदस्राविकटतटमत्तमातंगकर्णतालानिव घनपवनाहतपादपपरिपक्वपत्रप्रकरानिवातिचंचलानापि सर्वदा नित्यस्वरूपेण जानंति, परं तत्त्वदृष्ट्या सर्वेऽप्यमी भावा अनित्या न चैतेष्वेकोऽपि नित्योऽस्ति, ये किल परमानंदप्रापकाः सद्ज्ञानादय आत्मगुणास्ते नित्या इत्येवं यच्चिंतनं सा प्रथमाऽनित्यभावना। उक्तं च—सामित्तणधणजुव्वण–रइरूवबलाउइट्ठसंजोगा। अइलोला घणपवणा–हयपायवपक्कपत्त व ॥ १ ॥ इत्यादि १ ॥

अथ द्वितीयाऽशरणत्वभावना यथा—अस्मिन् लोके मातृपितृभ्रातृभगिनीभार्यापुत्रमित्रभटादिपरिकरे वीक्ष्यमाणे एव यदा मृत्युरकस्मादागत्य प्राणिनां जीवितव्यमपहरति तदैकं श्रीजिनधर्मं विनाऽन्यत् किमपि शरणं नास्ति, इत्यादि यच्चिंतनं साऽशरणत्वभावना। यदुक्तं—पिउमाउभयणिभज्जा–भडाण पञ्चक्खमिक्खमाणाणं। जीवं हरेइ मच्चू, नत्थि सरणं विणा धम्म (पुण कोइ न होइ से सरणं) ॥ १ ॥ २। अथ तृतीया संसारभावना—यथेह संसारे चतुरशीतिलक्षजीवयोनिषु पुनः पुनर्जन्ममरणान्याश्रित्य परिभ्रमणं कुर्वाणा अमी संसारिणो जीवाः कर्मोदयवैचित्र्यात्कदापि सुखिनः कदापि दुःखिनः कदापि राजानः कदापि रंकाः कदापि सुरूपाः कदापि कुरूपाः, एवं विविधावस्थामनुभवंति। एतेषामेव परस्परसंबंधचिंतायां

पुनः कर्मवशात् कुबेरदत्तादिवदेकस्मिन्नपि भवे महादुष्कर्मबंधहेतवोऽनेके संबंधाः संजायंते, किं पुनर्नानाभवेषु ? तस्माद्वस्तुगत्या एकांतदुःखमयोऽयं संसारोऽत्र हि मूढा एव रज्यंति, न पुनस्तत्त्वज्ञानिन इत्यादि यच्चिंतनं सा संसारभावना । उक्तं च–जह एगं (जाइमिगं) मुंचंतो, अवरं जाइं तहेव गिण्हंतो । भमइ चिरमविरामं, भमरो व्व जिओ भवारामे ॥ १ ॥ इत्यादि ३ । इह कुबेरदत्तवृत्तांतस्त्वेवं—

मधुरायां नगर्यां कुबेरसेना नाम्नी गणिकासीत्, सा चैकदाऽभिनवोत्पन्नगर्भयोगादतीव खेदं प्राप्ता । ततस्तज्जनन्या कुट्टिन्या तां खिन्नां दृष्ट्वा तद्व्यथापनोदाय वैद्यः समानीतः, तेन च नाडीस्पंदादिना तां नीरुजं मत्वैवमुक्तं–'अस्याः शरीरे रोगस्तु कोऽपि नास्ति, किं तूदरेऽपत्ययुगलमुत्पन्नमस्ति, तद्धेतुकोऽस्याः खेदो विद्यते ।' ततो वैद्यं विसृज्य सा कुट्टिनी पुत्रीं प्रत्युवाच–'अयं गर्भस्तव प्राणापहारकोऽस्ति अतो न रक्षणीयः, किं तु पातनयोग्य एव ।' तदा वेश्या प्रोचे–'अहं क्लेशमपि सहिष्ये परं मम गर्भाय कुशलमस्तु ।' ततस्तया वेश्यया गर्भवेदनां सहित्वा समये पुत्रपुत्रीरूपं युगलं प्रसूतं । तदा पुनः कुट्टिनी प्रोचे–'हे पुत्रि ! एतदपत्यद्वयं तव नवयौवनापहारि भविष्यति, अत इदं पुरीषवत्परित्यज, निजमाजीविकाकारणं यौवनं च रक्ष ।' वेश्या जगाद–'हे मातर्यद्येवं तर्हि दश दिनानि यावद्विलम्ब्यतां, पश्चाद्भवदुक्तमेव करिष्ये ।' ततस्तदनुज्ञाता सती सा वेश्या दश दिनानि यावत्स्तन्यदानेन तौ बालौ सम्यक् प्रपाल्यैकादशे दिने तयोः कुबेरदत्तः पुत्रः कुबेरदत्ता पुत्री इति नामनी कृत्वा तन्नामांकिते एव उभे मुद्रिके कारयित्वा तदंगुल्योः स्थापयित्वैकस्यां दारुपेटायां तौ बालौ प्रक्षिप्य संध्यायां यमुनायाः प्रवाहे तां पेटां प्रवाहयामास । ततः सा पेटा जले वहंती

क्रमेण दिवसोदये शौर्यपुरद्वारे संप्राप्ता, तत्र च स्नानार्थमागतौ द्वाविभ्यपुत्रौ तां पेटामागच्छन्तीं विलोक्य सद्यो गृहीत्वा तन्मध्ये एकं बालमन्यां बालिकां च दृष्ट्वा तयोरेकेन पुत्रार्थिना बालो गृहीतोऽन्येन पुत्र्यर्थिना तु बालिका गृहीता। एवं तदपत्यद्वयं समादाय स्वस्वपत्न्यै दत्तं, मुद्रिकालिखिताक्षरानुसारेणैव च तयोर्नामधेयं कृतं। ततस्तौ कुबेरदत्तकुबेरदत्ताख्यौ बालौ तयोर्महेभ्ययोर्गृहेऽतियत्नेन वर्द्धमानौ क्रमेण यौवनावस्थां प्राप्तौ। तदा तयोर्बालयोस्तौ महेभ्यौ अनुरूपतां मत्वा तयोरेव परस्परं पाणिग्रहणमहोत्सवं चक्रतुः। ततस्तौ वधूवरौ एकदा शारीपाशकक्रीडां कर्त्तुमुपविष्टौ तदा कुबेरदत्तहस्तात्सा नामांकितमुद्रिका कथमपि निःसृत्य कुबेरदत्ताया अग्रे निपतिता। ततस्तया तां मुद्रिकां स्वमुद्रिकया सह तुल्याकृतिमेकदेशघटितां सदृशनामांकितां च दृष्ट्वा मनसि कुबेरदत्तं स्वभ्रातृतया निश्चित्य तन्मुद्रिकाद्वयं कुबेरदत्तस्य हस्ते निक्षिप्तं। तदा कुबेरदत्तोऽपि तद्विलोकनात्तथैव तां निजभगिनीं निश्चित्यातीव विषादं प्राप्तः। ततो द्वावपि निजं विवाहकार्यमकार्यं मन्वानौ स्वसंदेहनिवारणार्थं निजां निजां मातरं प्रति शपथं दत्वाऽत्याग्रहेण स्वस्वरूपं पप्रच्छतुः, तदा मातरौ तयोरग्रे मंजूषाप्राप्तितः समारभ्य सर्वमपि वृत्तांतं कथयामासतुः। ततः कुबेरदत्तो मातापितरौ प्रत्युवाच–'युवाभ्यामावां युगलजौ ज्ञात्वापि किमिदमकार्यं कृतं ?।' तावूचतुः–'भवतोऽनुरूपां कन्यां त्वया अनुरूपं वरं चान्यमलब्ध्वा सदृशलावण्यादिगुणयुक्तयोर्भवतोरेवान्योऽन्यं विवाहः कृतः, परमद्यापि किमपि विनष्टं नास्ति, यतो युवयोरेकं करपीडनमेव जातमस्ति, न च मैथुनकर्म, तस्मात्त्वं विषादं मा कार्षीः, भवतोऽपरकन्यापाणिग्रहणं कारयिष्यावः।' कुबेरदत्तेनोक्तं–'भवद्वचनं प्रमाणं, परमधुना तु अहं व्यवसायार्थं विदेशं गंतुमिच्छामि, अतो मह्यमाज्ञां प्रयच्छत।' ततस्ताभ्यामनुज्ञातः कुबेरदत्तस्तं वृत्तांतं स्वभगिन्यै

निवेद्य बहूनि क्रयाणकानि समादाय दैवयोगात्स्वोत्पत्तिस्थानं मथुरानगरीं ययौ। तत्र स प्रत्यहं स्वोचितं व्यापारं कुर्वन् एकदा कुतोऽपि दुष्कर्मयोगादद्भूतरूपशालिनीं स्वमातरं कुबेरसेनां वेश्यां दृष्ट्वा कामपीडितः सन् तां बहुद्रव्यदानेन स्वपत्नीकृत्य सदैव तया सह वैषयिकं सुखं बुभुजे। तत्र च क्रमेण तस्यैकः पुत्रो जातः।

अथ शौर्यपुरे सा कुबेरदत्ता तु मातृमुखान्मूलतः स्वकीयां तां प्रवृत्तिं श्रुत्वा सद्यो वैराग्यं प्राप्ता सती आर्यासंयोगे दीक्षां गृहीत्वा बहूनि महातपांसि कृत्वा विशुद्धाध्यवसाययोगादल्पेनैव कालेनावधिज्ञानमुपार्जयामास। ततः सा साध्वी अवधिज्ञानबलेन स्वभ्रातुः स्वरूपं विलोकयंती मथुरायां तं स्वमात्रा संलग्नं पुत्रसहितं च दृष्ट्वा कर्मगतिं धिक्कुर्वाणा स्वबंधुमकर्तव्यमहापापपंकात्समुद्धर्तुं स्वयं मथुरां समेत्य कुबेरसेनावेश्याया एव गृहं गत्वा धर्मलाभाशीर्वाददानपूर्वकं तत्पार्श्वं निवासस्थानमयाचत। तदा कुबेरसेनापि तामार्यां नत्वैवं जगाद–'हे महासति! अहं पणांगनापि सांप्रतमेकभर्तृसंयोगान्निश्चितं कुलस्त्री अस्मि, तस्मात्त्वं सुखेन मम गृहासन्नं निरवद्यमाश्रयं गृहीत्वाऽस्मान् सदाचारे प्रवर्त्तय।' ततः कुबेरदत्तापि स्वपरिकरेण सह तद्दत्तोपाश्रये स्थिता। अथ सा वेश्या प्रत्यहं तत्रागत्य तं बालं साध्व्याः पुरतो लुठंतममुंचत्, तदा साऽवसरज्ञा साध्वी उत्तरत्र लाभं विज्ञाय तं बालमेवमुल्लापयामास–'हे बालक! त्वं मम भ्रातासि १ त्वं मम पुत्रोऽसि २ त्वं मम देवरोऽसि ३ त्वं मम भ्रातृव्योऽसि ४ त्वं मम पितृव्योऽसि ५ त्वं मम पौत्रोऽप्यसि ६। तथा यस्ते पिता स मे भ्राता १ पिता २ पितामहः ३ भर्ता ४ पुत्रः ५ श्वसुरोऽपि च ६ भवति। तथा या तव माता सा मम माता १ पितामही २ भ्रातृजाया ३ वधूः ४ श्वश्रूः ५ सपत्न्यपि ६ भवतीति। ततः कुबेरदत्त एकस्मिन् दिने तद्वचनं

श्रुत्वा विस्मितः सन् तां प्रति जगाद–'हे आर्ये। पुनः पुनरिदमयुक्तं किं भाषसे?।' साध्वी प्रोचे–'नाहमयुक्तं ब्रवीमि, यतोऽयं बालो ममैकमातृकत्वाद्भ्राता १ मद्भर्तुः पुत्रत्वाच्च पुत्रः २ मम भर्तुर्लघुभ्रातृत्वाच्च मम देवरः ३ मद्भ्रातुः पुत्रत्वान्मम भ्रातृव्यः ४ मम मातृपतेर्भ्रातृत्वान्मम पितृव्यः ५ मत्सपत्नीपुत्रस्य पुत्रत्वान्मम पौत्रः ६। एवं बालेन सह स्वस्याः षट् संबंधान् दर्शयित्वा पुनरूचे–'योऽस्य बालस्य पिता स मम एकमातृकत्वाद्भ्राता १ मातृभर्तृत्वाच्च मम पिता २ मत्पितृव्यस्य पितृत्वान्मम पितामहः ३ प्राग्मम परिणेतृत्वान्मम भर्ता ४ मत्सपत्नीपुत्रत्वान्मम पुत्रः ५ मम देवरस्य पितृत्वान्मे श्वसुरः ६। इत्थं बालस्य पित्रा कुबेरदत्तेन सह स्वस्याः षट् संबंधा उक्ताः। पुनः प्रोचे–'याऽस्य बालस्य माता सा मत्प्रसवकर्तृत्वान्ममापि माता १ मत्पितृव्यस्य मातृत्वाच्च मे पितामही २ मद्भ्रातुः पत्नीत्वान्मम भ्रातृजाया ३ मत्सपत्नीपुत्रस्य दारत्वान्मे वधूः ४ मद्भर्तुर्मातृत्वान्मे श्वश्रूः ५ मद्भर्तुर्द्वितीयकलत्रत्वान्मम सपत्नी ६। एते हि बालस्य मात्रा कुबेरसेनावेश्यया सहात्मनः षट् संबंधा दर्शिताः। एवमेतानष्टादश संबंधान्निवेद्य साध्वी तत्प्रत्ययार्थं स्वयं व्रतग्रहणावसरे रक्षितां स्वनामांकितमुद्रिकां कुबेरदत्ताय अर्पयामास। ततः कुबेरदत्तोऽपि तां दृष्ट्वा सर्वसंबंधविरुद्धतां विज्ञाय सद्यो वैराग्यं प्राप्यात्मनिंदां कुर्वन् स्वशुद्ध्यर्थं प्रव्रज्यां जग्राह महातपांसि च कृतवान्। तथा कुबेरसेनावेश्यापि तत्प्रवृत्तिश्रवणात्प्रतिबुद्धा सती श्राद्धधर्ममंगीचकार। ततः कुबेरदत्ता साध्वी इत्थं तदुद्धारं कृत्वा स्वप्रवर्तिन्याः पार्श्वे ययौ। क्रमेणैते सर्वेऽपि जीवाः स्वधर्मं सम्यगाराध्य सद्गतिभाजो जाताः। इत्यष्टादशसंबंधोपरि कुबेरदत्तदृष्टांतः॥

एते हि एकभवमाश्रित्य संबंधा दर्शिताः, अनेकभवापेक्षया तु प्रायः सांव्यावहारिकजीवानामेकैकोऽपि संबंधोऽनंत

संजातः, तथा चोक्तं श्रीमद्भगवत्यंगे द्वादशशतस्य सप्तमोद्देशके–'अयं णं भंते जीवे सव्वजीवाणं माइत्ताए' इत्यादि। इदमत्र तात्पर्यं–हे भगवन्! अयं जीवः सर्वजीवानां मातृतया पितृतया भ्रातृतया भगिनीतया भार्यातया पुत्रतया पुत्रीतया स्नुषातया-ऽरितया वैरिकतया घातकतया वधकतया प्रत्यनीकतया प्रत्यामित्रतया राजतया युवराजतया यावत्सार्थवाहतया दासतया प्रेष्यतया भृतकतया भागग्राहकतया शिक्षणीयतया द्वेष्यतया चोत्पन्नपूर्वः? इति गौतमेन पृष्टे भगवानाह–'हंतेति गौतम! अनेकशोऽथवाऽनंतकृत्व उत्पन्नपूर्वः, एवं सर्वे जीवा अपि अस्य जीवस्य मात्रादितयाऽनेकशोऽनंतकृत्वो वा उत्पन्नपूर्वा इति ३।

अथ चतुर्थी एकत्वभावना–यथास्मिन् संसारे एकाक्येव जीव उत्पद्यते, एक एव च विपद्यते, एकाक्येव पुनः पुनः कर्माण्युपार्जयति, तत्फलान्यपि एक एव भुंक्ते, तत्त्ववृत्त्या एकं श्रीजिनधर्मं विना न कोऽप्यन्यः स्वजनादिः साहाय्यं विदधाति, इत्यादिचिंतनमेकत्वभावना, यदुक्तं–इक्को कम्माइ समं, जणेइ भुंजइ फलं पि तस्सिक्को। इक्कस्स जम्ममरणे, परभवगमणं च इक्कस्स ॥ १ ॥ इत्यादि ४। अथ पंचमी अन्यत्वभावना–यथा इह यद्यात्मप्रदेशैः गाढसंबद्धं चिरकालं मनोऽभीष्टाशनपानादिभिर्बहुधा लालितं स्वशरीरमपि वस्तुगत्यान्यत्वात्प्रांते प्राणिनं नानुगच्छति, तर्हि बहिर्भूतानां धनकनकादिपरवस्तूनां का वार्त्ता? तस्मादेकमात्मधर्मं विना सर्वेऽप्यमी भावा अन्ये संतीत्यादिचिंतनमन्यत्वभावना। यदुक्तं–चिरललियं पि देहं, जइ जीअमंतंमि नाणुवट्टइ। ता तंपि होइ अन्नं, धणकणयाईण का वत्ता ॥ १ ॥ अपि च–अन्नं इमं कुडंबं, अन्ना लच्छी सरीरमवि अन्नं। मोत्तुं जिणिंदधम्मं, न भवंतरगामिओ अन्नो ॥ २ ॥ त्ति ५। अथ षष्ठी अशुचित्वभावना यथा–इह रसरुधिरमांसमेदोऽस्थिशुक्रमज्जामयः श्लेष्ममलमूत्रादिपूरितश्चर्मांतरितस्नायुजालपरिवेष्टितः सर्वदा कृमिकुजागंडूपदादिसमाकुलः तच्च-

दृष्ट्या चिंत्यमानो महाऽशुचिरयमौदारिकः शरीरः[1] सम्भूतमेकमात्मधर्मं विना कथं शुध्यति ? न कथमपीति तात्पर्यं। ये तु केचिदस्यैवंविधदेहस्य केवलं जलादिना शुद्धिमिच्छंति ते तत्त्वविमुखा अज्ञानिन एवेत्यादि यच्चिंतनं साऽशुचित्वभावना। उक्तं च—मेयवसरेअसलमुत्त-पूरियं चम्मवेढिअं तत्तो। जंगममिव वच्चहरं, कह एअं सुज्झए देहं॥ १॥ इति। अथ पुनः स्तंडुलवैकालिकप्रकीर्णकानुसारेणैतच्छरीरस्यैव गर्भाधानादारम्य किंचिद्विशेपतोऽशुचित्वस्वरूपं दर्श्यते—

तत्र तावत्स्त्रिया नाभेरधस्तात्पुष्पनालिकाकारं यन्नाडीद्वयं तस्याधस्तादधोमुखीभूतपद्मकोशाकारा जीवोत्पत्तिस्थानस्वरूपा योनिर्भवति, तस्या अधःप्रदेशे आम्रमंजरीतुल्या मांसस्य मंजरी भवति, सा च ऋतुसमये स्फुटिता सती शोणितलवान्मुंचति, ततः सा यदा कोशाकारां योनिं प्रविशति, पुरुषसंयोगात् शुक्रमिश्रिता च भवति, तदा योनिर्जीवोपपातयोग्या ज्ञानिभिर्भणिता, तत्र च द्वादश मुहूर्त्तानि यावत्ते शुक्रशोणिते अविध्वस्तयोनिके भवतः, तत ऊर्ध्वं तु विध्वस्तयोनिकत्वमुपागच्छतः, तस्माद् द्वादशमुहूर्त्तमध्ये एव तत्र जीव उत्पद्यते, न तु परतः, स चोत्पत्तिप्रथमसमये तदैवैकत्र मिलितं पितुः संबंधि शुक्रं मातुः संबंधि शोणितं चाहारत्वेन गृह्णाति। अयमेव च ओजआहार उच्यते, स चापर्याप्तावस्थां यावद् भवति, ततो यदा पर्याप्तो भवति तदा तस्य गर्भस्थस्य लोमाहार एव स्यात्। अथ तज्जीवाश्रितं शुक्रशोणितद्रव्यं सप्त दिनानि यावत्कललं भवति, ततः सप्त दिनानि यावद्बुद्बुदस्वरूपं भवति, ततः प्रथमे मासे कर्षोपलप्रमाणा मांसपेशी जायते, द्वितीयमासे सैव घना मांसपिंडिका भवति, तृतीयमासे मातुर्दोहदं जनयति, चतुर्थे मासे मातुरंगानि पीडयति, पंचमे मासे स जीवस्तस्या

[1] शरीरशब्दस्य पुंस्त्वं चिन्त्यम्।

मांसपिंडिकातोऽकुरवत्पाणिद्वयं पादद्वयं मस्तकं चेत्येतान् पंचावयवान् निष्पादयति, षष्ठे मासे पित्तं शोणितं च निष्पादयति, सप्तमे मासे सप्त शतानि रसाः पंच शतानि मांसपेशीर्नव धमनीनाडीविशेषान् सार्द्धत्रिकोटिरोमकूपांश्च निष्पादयति, अष्टमे मासे ईषदूननिष्पन्नो भवति, नवमे मासे च सुनिष्पन्नसमस्तांगोपांगो भवति। किं च गर्भावस्थायां मातृजीवरसहरणी पुत्रजीवरसहरणी चेति द्वे नाड्यौ स्तः, तयोर्मध्ये आद्या मातृजीवप्रतिबद्धा सती पुत्रजीवस्पृष्टास्ति, तया पुत्रजीवो मातृभुक्तनानाविधरसविकृती-नामेकदेशेन सह ओजआहारं गृह्णाति, द्वितीया तु पुत्रजीवप्रतिबद्धा सती मातृजीवं स्पृष्टवती, तया पुनः स जीवः स्वशरीरं चिनोति, न पुनस्तदवस्थायां कावलिकाहारं गृह्णाति, नापि उच्चारप्रश्रवणादयस्तदानीं तस्य संभवंति। यत्पुनस्तदाहारद्रव्यं स गृह्णाति तत्सर्वस्य श्रोत्रादिपंचेंद्रियतयाऽस्थिमज्जाकेशरोमनखतया च परिणमयति। पुनर्गर्भस्थो जीवो जनन्यां शयनं कुर्वाणायां स्व-पिति, तस्यां जागृत्यां च जागर्त्ति, तस्यां सुखवत्यां सुखी भवति दुःखवत्यां च दुःखी भवति। एवं कर्मोदयतो जीवः परमा-न्धकारेऽमेध्यभृते गर्भप्रदेशे महादुःखमनुभवन्निवसति।

ततो नवमे मासेऽतिक्रांते वा वर्त्तमाने वाऽनागते वा माता स्त्री १ पुरुष २ नपुंसक ३ बिंब ४ रूपाणां चतुर्णां मध्येऽ-न्यतमं प्रसूते, तत्र शुक्राल्पत्वे शोणिताधिक्ये च स्त्री जायते, तद्वैपरीत्ये तु पुरुषः स्यात्, द्वयोः साम्ये च नपुंसको भवेत्, केवलशोणितसमायोगे तु निर्जीवमांसपिंडरूपं बिंबं स्यादिति। कश्चित्पुनर्जंतुराविर्भूतप्रभूतपापाभिभूतः सन् वातपित्तादिदूषिते देवादिस्तंभिते वा गर्भे द्वादश वर्षाणि निरंतरं तिष्ठति। इयं च गर्भस्य भवस्थितिरस्ति। कायस्थितिः पुनर्नराणां गर्भस्य चतुर्विंशतिवर्षाणि। तथाहि—कश्चिज्जीवो द्वादश वर्षाणि गर्भे स्थित्वा तदंते च मृत्वा तथाविधदुष्कर्मवशात्तत्रैव गर्भस्थकलेवरे

मनुत्पद्य पुनर्द्वादश वर्षाणि जीवंस्तिष्ठतीत्येवं चतुर्विंशतिवर्षाणि उत्कर्षतो गर्भवासो भवतीति। तिर्यग्जीवस्तु तिरश्चीनां गर्भे उत्कर्षतोऽष्ट वर्षाणि तिष्ठति, ततः परं तस्य विनाशः प्रसवो वा स्यादिति। ननु स्त्रीणां गर्भोत्पत्तियोग्यत्वं पुरुषाणां च गर्भाधानयोग्यवीर्ययुक्तत्वं च कियत्कालं यावद्भवतीति चेदुच्यते–पंचपंचाशद्वर्षाणि यावत्स्त्रीणां योनिरम्लानित्वाद्गर्भं गृह्णाति, ततः परं तु आर्तवाभावात्सम्लायति। यदुक्तं निशीथचूर्णौ–इत्थीए जाव पणपन्ना वासा न पूरंति ताव अमिलिणा य जोणी अत्तवं भवति गर्भं च गृह्णातीत्यर्थः, पणपन्नवासाए पुण कस्सइ अत्तवं भवति न पुण गब्भं गिण्हइ, पणपन्नाए परओ नो अत्तवं नो गब्भं गिण्हइ त्ति। तथा पंचसप्ततिवर्षाणि यावत्पुरुषो गर्भाधानयोग्यवीर्ययुक्तो भवति, ततः परं तु प्रायेणैतादृग्वीर्यविवर्जितः स्यात्, यदुक्तं–पणपन्नाइपरेणं, जोणी पमिलाइ य महिलिआणं। पणहत्तरीए परओ, होइ अबीओ नरो पायं ॥ १ ॥ त्ति। इदं हि वर्षशतायुषो जनानाश्रित्य द्रष्टव्यं, वर्षशतात्परतो वर्षशतद्वयं त्रयं चतुष्टयं चेत्यादियावत्पूर्वकोटियावत्स्त्रीणामायुर्भवति तासां मनांसुषोऽर्द्धं यावद्योनिरम्लानित्वेन गर्भधारणसमर्था भवति, पुरुषाणां तु सर्वेषामपि पूर्वकोटिपर्यंतस्य स्वायुषश्चरमो विंशतितमो भागोऽबीजो भवति, पूर्वकोटेरुपरिस्थितीनां तु युगलिकत्वेन सकृत्प्रसवधर्मत्वादवस्थितयौवनत्वाच नायं नियम इति।

तथा इह शरीरे त्रीणि मातुः संबंधीनि अंगानि संति, तथाहि–मांसं १ शोणितं २ मस्तकमेजकं च ३। त्रीणि च पितुः संबंधीनि अंगानि, तथाहि–अस्थि १ अस्थिमज्जा २ केशश्मश्रुरोमनखानि ३ चेति। अथ पुनर्देहस्यैव पृष्ठकरंडकप्रभृत्यवयवसंख्यादिकं प्रदर्श्यते–तत्र तावन्मनुष्यशरीरे पृष्ठवंशस्य अष्टादशसंख्या ग्रंथिरूपाः संधयो भवंति, तेषु चाष्टादशसु

मध्ये द्वादशसंधिभ्यो द्वादश पंशुलिका निर्गत्य उभयपार्श्वावावृत्य वक्षःस्थलमध्यवर्त्त्यस्थि लगित्वा पल्लिकाकारतया परिणमंति। तथा तस्मिन्नेव पृष्ठवंशे शेषषट्संधिभ्यः षट् पंशुलिका निर्गत्य पार्श्वद्वयं चावृत्य हृदयस्योभयतो वक्षःपंजरादधस्तात् शिथिलकुक्षेरुपरिष्टात्परस्परासंमिलितास्तिष्ठंति, अयं तु कटाह इत्युच्यते। तथा शरीरे प्रत्येकं पंच पंच वामप्रमाणे द्वे अंत्रे भवतः, तयोर्मध्ये एकं स्थूलमन्यत्तनुकं तत्र यत्स्थूलं तेनोच्चारः परिणमति, यत्पुनस्तनुकं तेन प्रस्रवणं परिणमति। तथेह शरीरे द्वौ पार्श्वौ भवतः-दक्षिणो वामश्च, तत्र यो दक्षिणः स दुःखकारिपरिणामः, यस्तु वामः पार्श्वः स सुखकारिपरिणामः, पुनरस्मिन् शरीरे षष्ठ्यधिकं शतं (१६०) संधयो भवंति। अंगुलाद्यस्थिखंडमेलापकस्थानानि संधय उच्यंते। पुनः सप्ताधिकं शतं (१०७) संखाणिकादीनि मर्माणि संति। तथा पुरुषस्य शरीरे सप्त शतानि नाभिप्रभवाः स्नसा भवंति, तत्र षष्ट्यधिकं शतं शिरा ऊर्ध्वगामिन्यो नाभेरारभ्य मस्तकं यावद्गच्छंति, ताश्च रसहरणा(ण्यः) उच्यंते, तासां चानुपघाते सति श्रोत्रचक्षुर्घ्राणजिह्वानां बलमुल्लसति, उपघाते च सति श्रोत्रादीनां बलं क्षीयते, तथा षष्ट्यधिकं शतमेव चान्याः स्नसा अधोगामिन्यः पादतलमुपगता भवंति, ताश्चानुपघाते सति जंघाबलकारिण्यः, उपघाते तु शिरोवेदनांधतादीनि कुर्वंति। तथा षष्ट्यधिकं शतमेव अपरा गुदाप्रविष्टाः स्नसा भवंति, यासां बलेन वायुर्मूत्रं पुरीषं च प्राणिनां प्रवर्त्तते, एतासां विघाते तु अर्शांसि पांडुरोगो मलमूत्रवायुनिरोधश्च भवति। तथा षष्ट्यधिकं शतमेव चेतरास्तिर्यग्गामिन्यः शिरा हस्ततलमुपगताः संति, ताश्चानुपघाते सति बाहुबलकारिण्य, उपघाते तु पार्श्वपृष्ठिकुक्षिवेदनाः कुर्वंति। तथान्याः पंचविंशतिशिराः श्लेष्मधारिण्यो भवंति, इतराः पुनः पंचविंशतिरेव शिराः पित्तधारिण्यो भवंति, दश च शिराः शुक्राख्यसप्तमधातुधा-

रिण्यो भवंति। इत्थं नाभिप्रभवाणि सप्तशिराशतानि (७००) पुरुषस्य शरीरे भवंति। स्त्रीणां तु त्रिंशता न्यूनानि, नपुंसकस्य पुनर्विंशतिन्यूनानि स्युः।

तथाऽस्मिन् शरीरे नव शतानि अस्थिबंधननाड्यो भवंति, नव च रसवहा धमनीनाड्यः स्युः, तथा श्मश्रुकेशैर्विना नवनवतिलक्षरोमकूपा भवंति, तैस्तु सह सार्द्धास्तिस्रः कोट्यो रोमकूपानां जायंते, तत्र श्मश्रूणि कूर्चकचाः, केशास्तु शिरोरुहा इति। तथा मुखाभ्यंतरवर्तिमांसखंडरूपा जिह्वा दैर्घ्येणात्मांगुलतः सप्तांगुलप्रमाणा भवति, तौल्ये तु मगधदेशप्रसिद्धेन पलेन चत्वारि पलानि भवति। अक्षिमांसगोलकौ तु द्वे पले। शिरस्तु अस्थिखंडरूपैश्चतुर्भिः कपालैर्निष्पद्यते, ग्रीवा पुनश्चतुरंगुलप्रमाणा भवति, मुखे चास्थिखंडरूपा दंताः प्रायेण द्वात्रिंशत्संख्या भवंति, हृदयांतर्वर्तिमांसखंडं तु सार्द्धपलत्रयं भवति, वक्षोंऽतर्गूढमांसविशेषरूपं कालेयकं पुनः पंचविंशतिपलानि स्यात्। तथा शरीरे मूत्रस्य शोणितस्य च प्रत्येकमाढकं सर्वदैवावस्थितं भवति, वसायास्त्वर्द्धाढकं, मत्सुलिं(मस्तुलुं)गस्य प्रस्थं, पुरीषस्य प्रस्थषट्कं, पित्तस्य श्लेष्मणश्च प्रत्येकं कुडवः, शुक्रस्य त्वर्द्धकुडवः सर्वदावस्थितो भवति। एतच्चाढकप्रस्थादिमानं बालकुमारतरुणादीनां 'दोअसईओ पसई' इत्यादिक्रमेणात्मीयात्मीयहस्तमाश्रित्यानेतव्यं। उक्तं च–दोअसईओ पसई, दोपसईओ सेइआ, चत्तारि सेइआओ कुलओ, चत्तारि कुलओ पत्थो, चत्तारि पत्था आढयं, चत्तारि आढया दोणो इत्यादि। धान्यभृदवाङ्मुखीकृतो हस्तोऽसतीत्युच्यते। अत्र यथाक्रममर्थो बोध्यः, इत्थमुक्तमानाच्च शुक्रशोणितादीनां यत्र हीनाधिक्यं भवति तत्र वातादिदूषितत्वेनेति ज्ञेयं। तथा पुरुषस्य शरीरे पंच कोष्ठकानि भवंति, स्त्रियास्तु षट्, पुनः पुरुषस्य द्वौ कर्णौ, द्वे चक्षुषी, द्वे घ्राणे, मुखं, पायूपस्थश्चेत्येवं नव

श्रोत्राणि (स्रोतांसि) स्युः, स्त्रियास्तु एतान्येव स्तनयुगलसहितानि एकादश भवंति, एतानि मनुजगतिमाश्रित्य बोध्यानि, तिर्यग्गतौ त्वजादीनां द्विस्तनीनामेकादश श्रोत्राणि, गवादीनां चतुःस्तनीनां त्रयोदश, सूकर्यादीनामष्टस्तनीनां सप्तदश । इदं हि निर्व्याघाते बोध्यं, व्याघाते पुनरेकस्तन्या अजाया दश, त्रिस्तन्याश्च गोर्द्वादशेति । तथा पुरुषस्य शरीरे पंच शतानि मांसपेश्यो भवंति, स्त्रीणां तु त्रिंशता न्यूनानि नपुंसकस्य पुनर्विंशत्या न्यूनानि स्युः । तथायं शरीरोऽनेकेषां महारोगाणामुत्पत्तिस्थानमस्ति । तत्र संसारस्थसर्वरोगसंख्या यथा-पंचेव य कोडीओ, लक्खा अडसट्ठि सहस नवनवई । पंचसया चुलसीई, रोगाणं हुंति संखाओ ॥ १ ॥ त्ति । इत्येवमस्थ्यादिसंघातरूपे विविधव्याधिकुलाकुलेऽस्मिन् शरीरे किं नाम स्वरूपतः शुचित्वं ? न किंचिदपीति भावः ६ ।

अथ सप्तमी आश्रवभावना यथा-इह संसारे जीवा मिथ्यात्वाविरतिकषाययोगैराश्रवैः प्रतिसमयं शुभाशुभकर्मपुद्गलान् गृह्णंति । तत्र येषां पुण्यात्मनां चित्तानि नित्यं सर्वसत्त्वेषु मैत्र्या, गुणाभ्यधिकेषु प्रमोदेन, अविनीतेषु माध्यस्थ्येन, दुःखितेषु च करुणया वासितानि संति ते शुभकर्माणि बध्नंति, येषां पुनर्मनांसि आर्त्तरौद्रध्यानमिथ्यात्वकषायविषयैः सर्वदाऽऽक्रांतानि संति तेऽशुभकर्माणि बध्नंतीत्यादिचिंतनमाश्रवभावना । उक्तं च- मिच्छत्ताविरइकसाय-जोगदारेहिं जेहिं अणुसमयं । इह कम्मपुग्गलाणं, गहणं ते आसवा हुंति ॥ १ ॥ त्ति ॥ ७ ॥ अथाष्टमी संवरभावना यथा-इह मिथ्यात्वादीनामाश्रवाणां सम्यक्त्वादिभिर्योगनिरोधः स संवर उच्यते, स च सर्वतो देशतश्चेति द्विधा, तत्र सर्वतः संवरोऽयोगिकेवलिनामेव स्यात्, देशतः पुनरेकद्विव्याद्याश्रवरोधिनां भवति, स पुनः प्रत्येकमपि द्रव्यभावभेदतो द्विधा, तत्रात्मनि आश्रवाआगमानस्य कर्म-

षड्द्रव्याणि संति, तत्र यः स्वभावतो गतिप्रवृत्तानां जीवपुद्गलानां मत्स्यानां जलमिव उपष्टंभकारी स धर्मास्तिकायः १। यः पुनः पथिकानां छायेव तेषामेव स्थितावुपष्टंभदायी सोऽधर्मास्तिकायः २। एतौ च द्वावपि प्रदेशतः प्रमाणतश्च लोकाकाशतुल्यौ। तथा तेषामेव गतिस्थितिप्रवृत्तानामवकाशदानादवगाहनधर्माऽऽकाशास्तिकायः ३। तथा चेतनालक्षणः कर्मणां कर्ता भोक्ता च जीवनधर्मा जीवास्तिकायः ४। तथा महीमहीधराद्यादिसमस्तवस्तूनां परिणामि कारणं पूरणगलनधर्मा पुद्गलास्तिकायः ५। तथा वर्त्तनालक्षणोऽभिनवपौद्गलिकवस्तूनां जीर्णत्वापादकः समयक्षेत्रांतर्वर्त्ती कालः ६। एतेषु पुद्गलद्रव्यवर्जाणि (नि) सर्वाण्यप्यमूर्त्तद्रव्याणि पुद्गलस्तु मूर्त्तः तथा जीवद्रव्यवर्जाणि (नि) सर्वाण्यप्यचेतनद्रव्याणि इति। ननु असंख्येयप्रदेशात्मके लोकाकाशेऽनंतानंतजीवद्रव्याणि, तेभ्योऽप्यनंतगुणाभ्यधिकानि पुद्गलद्रव्याणि च कथमवतिष्ठंते? संकीर्णता कुतो न स्यात्? इति चेदुच्यते–जीवद्रव्याणाममूर्त्तत्वान्न संकीर्णत्वं, पुद्गलानां तु मूर्त्तत्वेऽपि प्रदीपप्रभादिदृष्टांतेन तथाविधपरिणामवैचित्र्यादेकस्मिन्नप्याकाशप्रदेशेऽनंतानंतपरमाण्वादिपुद्गलद्रव्याणामसंकीर्णतया निवेशो भवति, किं पुनरसंख्येयेषु तेष्विति न कश्चिद्दोषः। यदुक्तं पूज्यवर्यैः श्रीमदभयदेवसूरिभिः श्रीमद्भगवत्यंगवृत्तौ त्रयोदशशतकस्य चतुर्थोद्देशके–आगासत्थिकाएणमित्यादि–जीवद्रव्याणां चाजीवद्रव्याणां च भाजनभूतोऽनेन चेदमुक्तं भवति–एतस्मिन्सति जीवाजीवानामवगाहः प्रवर्त्तते, एतस्यैव प्रश्नितत्वादिति। भाजनभावमेवास्य दर्शयन्नाह–एगेण वीत्यादि–एकेन परमाण्वादिना सेति असौ आकाशास्तिकायप्रदेश इति गम्यते, पूर्णो भृतस्तथा द्वाभ्यामपि ताभ्यामसौ पूर्णः। कथमेतत्? उच्यते–परिणामभेदात् यथापवरकाकाशं एकप्रदीपप्रभापटलेनापि पूर्यते, द्वितीयमपि तत्र माति, यावच्छतमपि तेषां तत्र माति। तथौषधविशेषापादितपरि-

पुद्गलादानस्य यत्सर्वदेशाभ्यां छेदनं स द्रव्यसंवरः, यस्तु भवहेतुक्रियायास्त्यागः स भावसंवरः, एवंस्वरूपस्याश्रवविरोधिनः संवरस्य चिंतनं सा संवरभावना । उक्तं च-आसवदारपिहाणं, सम्मत्ताईहिं संवरो नेओ । पिहियासवो हि जीवो, सुतरि व्व तरेइ भवजलहिं ॥ १ ॥ चि ८ ।

अथ नवमी निर्जराभावना, यथा-इह संसारे प्राग्बद्धानां कर्मणां तपसा निकर्त्तनं निर्जरेत्युच्यते । बध्यमानकर्मविषयः संवरः, प्राग्बद्धकर्मविषया च निर्जरेत्यनयोर्भेदः । इयं च द्विधा-सकामा अकामा च । तत्र सकामा द्वादशधा, बाह्यस्याभ्यंतरस्य च तपसः प्रत्येकं षड्भेदत्वात् । ते भेदास्तु प्राग्यतिधर्माधिकारे व्याख्याता एवेति न पुनर्व्याख्यायंते । इयं हि द्वादशविधापि निर्जरा विरतिपरिणतानां भवति, तैरेव कर्मक्षयार्थं स्वाभिलाषेण क्रियमाणत्वात् । अकामा तु विरतिपरिणामरहितानां शेषजंतूनामनभिलाषेणैव शीतोष्णक्षुत्पिपासादेः सहनाज्जायते, एवंविधाया निर्जरायाश्चिंतनं निर्जराभावना । यदुक्तं-कम्माण पुराणाणं, निक्कंतनं निज्जरा दुवालसहा । विरयाण सा सकामा, तहा अकामा अविरयाणं ॥ १ ॥ ति ९ ।

अथ दशमी लोकस्वभावभावना यथा-अलोकस्य मध्यभागे चतुर्दशरज्जुप्रमाणो लोको विद्यते, स च कटिसंस्थापितकरद्वयस्तिर्यक्प्रसारितपादयुगो यः पुरुषस्तदाकारोऽस्ति, यद्वा अधोमुखीकृतबृहच्छरावस्योपरि स्थितं यल्लघुशरावसंपुटं तत्संस्थानो विद्यते । इदमत्र तात्पर्यं-सप्तरज्जुविस्तारादधस्तनलोकतलादूर्ध्वं स्तोकं स्तोकं संकुचन् लोकस्तिर्यग्लोके एकरज्जुविस्तृतो भवति, तत ऊर्ध्वं क्रमेण विस्तारं भजन् ब्रह्मलोकस्य तृतीयप्रस्तटे पंचरज्जुविस्तृतः स्यात्, ततः पुनः स्तोकं स्तोकं संक्षेपं भजन् सर्वोपरितने लोकाग्रप्रदेशप्रतरे रज्जुविस्तृतो भवति, ततो भवति यथोक्तसंस्थानो लोक इति । तस्मिंश्च धर्मास्तिकायादीनि

षड्द्रव्याणि संति, तत्र यः स्वभावतो गतिप्रवृत्तानां जीवपुद्गलानां मत्स्यानां जलमिव उपष्टंभकारी स धर्मास्तिकायः १। यः पुनः पथिकानां छायेव तेषामेव स्थितावुपष्टंभदायी सोऽधर्मास्तिकायः २। एतौ च द्वावपि प्रदेशतः प्रमाणतश्च लोकाकाशतुल्यौ। तथा तेषामेव गतिस्थितिप्रवृत्तानामवकाशदानादवगाहनधर्मोऽऽकाशास्तिकायः ३। तथा चेतनालक्षणः कर्मणां कर्त्ता भोक्ता च जीवनधर्मा जीवास्तिकायः ४। तथा महीमहीधराभ्रादिसमस्तवस्तूनां परिणामि कारणं पूरणगलनधर्मा पुद्गलास्तिकायः ५। तथा वर्त्तनालक्षणोऽभिनवपौद्गलिकवस्तूनां जीर्णत्वापादकः समयक्षेत्रांतर्वर्त्ती कालः ६। एतेषु पुद्गलद्रव्यवर्जाणि (नि) सर्वाण्यप्यमूर्तद्रव्याणि पुद्गलस्तु मूर्त्तः तथा जीवद्रव्यवर्जाणि (नि) सर्वाण्यप्यचेतनद्रव्याणि इति। ननु असंख्येयप्रदेशात्मके लोकाकाशेऽनंतानंतजीवद्रव्याणि, तेभ्योऽप्यनंतगुणाभ्यधिकानि पुद्गलद्रव्याणि च कथमवतिष्ठंते ? संकीर्णता कुतो न स्यात् ? इति चेदुच्यते–जीवद्रव्याणाममूर्त्तत्वान्न संकीर्णत्वं, पुद्गलानां तु मूर्त्तत्वेऽपि प्रदीपप्रभादिदृष्टांतेन तथाविधपरिणामवैचित्र्यादेकस्मिन्नप्याकाशप्रदेशेऽनंतानंतपरमाण्वादिपुद्गलद्रव्याणामसंकीर्णतया निवेशो भवति, किं पुनरसंख्येयेषु तेष्विति न कश्चिद्दोषः। यदुक्तं पूज्यवर्यैः श्रीमदभयदेवसूरिभिः श्रीमद्भगवत्यंगवृत्तौ त्रयोदशशतकस्य चतुर्थोद्देशके–आगासत्थिकाएणमित्यादि–जीवद्रव्याणां चाजीवद्रव्याणां च भाजनभूतोऽनेन चेदमुक्तं भवति–एतस्मिन्सति जीवाजीवानामवगाहः प्रवर्त्तते, एतस्यैव प्रश्नितत्वादिति। भाजनभावमेवास्य दर्शयन्नाह–एगेण वीत्यादि–एकेन परमाण्वादिना सेति असौ आकाशास्तिकायप्रदेश इति गम्यते, पूर्णो भृतस्तथा द्वाभ्यामपि ताभ्यामसौ पूर्णः। कथमेतत् ? उच्यते–परिणामभेदात् यथापवरकाकाशं एकप्रदीपप्रभापटलेनापि पूर्यते, द्वितीयमपि तत्र माति, यावच्छतमपि तेषां तत्र माति। तथौषधविशेषापादितपरि-

णामादेकस्मिन् पारदकर्षे सुवर्णकर्षशतं प्रविशति, तत्पारदकर्षीभूतं च शतं औषधसामर्थ्यात्पुनः पारदस्य कर्षः सुवर्णस्य च कर्षशतं पृथग्भवति, विचित्रत्वात्पुद्गलपरिणामस्येति । पुनर्लोकप्रकाशग्रंथेऽप्युक्तं–विशत्यौषधसामर्थ्या–त्पारदस्यैककर्षके । सुवर्णस्य कर्षशतं, तौल्ये कर्षाधिकं न तत् ॥ १ ॥ पुनरौषधसामर्थ्या–चद्द्वयं जायते पृथक् । सुवर्णस्य कर्षशतं, पारदस्यैक-कर्षकः ॥ २ ॥ इति । इह पुनरूर्ध्वाधस्तिर्यग्लोकस्वरूपं तु ग्रंथांतरादवसेयं । एवंविधलोकस्वरूपस्य चिंतनं लोकस्वभाव-भावना । यदुक्तं–अहमुहगुरुमल्लयठिअ, लहुमल्लयजुयलसंठिअं लोगं । धम्माइ पंचदव्वेहिं, पूरिअं मणसि चिंतिज्जेत्ति ॥१॥ १० ।

अथैकादशी बोधिदुर्लभत्वभावना यथा–अनंतानंतकालदुर्लभपंचेंद्रियत्वमनुष्यभवादिसत्सामग्रीयोगेऽपि प्राणिनां परम-विशुद्धिकारिणी सर्वज्ञदेशिता तत्त्वज्ञानरूपा बोधिः प्रायेण दुर्लभा, सा च यद्येकदापि लब्धा भवेत्तर्हि जंतूनामियत्कालं संसारे पर्यटनं न स्यादित्यादिचिंतनं बोधिदुर्लभत्वभावना । यदुक्तं–पंचिंदियत्तणाइअ–सामग्गीसंभवे वि अइदुलहा । तत्ताव-बोहरूवा, बोही सुही (सोहि) जिअस्स जओ ॥ १ ॥ त्ति ११ । अथ द्वादशी धर्मकथकोऽर्हन्निति भावना यथा–इह संसारे वीतरागत्वेन सर्वदा परमार्थकरणोद्यतैर्विमलकेवलज्ञानावलोकितसकललोकालोकैः श्रीमद्भिरर्हद्भिर्विना एतादृक्सुनिर्मलसाधुश्रा-द्धसंबंधिसद्भूतधर्मं कथयितुं न कोऽपि समर्थोऽस्ति । कुतीर्थिकप्रणीतानि तु वचनानि अज्ञानमूलत्वेन पूर्वापरविरुद्धानि हिंसा-दिदोषदुष्टानि च संति, अतस्तानि प्रत्यक्षमसद्भूतान्येव । यत्पुनस्तेष्वपि कुत्रचिद्दयासत्यादिपोषणं दृश्यते तद्वचनमात्रमेव, न हि तत्त्वतः किंचित् । ततश्च तत्त्वतः शुद्धस्वरूपधारिण्याः सकलजगज्जंतुतारिण्याः श्रीमदर्हद्वाण्याः कियद्वर्णनं क्रियते ? यदीयमेकमपि वाक्यं यथाकथंचिदपि कर्णगोचरीभूतं सत् रौहिणेयस्येव प्राणिनो महोपकारकारकं संपद्यते, इत्यादि चिंतनं

द्वादशीभावना। उक्तं च-धम्मो जिणेहिं निरुवहि-उवयारपरेहिं सुट्ठु पण्णत्तो। समणाणं समणोवा-सयाण दसहा दुवालसहा ॥ १ ॥ इति १२। इह रौहिणेयवृत्तांतस्त्वेवं—

राजगृहनगर्यां श्रेणिको राजा, तस्याभयकुमारो नाम सर्वबुद्धिनिधिः पुत्रोऽभवत्। इतश्च तन्नगरसमीपवर्तिवैभारगिरिगुहायां क्रूरो लोहखुरश्चौरोऽवसत्, स च राजगृहनगरलोकानामेव दारैर्धनैश्च अभ्यासेन कामार्थौ साधयन् कालं गमयामास। तस्य च रोहिण्यां भार्यायां रौहिणेयो नामातिक्रूरः पुत्रो जातः। अथ लोहखुरः स्वमृत्युकाले पुत्रमाकार्येति जगाद-'हे वत्स! चेत्त्वमिदं वांछसि तर्हि मदुक्तामेकां शिक्षां शृणु, इह किल योऽसौ वप्रत्रयस्थो वीरजिनो मृदुवाक्यैर्वक्ति तस्य वचनमुपरकाले त्वया कर्णाभ्यां कदापि न श्रोतव्यं।' एवं पुत्रं शिक्षयित्वा स्वयं प्राणत्यागं चकार। ततो रौहिणेयोऽपि पितुः शिक्षां स्मरन्नित्यं चौर्यं करोति स्म। अथान्यदा श्रीवीरप्रभुस्तत्र समवसृतः, देवैः समवसरणं निर्मितं, भगवता च भव्यानां पुरः सद्धर्मदेशना प्रारब्धा, तदा स चौरश्चौर्यार्थं राजगृहं व्रजन् समवसरणसमीपं संप्राप्तः, तत्रैवं च चिंतितवान्-यद्यनेन मार्गेण व्रजामि तर्हि जिनस्य वाचः श्रवणं स्यात्, अन्यो मार्गस्तु न विद्यते, अथ किं करोमि? यदि वालं विषादेन कर्णरंध्रयोरंगुल्यौ क्षिप्त्वा व्रजामीति विचिंत्य तथैव कृत्वा त्वरितैः पदैरचलत्। तदा सत्वरं व्रजतस्तस्य चरणे गाढः कंटको भग्नः, तेनानुद्धृतेनासौ पदमात्रमपि अग्रे गंतुं न शशाक। ततोऽनिच्छयोऽपि कर्णादिकामंगुलीमाकृष्य तया पादशल्यमुद्धरतस्तस्य तदांतःशल्यविशोधनी देवस्वामिनर्णिकेत्थं वीरवाणी कर्णगोचरे प्राप्ता। तथाहि-अणिमिसनयणा मणकज्ज-साहणा पुप्फदामअमिलाणा। चउरंगुलेण भूमिं, न छिवंति सुरा जिणा बिंति ॥ १ ॥ चि। अथैव हा बहु श्रुतमिति चिंतां कुर्वन् वेगात्कंटकं समुद्धृत्य पुनरंगुल्या कर्णं

पिधाय राजगृहपुरं ययौ, तत्र स स्वैरं चौर्यं कृत्वा पुनर्गिरिगुहां प्राविशत्, परं चरणशल्योद्धरणसमये श्रुतां वीरवाणीं दुरुद्धरं शल्यमिव मन्वानो नित्यं चित्ते दुनोति स्म। अथ निरंतरं सकलेऽपि नगरे तेन मुष्यमाणे सति अत्यंतदुःखितो लोकोऽवसरे राजानं प्रति सदुःखं निवेदितवान्। राजापि मधुरवचनैर्लोकमाश्वास्य तलारक्षं प्राह–'अरे! चौरनिग्रहेण लोकरक्षां किं न करोषि?।' सोऽप्यूचे–'हे देव! रौहिणेयो नाम अतिदुर्ग्रहः कश्चित्तस्करः प्रादुर्भूतोऽस्ति, तन्निग्रहार्थं बहव उपायाः कृताः, परं केनाप्युपायेन स धर्तुं न शक्यते, अथ देवः स्वयमेव निजां तलारक्षतां गृह्णातु।' इति तेनोक्ते सति राजा अभयकुमारसन्मुखं पश्यति स्म। स प्रोचे–'हे तात! सप्तदिनमध्ये चौरं समानयामि, नो चेत्किं बहूक्तिभिर्भवद्भिश्चौरस्य दंडेनाहं दण्ड्य इत्युक्त्वाभयकुमारः सर्वतः चौरस्थानानि यत्नेन पश्यन्नपि क्वापि तस्करं न लेभे। ततः षष्ठे दिने संध्यायां नगरमध्ये लोकं कोलाहलान्निवार्य वप्राद्बहिः सर्वतो भटानमुंचत्। तस्मिन् दिनेऽपशकुनैर्वारितोऽपि स चौरो नगरमध्ये प्रविश्य यावत्कस्यापि गृहे चौर्यमारब्धवान् तावत्पदे पदे स्थितैर्योधैर्मिलित्वा एकहक्कया त्रासितः सन् स ततः पलाय्य ऊर्ध्वोत्पातेन प्राकारमारुह्य बहिः पतन् योधैर्धृतः, प्रातःकाले च तैरभयाय समर्पितोऽभयकुमारेण च राज्ञे दत्तः। ततो राज्ञा तं चोरितद्रव्यरहितं दृष्ट्वा त्वं कोऽसीति पृष्टे सति स प्राह–'हे राजन्नहं तु शालिग्रामवासी दुर्गचंडो नाम राजकरदायी कृषीवलोऽस्मि, इह किंचित्स्वकार्यं कृत्वा रात्रौ स्वग्रामाय चलितस्तत्र भवद्योधैर्भापितः सन् भीत्या वप्रमुल्लंघ्य बहिःपतन्नमीभिर्भटैश्चौरधिया धृतोऽस्मि। अथ हे विचारज्ञ! त्वं विचारय, अहं चौरश्चेन्मां निगृहाण, यद्वा मयि हते सति अभयकुमारो जीवति तर्हि तथा कुरु।' इति तद्वचो निशम्य भूपतिस्तं दृढबंधं विधाय प्रत्ययार्थं तत्र ग्रामे निजभृत्यं प्राहिणोत्। स ग्रामस्तेन चौरेण

पूर्वमेव संकेतितोऽभूत्, यतोऽसावन्यां महीं मुष्णन्नपि तस्य ग्रामस्य पालकः पोषकश्च विद्यते, तत्र गत्वा भूपभृत्येन तद्वार्त्तां पृष्टः सन् सकलोऽपि ग्रामो जगाद–'सत्यमत्र दुर्गचंडः कृषीवलो वसति, स च गतेऽह्नि नगरं गतोऽभूत्परमद्यापीह नागतस्ते- नायं सकलो जनस्तस्योदंतं ज्ञातुमातुरः स्थितोऽस्ति। ततस्तेन भृत्येन पश्चादागत्यैवमेव विज्ञप्ते सति राजा दध्यौ–'अहो ! अभयकुमारो मृत्युभयात्सरलेषु ग्राम्यलोकेषु चौरव्यपदेशं करोतीति।' तदाऽभयकुमारो मुखचेष्टादिना राज्ञोऽभिप्रायं विज्ञाय 'मयास्य कापट्यं कया बुद्ध्या प्रादुष्क्रियते ?'। इति चिंतायां पतितः, सद्यः समुत्पन्नबुद्धिः सोऽभय एकं सप्तभूमिकं विचि- त्रैरुल्लोचैर्विविधमुक्ताफलमंडनै रंभातुल्यरूपाभिर्नारीभिर्देवतुल्यैः पुरुषैश्च स्वर्विमानोपममावासं सज्जयित्वा चौरं बभाषे–'धिगस्तु मे दुर्मतिं, यच्चौरवार्हस्त्वं मयैवं विडंबितः। अथैकशस्त्वं ममावासमेहि, यत्ते भक्तिं कृत्वा स्वापराधं दूरीकरोमि।' सोऽपि मायी मंत्रिणा सह तन्मंदिरं गतस्तत्र च मिष्टाहारैः परमप्रीतिं प्राप्तः, ततोऽभयेन मदिरां पाययित्वा दिव्यवस्त्रपरिधानपूर्वकं तत्र पल्यंके सुखं शायितः। अथोन्मीलच्चेतनः स चौरस्तद्दिव्यमंदिरं पश्यन् स्वं स्वर्गस्थमिव मन्यते स्म। ततोऽभयकुमारा- ज्ञया समंतान्नरनारीगणस्तमाश्रित्य जय जय नंदेति मंगलमुच्चचार, पुनः प्राक्तनसुकृतवशादत्र विमाने त्वं प्रभुर्जातः, वयं सर्वेऽपि ते किंकराः स इत्युक्त्वा तैर्नाटके समारब्धे सति अभयादेशादेकः स्वर्णदंडहस्तः पुमानागत्य तान् प्रोवाच–'भो नाटकं तावत्तिष्ठतु यावदमुं देवं देवलोकस्य स्थितिं कारयामि।' इति तानुक्त्वा ततस्तं स प्राह–'भो नव्यदेव ! स्वस्य प्राग्जन्मोपार्जिते पुण्यपापे तावन्निवेदय, पश्चात्स्वर्गसुखानि भुंक्ष्व।' तदा रौहिणेयो दध्यौ–'किमयं सत्यः स्वर्गः ? किं वा मदर्थमभयस्य कोऽपि प्रपंचोऽयमिति ध्यात्वा स धीरबुद्धिश्चौरः कंटकोद्धरणसमये श्रुतां देवस्वरूपवर्णिकां 'अणिमिसन-

यणेत्यादि' भगवद्वाणीं सस्मार। ततोऽसौ स्वं च तान् पुरःस्थितजनांश्च सर्वानपि भूलग्नचरणान् म्लानमाल्यान् मिलनेत्रान् मनोऽभीष्टसाधनेऽक्षमान् विलोक्य वीरवाक्येन सह तेषां साक्षाद्विरोधं निरीक्षमाणस्तत्सर्वमभयकृतं दंभं ज्ञातवान्। ततस्तेन दंडिना पुनरूचे–'भोः किं ध्यायसि? सर्वोऽप्ययं देवलोकः स्वस्वभक्तिं दर्शयितुं समुत्सुकोऽस्ति, अतः शीघ्रं स्ववृत्तांतं वद।' तदा स जगाद–'जिनपूजनसाधुसेवनदयापालनपात्रदानचैत्यनिर्मापणादिसद्धर्मकृत्यानि मया प्राग्भवे कृतानि।' पुनर्दंडिनोक्तं–'भो देव! प्राणिनां जन्म एकस्वभावेनैव न प्रयाति तस्मादेतत्पुण्यमिव स्वकृतं चौर्यस्त्रीलोलतादिपापकर्मापि निःशंकं वद।' तदा रौहिणेयो जगाद–'अहो दिव्यज्ञानवतस्तव कोऽयं मतिभ्रमः? ये किल सुसाधुसेवाकारिणः श्राद्धास्ते किमीदृक्कुकर्म कुर्वते? यदि च कुर्वते तर्हि कथमीदृशं स्वर्गं लभंते? तस्मान्मयि तु मनागपि पापं नास्ति, किं पुनः पुनः पृच्छसि?।' तदा परिच्छदांतरितोऽभयकुमारस्तत्सर्वं श्रुत्वा रोषदष्टाधरोऽपि सन् अस्य मतिकौशलं प्रशंसति स्म। ततस्तत्समीपमागत्य तमालिंग्येति जजल्प–'हे वीर! अद्यावधि केनाप्यहं न निर्जितोऽस्मि, त्वया पुनर्जितः, परमेतन्महच्चित्रं यत्त्वं मयापि न निगृह्यसे।' अथैवं प्रीत्याऽभयेनोक्तः सन् स प्रोवाच–'हे अभय! श्रीवीरवाक्यं हृदि बिभ्राणोऽहं त्वया न निगृह्ये, अत्र किमाश्चर्यं? परं मद्यपानाद्यत्त्वं स्वर्गं प्रापयसि तदाश्चर्यं।' तदाऽभयः प्राह–'हे भ्रातर्ममोक्त्या त्वं मां मा लज्जय। यथास्थितं वद, चौरस्यापि तव श्रीवीरवाणी कथं कर्णगोचरा जाता?।' एवं सस्नेहं पृष्टः सन् स चौरः सर्वामपि स्वकथामादितोऽवादीत्। पुनरूचे–'यदि जगद्गुरुवाचं तदाहं नाश्रोष्यं तर्हि अद्य त्वया छलितः सन् कां कां विडंबनां नावाप्स्यं? किं च यस्य प्रभोरेकमपि वाक्यं प्राणिनां महाकष्टवारकं स्यात् तस्य सर्वोऽप्यागमः श्रुतः सन् अक्षयसौख्यदः

स्यादेव। अहं किल जनकरूपेण चैरिणा वंचितः सन् तदा कर्णयोः प्रविष्टां श्रीवीरवाणीं शल्यमिव मेने, परं साऽमृतस्वभावत्वेन ममाधुना जीवितप्रदा जाता। अथ हे भ्रातः! सर्वमपहृतं धनं तुभ्यं दर्शयित्वाहं श्रीवीरपादांते व्रतं ग्रहीतुमिच्छामि।' ततोऽभयेन तं राज्ञः समीपमानीय प्रोक्तं-'हे स्वामिन्नयं स्वस्य चौर्यं मन्यते।' ततो भूपेन वध्योऽयमित्यादिष्टे सति अभयः प्राह-'हे तात! यद्येष मुच्येत तर्हि अपहृतं धनं सर्वमपि प्रत्यर्पयेत्, अन्यथा न तद्ग्रहीतुं शक्यते, मयापि चायं बंधूकृत्य गृहीतोऽस्ति, न पुनर्बुद्ध्या। अथासौ पुनर्वैराग्यवासितमानसः सन् दीक्षां ग्रहीतुमिच्छति, तस्मान्नायं वधमर्हति। ततस्तेन चौरेणापहृतं सर्वमपि धनं दर्शितं, राज्ञा च तद्द्रव्यं यथास्वं पौरेभ्यो दत्तं। तदनंतरं श्रेणिकनृपकृतनिष्क्रमणमहोत्सवः परित्यक्तविभवदारपरिवारो रौहिणेयश्चौरो नागरैः स्तूयमानः श्रीवीरप्रभोः पार्श्वे विधिना व्रतं गृहीत्वा स्वयं पूर्वाचरितदुराचारशुद्धये विविधतपांसि तप्त्वा आमयं शुद्धधर्ममाराध्य प्रांतेऽनशनं विधाय स्वर्गं जगाम। इति श्रीभगवद्वाणीमाहात्म्ये रौहिणेयवृत्तांतः। तदेवमुक्तं द्वादशभावनास्वरूपं ॥

अथ साधुसंबंधिद्वादशप्रतिमास्वरूपं किंचिन्निगद्यते—

मासाईसत्तंता ७, पढमा ८ बिइ ९ तइय १० सत्तराइदिणा।
अहराइ ११ एगराई १२, भिक्खूपडिमाण बारसगं ॥ ११९ ॥

व्याख्या—प्रथमा मासिकी प्रतिमा, द्वितीया द्वैमासिकी, तृतीया त्रैमासिकी, एवं यावत्सप्तमी सप्तमासिकी प्रतिमा, ततः प्रथमाद्वितीयातृतीयाशब्दैरुपात्ता अष्टमी नवमी दशमी च प्रतिमा एकैका सप्तरात्रिंदिवप्रमाणा, तत एकादशी अहोरात्रिकी

प्रतिमा, द्वादशी चैकरात्रिकी एव। इत्येवं भिक्षुप्रतिमानां साधुप्रतिज्ञाविशेषाणां द्वादशकं भवतीति। तत्र मासिक्यां प्रतिमायामन्नस्य पानस्य च प्रत्येकमेकैकैव अव्यवच्छिन्नदानरूपा दत्तिर्भवेत्, द्वैमासिक्यां दत्तिद्वयं, त्रैमासिक्यां दत्तित्रयं, एवं यावत्सप्तमासिक्यां भक्तस्य पानस्य च सप्त सप्त दत्तयः स्युः। ततः सप्तरात्रिदिनप्रमाणायामष्टम्यां प्रतिमायामपानकेनैकांतरोपवासेनासितव्यं, पारणके चाचाम्लं कर्त्तव्यं, दत्तेर्नियमस्तु नास्ति। तथा ग्रामादिभ्यो वहिरूर्ध्वमुखशयनाद्यासनेन स्थित्वा घोरोपसर्गाः सोढव्याः। ततो नवम्यामपि इदमेवानुष्ठानं, नवरं उत्कटिकत्वाद्यासनेन स्थातव्यं। दशम्यपीदृश्येव, नवरं तस्यां गोदोहिकाद्यासनेन स्थातव्यं। तत एकादश्यपि उक्तस्वरूपैव, केवलं तस्यामपानकं षष्ठभक्तप्रत्याख्यानं कार्यं तथा प्रलंबभुजत्वेन स्थातव्यं। ततो द्वादश्यामपि इदमेव विधानं, नवरमपानकमुपवासत्रयं कार्यं, तथा निर्निमेषनेत्रतया एकपुद्गलगतदृष्टितया लम्बितबाहुतया च स्थातव्यं। एतासां प्रतिपत्ता हि वज्रर्षभनाराच–ऋषभनाराच–नाराच–अर्धनाराचादेरन्यतमसंहननयुक्तो भवति। तथा जघन्यतो नवमपूर्वस्य तृतीयं वस्तु यावत्, उत्कृष्टतस्तु किंचिदूनानि दशपूर्वाणि यावदधिगतसूत्रार्थो भवति। तथा–तवेण १ सुत्तेण २ सत्तेण ३, एगत्तेण ४ बलेण ५ य। तुलणा पंचविहा वुत्ता, पडिमं पडिवज्जओ ॥ १ ॥

इतिगाथोक्तेन तुलनापंचकेन परिकर्मणा प्रागेव भावितात्मा भवति। परिकर्मपरिमाणं चैवं–मासिक्यादिषु सप्तसु या यावत्परिमाणा प्रतिमा तस्यास्तत्परिमाणमेव परिकर्म। तथा वर्षासु नैताः प्रतिपद्यंते, न च परिकर्म करोति। तथा आद्ये द्वे एकत्रैव वर्षे भवतः, तृतीया चतुर्थी च एकैकस्मिन् वर्षे, अन्यासां तु तिसृणामन्यत्र वर्षे परिकर्म अन्यत्र च वर्षे प्रतिपत्तिः।

तदेवं नवभिर्वासरैराद्याः सप्त समाप्यंते । ततोऽष्टम्यादयस्तु तिस्रोऽपि प्रतिमा एकविंशत्या दिवसैः पारं यांति, एकादशी च दिनत्रयेण संपद्यतेऽहोरात्रस्यांते षष्ठभक्तकरणात्, द्वादशी पुनः प्रतिमा रात्रेरनंतरमष्टमकरणाच्चतूरात्रिदिवमाना भवतीति । अत्रान्यदपि बहु वक्तव्यमस्ति तत्तु प्रवचनसारोद्धारादेरवगंतव्यं । इत्युक्तं संक्षेपतो द्वादशमुनिप्रतिमास्वरूपं ॥

अथ लेशत एवाहोरात्रकृत्यं सूच्यते—

शुद्धाचारः साधुः, श्रीजिनवचनानुसारतो नित्यं ।
कुर्यात्क्रमेण सम्यक्, स्वस्याहोरात्रकृत्यानि ॥ १२० ॥

स्पष्टार्थां, नवरं कृत्यक्रमश्चायं–साधुर्निशायाश्चरमे प्रहरे मंदस्वरेण तथा सूत्रार्थपरावर्त्तनादिरूपं स्वाध्यायं करोति यथाऽसंयता न जाग्रति, तदनंतरं तस्यैव प्रहरस्य चतुर्थांशे सावशेषे सति षड्विधमावश्यकं समाचरति, तत उत्कटिकः सन् शरीरपरिभोग्यानां मुखपोतिकाद्युपकरणानां यथाविधि प्रतिलेखनां करोति, प्रतिलेखनासमाप्तिसमकालं चोद्गते सूर्ये वसतिं प्रमार्जयति, ततो वंदनापूर्वकमाचार्यादिकमापृच्छय तदाज्ञया वैयावृत्त्यं स्वाध्यायं वा करोति, न पुनः स्वबुद्ध्या किंचित्कुर्यात् । यदुक्तं–छट्ठट्ठमदसमदुवालसेहिं, मासद्धमासखमणेहिं । अकरंता गुरुवयणं, अणंतसंसारिआ भणिआ ॥ १ ॥ ततश्च किंचिदूनपौरुष्यामुपविष्टः सन् मुखपोतिकां प्रत्युपेक्ष्य पश्चात्पात्राद्युपकरणानि प्रत्युपेक्षते, ततो द्वितीयपौरुष्यां प्राप्तायां पूर्वगृहीतश्रुतस्यार्थं स्मरति, तदनंतरं भिक्षाकाले प्राप्ते सति आगमोक्तविधिना गुर्वाज्ञां गृहीत्वा आवश्यिक्या उपाश्रयान्निष्क्रामति, भिक्षाकाल-

१ 'आविशक्या' 'आवश्यिक्या' इति प्रत्यन्तरपाठौ ।

श्वोत्सर्गतस्तृतीयपौरुषीरूपः, अथवा 'काले कालं समायरे' इत्यागमवचनात् यत्र लोको यदा भुंक्ते तत्र तदानीं स्थविरकल्पिकानां भिक्षाकालो बोध्यः, ततः साधुरव्याक्षिप्तोऽनाकुलोऽशठो युगमात्रन्यस्तदृष्टिः पृष्ठतः पार्श्वतश्चापि दत्तोपयोगः सन् गृहाद् गृहं व्रजन् द्वाचत्वारिंशद्दोषविवर्जितां भिक्षां गृहीत्वा ततो व्यावृत्त्य नैषेधिक्या वसतौ प्रविश्य ईर्यापथिकीं प्रतिक्रम्य यथाविधि अशनादिकं गुरुभ्यो दर्शयित्वा प्रत्याख्यानं च पारयित्वा गृहस्थाद्यालोकवर्जिते सप्रकाशस्थाने स्थित्वा क्षुद्वेदनोपशमार्थं १ वैयावृत्यार्थं २ ईर्याशुद्ध्यर्थं ३ सप्तदशधासंयमपालनार्थं ४ प्राणधारणार्थं ५ स्वाध्यायादिधर्मचिंतार्थं ६ च भुंक्ते। भोजनसमये च सुरसुरादिदोषपंचकं वर्जयति।

यदुक्तं-असुरसुरं १ अचवचवं २, अदुअ ३ मविलंबियं ४ अपरिसाडिं ५। मणवयणकायगुत्तो, भुंजे अहपक्खिवणसोही ॥ १ ॥ ततो मुनिर्बहिर्विचारमात्रकक्षालनस्वाध्यायवैयावृत्त्यादिकार्याणि कृत्वा चतुर्थे प्रहरे जाते सति मुखपोतिकां प्रत्युपेक्ष्य गुरूणां स्वस्य चोपकरणानि प्रत्युपेक्षते, ततः स्वाध्यायादिकं कृत्वा तस्यैव प्रहरस्य चतुर्थे भागे सावशेषे सति उच्चारप्रस्रवणयोः स्थंडिलानि प्रत्युपेक्षते। तदनंतरं मग्नार्धबिंबे सूर्ये गुरोः समक्षमावश्यकं समाचरति। ततः प्रहरं यावत् श्रुतपरावृत्तिरूपं स्वाध्यायं करोति, तदनु सूत्रार्थं स्मरति, ततो निद्राक्षणे गुर्वाज्ञया भुवं संस्तारकं च प्रत्युपेक्ष्य चैत्यवंदनपूर्वकं रात्रिसंस्तारकगाथाः समुच्चार्य रजोहरणं दक्षिणतो विमुच्य मनाक् स्वपिति, न त्वतिनिद्रावशगो भवतीति। तदेवमुक्तानि लेशतोऽहोरात्रकृत्यानि, विस्तरतस्तु सर्वोऽपि साधुसंबंध्यधिकारो ग्रंथांतरादवसेयः ॥

अथ मुनीनामनेकगुणाधारता कथ्यते—

निच्चमचंचलनयणा, पसंतवयणा पसिद्धगुणरयणा ।
जियमयणा मिउवयणा, सव्वत्थ वि सन्निहिअजयणा ॥ १२१ ॥
इरियासमिईपभिई–नियसुद्धायारसेवणे निउणा ।
जे सुयनिहिणो समणा, तेहिं इमा भूसिया पुहवी ॥ १२२ ॥

गाथाद्वयं स्पष्टार्थं । इह सिद्धांतोक्तरीत्या साधुगुणवर्णनं चैवं—

जाइसंपण्णा कुलसंपण्णा बलसंपण्णा रूवसंपण्णा विणयसंपण्णा णाणसंपण्णा दंसणसंपण्णा चरित्तसंपण्णा लज्जासंपण्णा लाघवसंपण्णा मिउमद्दवसंपण्णा पगइभद्दया पगइविणीया ओयंसि तेयंसि वच्चंसि जसंसि जियकोहा जियमाणा जियमाया जियलोहा जियणिद्दा जिइंदिया जियपरिसहा जीवियासमरणभयविप्पमुक्का उग्गतवा दित्ततवा घोरतवा घोरबंभचेरवासिणो बहुस्सुया पंचसमिईहिं समिआ तिहिं गुत्तीहिं गुत्ता अकिंचणा निम्ममा निरहंकारा पुक्खरं व अलेवा संखो इव निरंजणा गयणं व निराल(स)या वाओ व्व अपडिबद्धा कुम्मो इव गुत्तिंदिया विहंगु व विप्पमुक्का भारंडु व अप्पमत्ता धरणि व सव्वंसहा जिणवयणोवदेसणकुसला एगंतपरोवयारनिरया किं बहुणा ? जाव कुत्तियावणभूया एरिसा जिणाणाराहगा समणा भगवंतो नियचरणेहिं महियलं पवित्तयंतो विहरंति त्ति ।

अथैवंविधसाधुप्रभृतिशिष्टजनाराध्यसद्धर्मस्य दुर्लभत्वं दर्श्यते—

जह चिंतामणिरयणं, सुलहं न हु होइ तुच्छविहवाणं ।
गुणविहववज्जियाणं, जियाण तह धम्मरयणं पि ॥ १२३ ॥

व्याख्या—तुच्छविभवानां पशुपालवत्स्वल्पपुण्यानां जीवानां यथा चिंतामणिरत्नं सुलभं सुप्रापं न भवति तथा सम्यक्त्वादिगुणविभववर्जितानामपि जीवानां धर्मरत्नं सुलभं न भवेत्, ये तु जयदेवकुमारवदतुल्यपुण्यगुणभृतः स्युस्ते मणिखानितुल्यायां मनुजगतौ चिंतामणितुल्यममुं सद्धर्मं लभंते इति भावार्थः। इह पशुपालजयदेवयोर्दृष्टांतस्त्वेवं—

हस्तिनापुरे नगरे नागदेवनामा श्रेष्ठी, तस्य वसुंधराभार्याकुक्षिसंभूतो जयदेवनामा पुत्र आसीत्, स च द्वादश वर्षाणि यावद्रत्नपरीक्षाभ्यासं कृतवान्। ततः स शास्त्रोक्त्यनुसारेण चिंतामणिं महाप्रभावमवबुध्य शेषमणीनुपलतुल्यान् गणयन् तस्यैवोपार्जनाय सकलेऽपि पुरे प्रतिहट्टं प्रतिगृहं च भ्रमणं चकार, परं क्वापि तं न लेभे। ततः स खिन्नः सन् स्वपितरौ प्रत्युवाच—'मम चित्तं चिंतामणौ लग्नमस्ति, इह तु स न लभ्यतेऽतोऽहं तदर्थमन्यत्र यामि।' तदा तौ प्रोचतुः—'हे वत्स! एषा खलु कल्पनैवास्ति, न पुनरन्यत्रापि कुत्राचिदयं परमार्थतो विद्यते, तस्मात्त्वं यथेष्टमन्यै रत्नैर्व्यवहरस्व।' तत एवं बहुधोक्तोऽपि जयदेवश्चिंतामणिप्राप्तौ कृतनिश्चयः सन् हस्तिनापुरान्निर्गत्य बहुनगनगरग्रामाकरकर्बटपत्तनसमुद्रतीरेषु तमन्वेषयन् सुचिरं भ्रांतः, परं क्वापि तमलभमानो विमनस्कीभूय स्वमनसि चिंतयामास—'किमिदं सत्यं नास्त्येव यत्क्वापि न दृश्यते'

अथवा शास्त्रोक्तं तस्य मयोरस्तित्वमन्यथा न भवेत्, अतः क्वापि भविष्यति।' इति निश्चित्य स पुनरपि बहुमणिखनीर्विलोकयन् अतिशयेन गवेषणं चकार। तत्र एकदा केनचिद्वृद्धनरेण तस्मै उक्तं-'भो भद्र ! इहैका मणीनां खनिरस्ति तस्यां पुण्यवता नरेण चिन्तामणिः प्राप्यते।' ततो जयदेवस्तद्वचसा तत्र गत्वा चिन्तामणिमन्वेषयामास. तदा तत्रैकस्य मंदबुद्धेः पशुपालस्य हस्तगतं वर्तुलमुपलं दृष्ट्वा तं शास्त्रोक्तलक्षणैश्चिन्तामणिं विज्ञाय स तं ययाचे। तदा पशुपालेनोक्तं-'तवानेन किं कार्यं ?।' वणिक् प्राह-'अहं स्वगृहे गत्वा स्वबालकेभ्यः क्रीडार्थं दास्यामि।' सोऽवादीत्-'अनेकशः पाषाणाः सन्ति, त्वं स्वयमेव किं न गृह्णासि ?।' वणिक् प्राह-'अहं स्वग्रामगमने समुत्सुकोऽस्मि, तस्मादेतं मह्यं देहि ? त्वं पुनरत्र प्रदेशेऽन्यमपि लप्स्यसे।' एवमुक्तोऽपि सोऽपरोपकारशीलत्वेन तस्मै न ददौ, ततो जयदेवेनोपकारबुद्ध्या तस्मै प्रोक्तं-'हे भद्र ! यदि त्वं मम न दत्से, तदा त्वमेवैनं चिन्तामणिमाराधय, येनासौ तुभ्यमपि वाञ्छितं दद्यात्।' पशुपालः प्राह-'यद्येष सत्यं चिन्तामणिरस्ति तर्हि मम चिन्तितं बदरीफलकर्कटिकादिकं शीघ्रं ददातु।' तत ईषद्विहस्य जयदेवः प्रोवाच-'अयं एवं न चिन्त्यते, किं तूपवासत्रयं कृत्वा संध्यासमये भूमिं गोमयेन लिम्पित्वा शुद्धभूभागोपरि प्रदेशे स्थापयित्वा चन्दनकर्पूरकुसुमादिभिः पूजयित्वा प्रणम्य च यदास्य पुरो यदिष्टं चिन्त्यते तत्सर्वमपि प्राप्यते।' इति श्रुत्वा स पशुपालः [illegible] पालयित्वा ग्रामाभिमुखं चलितः। ततो 'निश्चितं हीनपुण्यस्यास्य हस्ते इदं मणिरत्नं न स्थास्यतीति' निश्चित्य जयदेवोऽपि तस्य पृष्ठौ चचाल। अथ पशुपालो मार्गे गच्छन् प्राह-'हे मणे ! अधुना इमाः छागिकाः विक्रीय घृतखाद्यादिकमानीय तव पूजां [illegible] भवन्निमित्तमस्माभिस्त्रय उपवासाः कार्याः, पुनश्च हे मणे ! अद्यापि ग्रामो दूरेऽस्ति अतो मार्गे काचित्कथा कथय

त्वं, चेन्न जानासि तर्हि अहं कथयामि, त्वं शृणु, एकस्मिन्नगरे एकहस्तप्रमाणं देवगृहं, तत्र चतुर्भुजो देवोऽस्ति।' इत्थं पुनः पुनरुक्तोऽपि स मणिर्यावन्न जजल्प तावत्स मूर्खो रुष्टः सन्मणिमुवाच-'अरे त्वं यदि हुंकृतिमात्रमपि मे न ददासि तर्हि वांछितार्थसंपादने तव कीदृशी आशा? अथवा चिंतामणिरिति ते नाम मृषा नास्ति, किं तु सत्यमेव, यतस्त्वत्प्राप्तित एव मनसि चिंता न स्फुटति। किं च योऽहं रब्बातक्रैर्विना क्षणमपि स्थातुं न शक्नोमि सोऽहं त्वदर्थं क्रियमाणेनोपवासत्रिकेण तु मरणमेव प्राप्नुयां, तत एवं मन्येऽनेन वणिजा मम मारणहेतोस्त्वं वर्णितोऽसि, तस्मात्त्वं तत्र गच्छ यत्र पुनर्मे दृष्टिगोचरो न भवेः' इत्युक्त्वा तेन स मणिर्दूरे प्रोत्सारितः। तदानंदितो जयदेवः सद्यः प्रणतिपूर्वकं चिंतामणिं गृहीत्वा संपूर्णमनोरथः सन् निजनगराभिमुखं चचाल। मार्गे च महापुरे नगरे मणिप्रभावादुल्लसितविभवसंभारः स कुमारः सुबुद्धिश्रेष्ठिनः पुत्रीं रत्नवतीनाम्नीं परिणीय बहुपरिकरसंयुक्तो हस्तिनापुरं संप्राप्तः, स्वमातापित्रोश्चरणेषु प्रणतश्च। तदा तादृशसमृद्धियुक्तं तं विलोक्यानंदितौ मातापितरौ तस्य बहुप्रशंसां चक्रतुः, स्वजनाः सन्मानं विदधुः, शेषजनाश्च स्तवनां चक्रुः, स्वयं च यावज्जीवं सुखी जातः। इति धर्मरत्नप्राप्तौ पशुपालजयदेवयोरुपनयः। इत्युक्तं सप्रसंगं छद्मस्थाश्रितसर्वविरतिस्वरूपं॥

इत्थं स्वरूपं परमात्मरूप-निरूपकं चित्रगुणं पवित्रं। सुसाधुधर्मं परिगृह्य भव्या, भजंतु दिव्यं सुखमक्षयं च॥१॥

प्राक्तनसद्ग्रंथानां, पद्धतिमाश्रित्य वर्णितोऽत्र मया। साध्वाचारविचारः, शुद्धो निजकात्मशुद्धिकृते॥२॥

॥ इति श्रीमद्बृहत्खरतरगच्छाधीश्वरजिनभक्तिसूरींद्रपदपद्मसमाराधकश्रीजिनलाभसूरिसंगृहीते आत्मप्रबोधग्रंथे संक्षेपतः सर्वविरतिवर्णनो नाम तृतीयः प्रकाशः समाप्तः॥

# ॥ अथ चतुर्थः प्रकाशः ॥

तत्र परमात्मता द्विधा, भवस्थपरमात्मता सिद्धपरमात्मता च । तयोः प्राप्तिप्रकारसूचकं चेदमार्याद्वयं—

क्षपकश्रेण्यारूढः, कृत्वा घनघातिकर्मणां नाशं ।
आत्मा केवलभूत्या, भवस्थपरमात्मतां भजते ॥ १२४ ॥
तदनु भवोपग्राहक-कर्मसमूहं समूलमुन्मूल्य ।
ऋजुगत्या लोकाग्रं, प्राप्तोऽसौ सिद्धपरमात्मा ॥ १२५ ॥

व्याख्या—आत्मा चेतनः क्षपकश्रेणिं समारूढः सन् घनघातिकर्मणां ज्ञानावरणीय १ दर्शनावरणीय २ मोहनीय ३ अंतराय ४ लक्षणानां चतुर्णामात्मगुणघातककर्मणां नाशं कृत्वा सद्यः प्राप्तया समस्तलोकालोकप्रकाशककेवलज्ञानकेवलदर्शनसंपत्त्या भवस्थपरमात्मतां भजते प्राप्नोतीत्यर्थः ॥ १ ॥ तदनु ततः पश्चादसावेवात्मा सद्यः कियता कालेन वा चतुर्दशगुणस्थानचरमसमये भवोपग्राहककर्मणां वेदनीया १ यु २ नाम ३ गोत्र ४ लक्षणानां चतुर्णामाभवस्थायिनां कर्मणां समूहं समूलमुन्मूल्य मूलत एव विनाश्य ऋजुगत्या समयांतरप्रदेशांतरास्पर्शनेन लोकाग्रं सिद्धिस्थानं प्राप्तः सन् सिद्धपरमात्मा

भवति सिद्धपरमात्मतां प्राप्नोतीत्यर्थः ॥ २ ॥

इह भवस्थपरमात्मतायाः स्थितिमानं जघन्यतोऽन्तर्मुहूर्त्तं, उत्कर्षतो देशोना पूर्वकोटिः, सिद्धपरमात्मतायास्तु साद्यपर्यवसितः काल इति बोध्यं। एवंरूपा परमात्मता येषां विद्यते ते परमात्मान उच्यंते, ते च भवस्थकेवलिनः सिद्धाश्चेति द्विविधा एव। तत्र तावद्भवस्थकेवलिनां स्वरूपं किंचिद्दर्श्यते-भवस्थकेवलिनो हि द्विधा जिना अजिनाश्च। तत्र जिना जिननामकर्मोदयिनस्तीर्थंकराः १ अजिनाः सामान्यकेवलिनः २। जिनाः पुनर्निक्षेपभेदतश्चतुर्धा-नामजिनाः १ स्थापनाजिनाः २ द्रव्यजिनाः ३ भावजिनाश्चेति ४। तेषां स्वरूपं त्विदं—

नामजिणा जिणनामा, ठवणजिणा जिणंदपडिमाओ।
दव्वजिणा जिणजीवा, भावजिणा समवसरणत्था ॥ १२६ ॥

व्याख्या—तत्र जिनानां ऋषभाजितसंभवादीनि यानि नामानि ते नामजिना उच्यंते, ते च साक्षाज्जिनगुणवर्जिता अपि परमात्मगुणस्मरणादिहेतुत्वेन परमार्थसिद्धिविधायकत्वात्सुदृष्टि[कत्वात्सुदृष्टि]भिः सर्वदा स्मर्त्तव्या एव। दृश्यते च लोकेऽपि मंत्राक्षरस्मरणाज्जायमाना कार्यसिद्धिरिति १। तथा रत्नस्वर्णरजतादिमय्यः कृत्रिमा अकृत्रिमा वा या जिनेंद्रप्रतिमास्ते स्थापनाजिना उच्यंते। तेष्वपि च साक्षाज्जिनगुणा यद्यपि न विद्यंते तथापि ते तात्त्विकजिनस्वरूपस्मारकत्वात्पश्यतां सम्यग्दृष्टीनां चित्ते परमशांतरसोत्पादकत्वादबोधिजंतूनां सद्बोधिप्राप्तिहेतुभूतत्वात् केवलिवचनैर्जिनतुल्यत्वाच्च शुद्धमार्गानु-

सारिभिः श्राद्धैर्द्रव्यतो भावतश्च सर्वदा निःशंकमेव वंदनीयाः पूजनीयाः स्तवनीयाश्च । साधुभिस्तु सर्वसावद्ययोगनिवृत्तत्वेन भावपूजैव कर्त्तव्या, तथैवागमे प्रतिपादितत्वादिति । इह केचित्सुबुद्धिहीना ऐदंयुगीनाः श्रीवीरपरंपरातो बहिर्भूता मिथ्यात्वोदयपराभूताः स्वमतिकल्पितार्थसमारोपकाः श्रीमज्जिनोक्तानेकांतधर्मविलोपकाः प्रादुष्कृतदुष्टवाग्विलासास्तत्त्वतो जैनाभासाः श्रीमत्परमगुरुवचनोत्थापनजन्यानंतभवभ्रमणभयमवगणय्य स्वगृहीतासत्पक्षस्थिरीकरणार्थं मुग्धजनानां पुरस्तादुत्सूत्रप्ररूपणां कुर्वंतः प्रवदंति यत्स्थापनाजिना ज्ञानादिगुणशून्यत्वान्न वंदनादियोग्याः, तद्वंदने हि सद्यः सम्यक्त्वनाशः स्यात्, आगमेऽपि तद्वंदनाद्यधिकारो नास्ति, किं बहुना ? आधुनिकैरेव स्वमाहात्म्योद्भावनार्थं जिनचैत्यस्थापना कृतास्ति । किं च तत्पूजनादौ साक्षाज्जीवहिंसा दृश्यते, यत्र च जीवहिंसा स्यात्तत्र न धर्मो, धर्मस्य दयामूलत्वाभिधानात्, तस्मान्निजसम्यक्त्वमक्षतं रक्षितुमिच्छतां प्राणिनां तद्दर्शनमपि कर्तुमयुक्तं, यत्पुनः पूर्वजादिसंतुष्ट्यर्थं पिप्पलादिवृक्षमूले सचित्तजलसेचनादौ मिथ्यात्विदेवपूजादौ च प्रवर्त्तनं तत्र न सम्यक्त्वनाशः, श्राद्धानां संसारितया एतादृशकार्येष्वधिकृतत्वादित्यादि । अथात्रागमोक्तिमनुसृत्य सद्भूत्या तदसत्पक्षनिराकरणाय किंचित्प्रतिवचनमुच्यते–तत्र तावत्स्थापनाजिनानां तात्त्विकजिनस्वरूपस्मारकत्वादिप्राग्दर्शितयुक्तत्वं प्रत्यक्षादिप्रमाणसिद्धमस्ति, अतस्तेषां सर्वथा गुणशून्यत्वाभावाद्वंदनादियोग्यत्वमेव, तद्दर्शनवंदनादिना हि शुभध्यानप्रादुर्भावात्प्राणिनां सम्यक्त्वस्य नैर्मल्यं संपद्यते, तस्मात्तेषां सम्यक्त्वनाशः स्यादित्युक्तिः सर्वथा मिथ्यात्वमूलिकैवेति न सुधीभिरादर्त्तव्या । किं च यत्र चित्रलिखितापि स्त्री भवति तत्र साधूनामवस्थानमाचारांगादौ निषिद्धमस्ति, साक्षात्स्त्रीगुणवर्जिताया अपि तस्या आकृतिमात्रेणैव विकारकारणत्वात् । ततो यदि तस्या दर्शनाद्विकारः समुत्पद्यते तर्हि

भवति सिद्धपरमात्मतां प्राप्नोतीत्यर्थः ॥ २ ॥

इह भवस्थपरमात्मतायाः स्थितिमानं जघन्यतोऽन्तर्मुहूर्त्तं, उत्कर्षतो देशोना पूर्वकोटिः, सिद्धपरमात्मतायास्तु साद्यपर्यवसितः काल इति बोध्यं। एवंरूपा परमात्मता येषां विद्यते ते परमात्मान उच्यंते, ते च भवस्थकेवलिनः सिद्धाश्चेति द्विविधा एव। तत्र तावद्भवस्थकेवलिनां स्वरूपं किंचिद्दर्श्यते–भवस्थकेवलिनो हि द्विधा जिना अजिनाश्च। तत्र जिना जिननामकर्मोदयिनस्तीर्थंकराः १ अजिनाः सामान्यकेवलिनः २। जिनाः पुनर्निक्षेपभेदतश्चतुर्धा–नामजिनाः १ स्थापनाजिनाः २ द्रव्यजिनाः ३ भावजिनाश्चेति ४। तेषां स्वरूपं त्विदं—

नामजिणा जिणनामा, ठवणजिणा जिणंदपडिमाओ।
दव्वजिणा जिणजीवा, भावजिणा समवसरणत्था ॥ १२६ ॥

व्याख्या—तत्र जिनानां ऋषभाजितसंभवादीनि यानि नामानि ते नामजिना उच्यंते, ते च साक्षाज्जिनगुणवर्जिता अपि परमात्मगुणस्मरणादिहेतुत्वेन परमार्थसिद्धिविधायकत्वात्सुदृष्टि[कत्वात्सुदृष्टि]भिः सर्वदा सत्तव्या एव। दृश्यते च लोकेऽपि मंत्राद्यक्षरस्मरणाज्जायमाना कार्यसिद्धिरिति १। तथा रत्नस्वर्णरजतादिमय्यः कृत्रिमा अकृत्रिमा वा या जिनेंद्रप्रतिमास्ते स्थापनाजिना उच्यंते। तेष्वपि च साक्षाज्जिनगुणा यद्यपि न विद्यंते तथापि ते तात्त्विकजिनस्वरूपस्मारकत्वात्पवित्रतां गम्यदृष्टीनां चित्ते परमशांतरसोत्पादकत्वाद्बोधिजंतूनां सद्बोधिप्राप्तिहेतुभूतत्वात् केवलिवचनैर्जिनतुल्यत्वाच्च शुद्धमार्गानु-

सारिभिः श्राद्धैर्द्रव्यतो भावतश्च सर्वदा निःशंकमेव वंदनीयाः पूजनीयाः स्तवनीयाश्च । साधुभिस्तु सर्वसावद्ययोगनिवृत्तत्वेन भावपूजैव कर्त्तव्या, तथैवागमे प्रतिपादितत्वादिति । इह केचित्सुबुद्धिहीना ऐदंयुगीनाः श्रीवीरपरंपरातो बहिर्भूता मिथ्यात्वोदयपराभूताः स्वमतिकल्पितार्थसमारोपकाः श्रीमज्जिनोक्तानेकांतधर्मविलोपकाः प्रादुष्कृतदुष्टवाग्विलासास्तत्त्वतो जैनाभासाः श्रीमत्परमगुरुवचनोत्थापनजन्यानंतभवभ्रमणभयमवगणय्य स्वगृहीतासत्पक्षस्थिरीकरणार्थं मुग्धजनानां पुरस्तादुत्सूत्रप्ररूपणां कुर्वंतः प्रवदंति यत्स्थापनाजिना ज्ञानादिगुणशून्यत्वान्न वंदनादियोग्याः, तद्वंदने हि सद्यः सम्यक्त्वनाशः स्यात्, आगमेऽपि तद्वंदनाद्यधिकारो नास्ति, किं बहुना ? आधुनिकैरेव स्वमाहात्म्योद्भावनार्थं जिनचैत्यस्थापना कृतास्ति। किं च तत्पूजनादौ साक्षाज्जीवहिंसा दृश्यते, यत्र च जीवहिंसा स्यात्तत्र न धर्मो, धर्मस्य दयामूलत्वाभिधानात्, तस्मान्निजसम्यक्त्वमक्षतं रक्षितुमिच्छतां प्राणिनां तद्दर्शनमपि कर्त्तुमयुक्तं, यत्पुनः पूर्वजादिसंतुष्ट्यर्थं पिप्पलादिवृक्षमूले सचित्तजलसेचनादौ मिथ्यात्विदेवपूजनादौ च प्रवर्त्तनं तत्र न सम्यक्त्वनाशः, श्राद्धानां संसारितया एतादृशकार्येष्वधिकृतत्वादित्यादि । अथात्रागमोक्तिमनुसृत्य सन्न्यायुक्त्या तदसत्पक्षनिराकरणाय किंचित्प्रतिवचनमुच्यते–तत्र तावत्स्थापनाजिनानां तात्त्विकजिनस्वरूपस्मारकत्वादिप्राग्दर्शितसद्धर्मयुक्तत्वं प्रत्यक्षादिप्रमाणसिद्धमस्ति, अतस्तेषां सर्वथा गुणशून्यत्वाभावाद्वंदनादियोग्यत्वमेव, तद्दर्शनवंदनादिना हि सद्यः शुभध्यानप्रादुर्भावात्प्राणिनां सम्यक्त्वस्य नैर्मल्यं संपद्यते, तस्मात्तेषां सम्यक्त्वनाशः स्यादित्युक्तिः सर्वथा मिथ्यात्वमूलिकैवेति न सुधीभिरादर्त्तव्या । किं च यत्र चित्रलिखितापि स्त्री भवति तत्र साधूनामवस्थानमाचारांगादौ निषिद्धमस्ति, साक्षात्स्त्रीगुणवर्जिताया अपि तस्या आकृतिमात्रेणैव विकारकारणत्वात् । ततो यदि तस्या दर्शनाद्विकारः समुत्पद्यते तर्हि

परमशांतरसानुकूलसौम्याकारधारिण्याः श्रीजिनप्रतिमाया दर्शनात्सुबुद्धीनां सद्ध्यानसंभवः किं न स्यात् ? अर्थात्स्यादेवेति सुधीभिर्विवेकतो विभाव्यं । यत्पुनस्तैरागमेषु जिनचैत्यवंदनाद्यधिकारस्य नास्तित्वमुक्तं, चैत्यस्थापनायाश्चाधुनिकत्वं दर्शितं पूजायाश्च हिंसारूपत्वेनाधर्मत्वमुक्तं, वृक्षादिसेचनमिथ्यात्विदेवपूजनादौ च सम्यक्त्वस्याविध्वंसः प्रोक्तस्तदपि सर्वमुन्मत्तप्रलपनमिव सर्वथैवायुक्तं, यत आगमेषु स्थाने स्थाने जिनचैत्यवंदनपूजनाद्यधिकारो विद्यते, अत एव च तत्स्थापनाया अपि प्राचीनत्वं सिद्धं । पूजायाश्च यद्यधर्मत्वं स्यात्तर्हि आगमोक्तं हितसुखमोक्षादिफलत्वं विरुध्येत, अधर्मस्य तु प्रतिपदं तिर्यग्नरकगत्यादिफलत्वाभिधानात् । तथा पिप्पलादिमूले सचित्तजलसेचनादिविधानं च जिनधर्मश्रद्धाया एव विरोधित्वेन स्पष्टं मिथ्यात्विनामेव कार्यमिति प्रतीतमेव । तथा सम्यक्त्विनामन्यदेववंदनादेस्तु राजाभियोगाद्याकारेभ्योऽन्यत्रागमे सर्वथैव परिहारः प्रोक्तोऽस्ति, तत उत्सर्गतस्तद्विधानेन सम्यक्त्वनाश एव स्यादिति । अथोक्तार्थस्यैव प्रतिपादि (द) कानि कतिचिदागमवचनानि दर्श्यन्ते । तत्र तावद् ज्ञाताधर्मकथासूत्रोक्तिर्यथा—तए णं सा दोवई रायवरकण्णा ण्हाया कयबलिकम्मा कयकोउयमंगलपायच्छित्ता सुद्धप्पावेसाइं मंगलाइं वत्थाइं पवरपरिहिआ मज्जणघराओ पडिनिक्खमइ, जेणेव जिणहरे तेणेव उवागच्छइ, २ जिणहरं अणुपविसइ, आलोए पणामं करेइ, लोमहत्थयं परामुसई २ एवं जहा सूरियाभे जिणपडिमाओ अच्चेइ तहेव भाणिअव्वं, जाव धूवं डहइ, वामं जाणुं अंचेइ २ दाहिणं जाणुं धरणितलंसि निहट्टु तिक्खुत्तो मुद्धाणं धरणितलंसि निअंसेइ, ईसिं पच्चुन्नमइ, करयल जाव कट्टु एवं वयासी—नमो त्थु णं अरिहंताणं जाव संपत्ताणं वंदइ नमंसइ २ जिणहराओ पडिनिक्खमइ त्ति । राजप्रश्नीयोपांगेऽप्युक्तं—तए णं से सूरिआभे देवे पोत्थयरयणं गिण्हइ २ त्ता पोत्थयरयणं विहा-

डित्ति २ त्ता पोत्थयरयणं घाएत्ति २ त्ता धम्मियं ववसायं पडिगिण्हइ २ त्ता पोत्थयरयणं पडिनिक्खमंति २ त्ता सिंहासणाओ अब्भुट्ठेइ २ त्ता ववसायसभाओ पुरिच्छिमल्लदारेणं पडिनिक्खमइ २ त्ता जेणेव णंदापुक्खरिणी तेणेव उवागच्छइ २ त्ता णंदापुक्खरिणीए पुरिच्छिमल्लेणं तोरणेणं तिसोवाणपडिरूवेणं पच्चोरुहइ २ त्ता तत्थ हत्थपायं पक्खालेइ २ त्ता आयंते चोक्खे परमसुइभूए एगं महं रययामयं विमलसलिलपुण्णं मत्तगयमुहागिइकुंभसमाणं भिंगारं परिगिण्हइ २ त्ता जाइं तत्थ उप्पलाइं जाव सतपत्ताइं सहस्सपत्ताइं ताइं गिण्हइ २ त्ता णंदाओ पुक्खरिणीओ पच्चोरुहइ २ त्ता जेणेव सिद्धायतणे तेणेव पहा-रेत्थगमणाए इत्यादि जाव बहुहिं य देवेहिं य देवीहिं य सद्धिं संपरिवुडे सवड्ढीए जाव वाइयरवेणं जेणेव सिद्धायतणे तेणेव उवागच्छइ, सिद्धायतणं पुरिच्छिमिल्लेणं दारेणं अणुपविसइ २ त्ता जेणेव देवच्छंदए जेणेव जिणपडिमा तेणेव उवा-गच्छइ, जिणपडिमाणं आलोए पणामं करेइ २ त्ता लोमहत्थगं परामुसइ २ त्ता लोमहत्थगं गिण्हइ २ त्ता जिणपडिमाओ लोमहत्थेणं पमज्जइ २ त्ता जिणपडिमाओ सुरहिणा गंधोदएणं ण्हाएइ २ त्ता सरसेणं गोसीसचंदणेणं गायाइं अणु-लिंपइ २ त्ता जिणपडिमाणं अहयाइं देवदूसजुअलाइं निअंसेइ २ त्ता अग्गेहिं वरेहिं गंधेहिं अच्चेइ २ त्ता पुप्फारुहणं मल्लारुहणं वण्णारुहणं चुण्णारुहणं वत्थारुहणं आभरणारुहणं करेइ २ त्ता आसत्तोसत्त विउलवट्टवग्घारिअमल्लदामकलावं करेइ २ त्ता जाव करग्गहगहिअकरयलपब्भट्ठविप्पमुक्केणं दसद्धवण्णेणं कुसुमेणं मुक्कपुप्फपुंजोवयारकलिअं करेइ २ त्ता जिणपडिमाणं पुरओ अच्छेहिं सण्हेहिं रययामएहिं अच्छरसातंडुलेहिं अट्ठट्ठ मंगले आलिहइ। तं० सुत्थिअ १ सिरिवच्छ २ नंदिआवत्त ३ वद्धमाण ४ वरकलस ५ महासण ६ मच्छ ७ दप्पण ८। तयाणंतरं च णं चंदप्पभरयणवइरवे-

रुलियविमलदंडकंचणमणिरयणभत्तिचित्तं कालागरुपवरकुंदुरुक्कतुरुक्कधूवमघमघंतगंधुत्तमाणुविद्धं धूमवट्टिं विणिम्मुयंतं वेरुलियमयं कडुच्छुअं पग्गहिअ पयत्तेणं धूवं दाऊण जिणवराणं अट्ठसयविसुद्धगंथजुत्तेहिं महावित्तेहिं अत्थजुत्तेहिं अपुणरुत्तेहिं संथुणइ २ त्ता सत्तट्ठपयाहिं ओसरइ २ त्ता वामं जाणुं अंचेइ २ त्ता दाहिणं जाणुं धरणितलंसि निहट्टु तिक्खुत्तो मुद्धाणं धरणितलंसि निवाडेइ ईसिं पच्चुण्णमइ २ त्ता करयलपरिग्गहिअं सिरसावत्तं दसनहं मत्थए अंजलिं कट्टु एवं वयासी–नमो त्थु णं अरिहंताणं जाव ठाणं संपत्ताणं त्ति कट्टु वंदइ नमंसइ त्ति। तथा जीवाभिगमोपांगेऽपि विजयदेववक्तव्यतायामयमेवालापको विजयदेवाभिलापेन प्रोक्तोऽस्ति, स तत्र एव बोध्यः। एवंविधेषु बहुष्वालापकेषु सम्यक्त्वदेवमनुष्याचरितजिनपूजाधिकारस्य साक्षाद्दर्शनात्कथं तन्नास्तित्वं वक्तुं शक्यते सम्यक्त्विभिः? इति विवेकिभिर्भाव्यं। यत्तु इहाधिकारे तैर्जैनाभासैः स्वयं मिथ्यादृष्टित्वेनापरानपि मिथ्यादृष्टितया विलोकमानैः सम्यक्त्ववत्या अपि द्रौपद्या मिथ्यादृष्टित्वमुक्तं। तथा जिनगृहशब्दस्य सिद्धायतनशब्दस्य च मौलमर्थमुन्मूल्य कामदेवयक्षादिगृहरूपो नवीनोऽर्थः प्ररूपितस्तत्रोच्यते–यदि द्रौपद्या मिथ्यादृष्टित्वेन कामदेवपूजा कृता भवेत्तथा सूर्याभप्रभृतिदेवैर्यक्षादिपूजा कृता भवेत्तर्हि ते द्रव्यपूजांते नमो त्थु० इत्यादि शक्रस्तवनं कथं पठेयुः? तत्पाठस्तु आगमे साक्षाद् दृश्यते, इति कथं तदपलापः कर्तुं शक्यः? तथा वैमानिकादिदेवाः स्वतो हीनपुण्यानां यक्षादीनां पूजनं कथं कुर्युः? इति। किं च यदि द्रौपदी श्राविका न भवेत्तर्हि नारदे आगतेऽभ्युत्थानादिकमकरिष्यत्, तदकरणाच्च सा नियमात् श्राविकैवेति। तथा श्राविकां विना प्रायेणेत्थं शक्रस्तवादिविधिपरिज्ञानमपि न संभवतीत्यादि सुधीभिर्विचार्यम्। यत्पुनस्तैरुक्तं–सूर्याभदेवेन स्वराजधान्यां मांगल्यार्थं जिनप्रतिमा पूजितेति, तत्रोच्यते–सूत्रे तु

अयं पाठो,नास्ति, किं तु तत्र सूत्रे किल पूजामाश्रित्य हियाए खेमाए निस्सेयसाए आणुगामियत्ताए भविस्सइ इति पाठो विद्यते, तत्र निःश्रेयसशब्दो मोक्षार्थवाचकः सर्वशास्त्रप्रसिद्धोऽस्ति, ततश्च श्रीमदर्हद्वचनात्क्रमेण पूजाया मोक्षफलत्वं विज्ञाय वितथेषु यदृच्छावादिनां वचनेषु कथं विश्वासः क्रियते ? इति। पुनः पूजामाश्रित्य तैरुक्तं-भगवता हिंसा निषिद्धास्ति अतः सा कथं समाचर्यते ? इति। तत्रैवं वक्तव्यं-अस्माभिः क्व निगद्यते हिंसा कर्तव्येति। परं भगवता जिनपूजा कुत्रागमे निषिद्धास्ति ? तद्वदत, आगमे तु प्रत्युत सप्तदशविधा पूजा बहुषु प्रदेशेषु विधेयतयोक्तास्ति। किं च श्रीप्रश्नव्याकरणसूत्रे प्रथमसंवरद्वारे यानि अहिंसायाः षष्टिनामानि (६०) प्रोक्तानि तेषु पूजा गृहीतास्ति। तथाहि-निव्वाणं १ निव्वुई २ समाही ३ संती ४ इत्यादि यावत् जण्णो ४६ आयत्तणं ४७ जयण ४८ मप्पमाओ ४९ आसासो ५० वीसासो ५१ अभओ ५२ सव्वस्स वि अनाघाओ ५३ चोक्ख ५४ पवित्ती ५५ सुई ५६ पूया ५७ विमलप्पभा ५८ सई ५९ निम्मलतरि त्ति ६०। एवमाईणि नियगुणनिम्मियाइं पज्जवनामाणि होंति, अहिंसाए भगवईए त्ति। इहाहिंसानामसु जण्णशब्देन पूयाशब्देन च देवपूजा गृहीतास्ति, यजनं यज्ञ इत्यादिव्युत्पत्तेः, ततो भवद्भिः सा कथं हिंसायां गण्यते ? अन्यच्च सूत्रकृदंगेऽ[न]र्थदंडाधिकारे 'नागहेऊं भूयहेऊं' इत्यादिपाठे नागभूतयक्षादिहेतुपूजाया हिंसात्वमुक्तमस्ति, न पुनर्जिनपूजायाः, यदि तस्या अपि हिंसात्वं स्यात्तर्हि सूत्रे 'जिणहेउं' इत्यपि पठेत्, तत्तु न दृश्यते, इति कथं सूत्रवचनमुत्थाप्य भवद्वचनं स्वीक्रियते ? इति। यत्पुनस्तैरुक्तं जिनपूजायां षट्कायारंभसंभवात् श्रावकैः कथं तदाचरणं क्रियते? इति। तत्रैवं वक्तव्यं-जिनधर्मस्याऽनेकांतरूपत्वात्सम्यक्तिनामेकांतपक्षग्रहो न भवति, अत एव ज्ञानत्रयवतापि मल्लिनाथजिनेन स्वषण्मित्राणां प्रतिबोधनाय स्वर्णपुत्त-

लिकायां प्रत्यहं कवलप्रक्षेपः कृतः, तथा सुबुद्धिमंत्रिणा स्वस्वामिनृपप्रतिबोधाय परिखाजलपरावर्त्तः कारितः। पुनरप्यागमेषु बहुहस्त्यश्वरथपदातिप्रभृतिपरिकरोपेतकूणिकादिनृपसमाचरितजिनवंदनादिमहोत्सवः प्रतिपदं श्रूयते। एतेषु कार्येषु च नहीं हिंसा जाता, परं तस्या लाभकारणत्वाद्दूषणा न कृता। ततश्च जिनाज्ञामाश्रित्य सम्यग्यतनया भक्त्या च सत्क्रियाकरणे हि न कोऽपि हिंसादोषो, यत्र हिंसा तत्र न जिनाज्ञेत्येवमुच्यते चेत्तर्हि साधूनां प्रतिक्रमणविहारादावपि जिनाज्ञा न स्यात्तत्रापि हिंसायाः संभवात्, तस्मादयं श्रुतव्यवहारोऽस्ति यज्जिनाज्ञानिमित्तं निरवद्यपरिणामैर्यतनया च प्रवर्त्तनं, तत्र न तादृक्कर्मबंध इति। अयं चार्थः श्रीमद्भगवत्यंगेऽष्टादशशतस्याष्टमोद्देशके विस्तरतो बोध्यः, तत्र हि भावितात्मनोऽनगारस्य युगमात्रदृष्ट्या प्रेक्ष्य प्रेक्ष्य गमनं कुर्वतश्चरणतले कुर्कुटकुलिंगादिरालग्नेन्म्रियेत, तर्हि तस्य हिंसापरिणामाभावादीर्यापथिक्येव क्रिया भवेन्न तु सांपराय(यि)कीत्याद्यधिकारोऽस्तीति। यच्च पूजायां पुष्पाद्यारंभो दृश्यते तस्य तु औपचारिकत्वात्सद्भावेन परिहारो भवति। किं च यथा मुनीनां जलोत्तारणसमये जलोपरि करुणारंभो भवति तथा श्रावकाणामपि जिनपूजायां पुष्पाद्युपरि करुणापरिणामो भवतीति हिंसानुबद्धक्लिष्टपरिणामाभावात्साधूनामिव तेषामपि न तदा दुष्कर्मबंधः। पुनर्यथा व्रणच्छेदनसमये प्राणिनां वेदनासंभवेऽपि प्रांते महासुखं समुत्पद्यते तथा पूजायामपि स्वल्पमात्रारंभे सत्यपि परिणामविशुद्ध्या क्रमेण परमानंदपदप्राप्तिर्जायते। ननु यद्येवं तर्हि साधुर्द्रव्यपूजां किं न कुर्यात्? इति चेदुच्यते–द्रव्यपूजा हि रोगिणामौषधमिवारंभमग्नानां प्राणिनां महोपकारकारिणी विद्यते, अतः सा तेषामेव योग्या, न पुनः सर्वारंभविमुक्तत्वेन निरोगीभूतानां साधूनां, अत एव च तेषामनुकंपादानादिकमप्यागमे जिनैर्नानुज्ञातमिति। यत्तु दशमांगे धर्मार्थादिहेतोर्हिंसाकर्त्तुर्मंदबुद्धित्वमुक्तं, तत्रायं भावः–सिद्धांते किल देशविरतिः

श्रावको बालपंडितः प्रोक्तोऽस्ति, न त्वेकांतपंडितस्ततस्तस्यापि देशतो बालत्वमस्त्येव, अतः सांसारिककार्येषु प्रवर्त्तमानस्य तस्य द्रव्यपूजादिधर्मकार्यनिषेधः कथं स्यादिति विवेकिभिर्भाव्यं । यद्वा आस्तामेषा युक्तिः, किं तु पापाचारनरानाश्रित्यैवेदं मंदबुद्धित्वमुक्तमस्ति न त्वन्यान्, यतस्तत्रैव हिंसाकर्त्तुर्द्वारि शौकरिकमत्स्यबंधाद्यशुभपरिणामाः पापरूचय एव जीवास्तादृग्हिंसाकारका उक्ताः संति, न तु शुभपरिणामा जिनगृहादिकारकाः श्राद्धा अपीति । यत्पुनस्तैरुक्तं प्रतिमाया एकेंद्रियदलत्वेन तद्वंदनाद्ययुक्तमित्यादि तत्रैवं वक्तव्यं—श्रीजिनेंद्रैस्तु जिनबिंबानि जिनप्रतिमाशब्देनोच्चरितानि, तद्देवगृहाणि च जिनगृहशब्देन सिद्धायतनशब्देन चोच्चरितानि, ततो यूयं भवभ्रमणभयमवगणय्य किमर्थमीदृक्कठोरवचनं वदथ ? किं च युष्माभिरपि दिक्संमुखीभूय वंदनादि क्रियते सा दिक् तु अजीवरूपास्ति, ततः किं भवन्मते तदभिमुखीभवनेनेति ? यदि दिग्वंदनसमयेऽस्माकं मनसि सिद्धादयः संतीति यूयं वदिष्यथ तर्हि जिनप्रतिमावंदनकालेऽपि मनसि सिद्धादयः संति भावापेक्षया न्यायस्योभयत्र समानत्वात्, ततो न कथमपि तन्निषेधः कर्त्तुं युक्तः । अन्यच्च सूत्रे गुरूणामासनस्याशातना वर्जनीया प्रोक्तास्ति, तदासनं तु पट्टादि अजीवरूपं विद्यते, परं गुरुसंबंधितया स्थापितत्वात्तस्य यो बहुमानादिः क्रियते स तत्त्वतो गुरूणामेव भवति, तद्वज्जिनप्रतिमानामपि बहुमानादिर्वस्तुतः सिद्धानामेव । तथा पुनः सुधर्मसभायां जिनदंष्ट्राः संति, तासां चाजीवस्कंधरूपत्वेऽपि सिद्धांते वंदनीयत्वं पूजनीयत्वमनाशातनीयत्वं च प्रोक्तमस्ति, ततो जिनमुद्राया वंदनादियोग्यत्वे कः संदेहः ? तथा पंचमांगस्यादौ 'णमो बंभीए लिवीए' इतिवाक्येन सुधर्मस्वामिभिः स्वयमपि अक्षरविन्यासरूपाया लिपेर्यदि नमस्कारो विहितस्तर्हि तद्वचनानुसारिणां प्राणिनां लिपेरिव जिनप्रतिमाया अपि नमस्करणे को दोषः संसज्यते ? स्थापना-

स्यापेक्षयात्र समानत्वात्। किं च यदा त्रैलोक्यस्वामिनो भगवंतः समवसरणे स्वमूलरूपेण पूर्वाभिमुखीभूय सिंहासने उपविशंति, तदा देवास्तत्कालं भगवत्समानाकारमेव प्रतिबिंबत्रयं विधाय शेषासु दिक्षु सिंहासनोपरि स्थापयंति, तस्मिन्नवसरे सर्वेऽपि साधुश्रावकादयो भव्यजनाः प्रदक्षिणादानपूर्वकं तद्वंदनादिं कुर्वंति, इदं च सकलजैनमतप्रसिद्धमस्ति, ततश्चैवं ज्ञायते यथा भगवता दानादिधर्मप्रवृत्तिर्दर्शिता तथा स्वस्थापनाया अपि स्वस्येव वंदनादियोग्यत्वं दर्शितं, अन्यथा कथं जिनाज्ञानुवर्तिनः साध्वादयस्तद्वंदनादिकं कुर्युरिति विवेकिभिर्विचार्यं। तथा श्रीमद्भगवत्यंगेऽपि विंशतितमशतकस्य नवमोद्देशके विद्याचारणजंघाचारणमुनीनाश्रित्य शाश्वतीनामशाश्वतीनां च जिनप्रतिमानां वंदनस्याधिकारः स्पष्टतया निगदितोऽस्ति, तथा तत्सूत्रं-विज्जाचारणस्स णं भंते तिरिअं केवइए गइविसए पन्नत्ते? गो० से णं इओ एगेणं उप्पाएणं माणुसुत्तरे पव्वए समोसरणं करेति २ त्ता तहिं चेइयाइं वंदति २ त्ता बितिएणं उप्पाएणं नंदिस्सरवरे दीवे समोसरणं करेति २ त्ता तहिं चेइयाइं वंदति २ त्ता ततो पडिनियत्तइ २ त्ता इहमागच्छति २ त्ता इहं चेइयाइं वंदति। विज्जाचारणस्स णं गो० तिरियं एवतिए गतिविसए पन्नत्ता, विज्जाचारणस्स णं भंते उड्ढं केवतिए गतिविसए पं०? गो० से णं इत्तो एगेणं उप्पाएणं नंदणवणे समोसरणं करेति २ त्ता तहिं चेइयाइं वंदइ २ त्ता बितिएणं उप्पाएणं पंडगवणे समोसरणं करेति तहिं चेइयाइं वंदति २ त्ता ततो पडिनियत्तइ २ त्ता इहमागच्छइ २ त्ता, इहं चेइयाइं वंदति, विज्जाचारणस्स णं गोयमा! उड्ढं एवतिए गतिविसए पं० से णं तस्स ठाणस्स अणालोइयपडिक्कंते कालं करेइ, नत्थि तस्स आराहणा, से णं तस्स ठाणस्स आलोइयपडिक्कंते कालं करेइ, अत्थि तस्स आराहणा इति। एवं जंघाचारणविषयमपि सूत्रं बोध्यं।

परं गतिविषये विशेषः, स चायं-जंघाचारणो मुनिस्तिर्यग्गतिमाश्रित्य इत एकेनोत्पातेन त्रयोदशं रुचकवरद्वीपं गच्छति, ततः प्रतिनिवृत्तः सन् द्वितीयेनोत्पातेन नंदीश्वरमेति, तृतीयेन पुनरिहायाति, ऊर्ध्वगतिं चाश्रित्य प्रथमेनोत्पातेन पंडकवनं गच्छति, ततः प्रतिनिवृत्तः सन् द्वितीयेनोत्पातेन नंदनवनमेति, तृतीयेन पुनरिहायाति । इह से णं तस्स ठाणस्सेत्यादेरयं भावार्थः-लब्ध्युपजीवनं किल प्रमादस्तस्मिंश्च आसेवितेऽनालोचिते सति चारित्रस्याराधना न भवति, तद्विराधकश्च न लभते चारित्राराधनाफलमिति । यत्तु इहाधिकारे तैर्जैनाभासैरुत्सूत्रप्ररूपणाभयमवगणय्य बहुश्रुतपरंपरायातं मौलं चैत्यशब्दार्थमुन्मूल्य स्वमतिकल्पनया चैत्यस्य ज्ञानरूपोऽर्थः प्ररूपितस्तत्रोच्यते-यद्यत्र साधुभिर्ज्ञानं वंदितं भवेत्तर्हि 'चेइयाइं' इति बहुवचनपाठो न स्यात्, किं तु भगवद्ज्ञानस्याऽत्यद्भुतैकस्वरूपत्वात् 'चेइय' मित्येकवचनस्यैव पाठो भवेत्, स च नास्ति, तस्माज्जिनप्रतिमा एव वंदिता इत्यवगंतव्यं; न च वाच्यं मानुषोत्तरपर्वतादौ जिनप्रतिमा न संतीति, जंबूद्वीपप्रज्ञप्त्यादौ मेरुवनमानुषोत्तरनंदीश्वरद्वीपप्रभृतिशाश्वतस्थानेषु सर्वेष्वपि जिनप्रतिमानां सद्भावाभिधानादिति । पुनः श्रीमद्भगवत्यंगे एव तृतीयशतस्य द्वितीयोद्देशकेऽपि स्पष्टतया जिनप्रतिमाधिकारोऽस्ति, तथा च लेशतस्तत्सूत्रं-किंनिस्साएणं भंते असुरकुमारा देवा उड्ढं उप्पयंति जाव सोहम्मो कप्पो ? गो० से जहानामए इह सबराइ वा बबराइ वा टंकणाइ वा चुचुयाति वा पल्हयाति वा पुलिंदाति वा एगं महं रण्णं वा गड्ढं वा दुग्गं वा दरिं वा विसमं वा पव्वयं वा नीसाए सुमहल्लमपि आसबलं वा हत्थिबलं वा जोहबलं वा धणुबलं वा आगलिंति । एवमेव असुरकुमारा वि देवा णण्णत्थ अरिहंते वा अरिहंतचेइयाणि वा अणगारे वा भावि अप्पाणो निस्साए उड्ढं उप्पयंति जाव सोहम्मो कप्पो त्ति । इह णण्णत्थेत्यस्यायमर्थः, ननु निश्चितमत्रेह लोकेऽ-

थवाऽर्हतादेर्निश्रया ऊर्ध्वमुत्पतंति, नान्यत्र तन्निश्रायां अन्यत्र तां विना नेत्यर्थः। यत्तु इहैवोद्देशके उत्तरत्र तावन्निश्रात्रयमुक्त्वा पश्चादाशातनाद्वयमेवोक्तमस्ति अर्हतां साधूनां चेति, तत्रैवं संभाव्यते–अर्हत्प्रतिमानां कथंचिदर्हत्तुल्यत्वज्ञापनार्थं न पृथग्निर्देशोऽर्हत्पदेनैवैतासामपि ग्रहणादिति। यत्पुनस्तैरुक्तं–केन श्रावकेण जिनप्रतिमा पूजितेति ? तत्रोच्यते–सिद्धार्थनृपसुदर्शनश्रेष्ठिशंखपुष्कलिकार्त्तिकश्रेष्ठिप्रभृतिभिस्तुंगिकानगरीवास्तव्यैश्च बहुभिः श्रावकैः श्रीजिनप्रतिमा पूजितास्ति। दृश्यते च सिद्धांते तत्तदधिकारे 'ण्हाया कयबलिकम्मेत्यादि' पाठस्तस्यार्थस्त्वयं–पूर्वं स्नाताः पश्चात्स्नानानंतरं कृतं बलिकर्म स्वगृहदेवतानामर्हत्प्रतिमालक्षणानां पूजनं यैस्ते तथेति। न च वाच्यं तैः कुलदेव्याः पूजा कृतास्तीति, सम्यक्त्वप्रतिपत्तिसमये एव तैर्जिनव्यतिरिक्तदेवानां वंदनपूजनादेः परित्यक्तत्वात्, तुंगिकानगरीवास्तव्यश्रावकाणां सूत्रोक्तवर्णनविरोधापत्तेश्च। तद्वर्णनपाठस्तु भगवत्या द्वितीयशतस्य पंचमोद्देशकगतोऽयमस्ति 'अड्ढा दित्ता' इत्यादिर्यावत् असहिज्जदेवासुरनागसुवण्णजक्खरक्खसकिन्नरकिंपुरिसगरुलगंधव्वमहोरगाइएहिं देवगणेहिं णिग्गंथाओ पावयणाओ अणतिक्कमणिज्जा निग्गंथे पावयणे निस्संकिआ निक्कंखिआ निव्वितिगिच्छा लद्धट्ठा गहियट्ठेत्यादि। तत्र 'असहिज्ज त्ति' अविद्यमानं साहाय्यं परसाहायकं येषां ते तथा, ते च ते देवाश्चेति कर्मधारयसमासः, अथवा भिन्नमेवेदं श्रावकाणां विशेषणं, तेन असहाय्या आपद्यपि देवादिसाहाय्यानभिलाषिणः स्वयं कृतं कर्म स्वयमेव भोक्तव्यमित्यदीनमनोवृत्तय इत्यर्थः। ततश्च ये एवंविधविशेषणविशिष्टाः श्रावकास्ते कथमन्येषां मिथ्यात्विदेवानां पूजनं कुर्युः ? प्रत्यक्षविरोधादिति सुधीभिर्विभाव्यं। किं च औपपातिकोपांगेऽपि अंबडपरिव्राजकाधिकारे जिनचैत्यानां साक्षाद्वंदनीयत्वमुक्तमस्ति। तथा च तत्सूत्रं–अम्मडस्स णं परिव्वायगस्स णो कप्पंति अण-

उत्थिए वा अण्णउत्थिअदेवयाणि वा अण्णउत्थियपरिग्गहियाणि अरिहंतचेइयाणि वा वंदित्तए वा नमंसित्तए वा जाव पज्जुवासित्तए वा, णण्णत्थ अरिहंते वा अरिहंतचेइयाणि वेत्यादि। एवमुपासकदशांगेऽपि आनंदश्रावकाधिकारे बोध्यं। यत्पुनस्तैरुक्तं प्रदेशिनृपेण चैत्यं किं न कारितमिति ? तत्रोच्यते-प्रदेशी राजा जिनधर्मप्रतिपत्त्यनंतरं कियत्कालं जीवितो ? यच्चैत्यं कारयेत्। पुनः सर्वेऽपि श्रावका एकमेव धर्मकार्यं कुर्युरिति को नियमोऽस्ति ? तस्मात्सुदृष्टिभिः सर्वेष्वपि धर्मकार्येषु समदृष्ट्या श्रद्धा कार्या न पुनः किमपि जिनोक्तं धर्मकृत्यं कुदृष्टिचत्त्वमत्या निषेध्यमिति। किं च 'जंबूद्वीपप्रज्ञप्त्यां प्रथमजिननिर्वाणस्थाने स्तूपनिर्माणा(दंष्ट्राग्रहणा)धिकारे 'जिणभत्तीए धम्मो त्ति कट्टु' इति पाठोऽस्ति। ततश्चागमे यदि स्तूपनिर्मापण(दंष्ट्रापहणादिक) मपि जिनभक्तिरुक्ता तर्हि जिनचैत्यनिर्माणं तु जिनभक्तिः स्पष्टैवेति तत्र कः संदेहः ? पुनर्महानिशीथसिद्धांते श्रावकानाश्रित्य चैत्यनिर्मापणाद्यधिकारः साधूनाश्रित्य च चैत्यवंदनाद्यधिकारः स्पष्टतया निगदितोऽस्ति, स च धर्मार्थिभिः स्वयमेव समदृष्ट्या विचारणीयः, तथा व्यवहारसूत्रे-'जहेव सम्मं भावियाइं पासिज्जा तहेव आलोइज्जा' इत्यादिपाठे चैत्यसाक्षिकाऽऽलोचना प्रोक्तास्ति। इत्येवं कियंत्यागमवचनानि दर्श्यंते ? बहुष्वागमेषु स्थापनाद्यधिकारस्य विद्यमानत्वादिति। यत्तु तैरुक्तं द्वात्रिंशदेवागमाः प्रमाणं, महानिशीथादयस्तु तद्बाह्यत्वादप्रमाणमिति। तत्रैवं वक्तव्यं-गीीथे साक्षादुक्तानागमानुत्थाप्य यत्रयत्रिद्वात्रिंशदेवागमाः प्रमाणीक्रियंते तत्कस्याज्ञया ? न च तथाविधोत्कृष्टज्ञानेनेति मार्गं, इह क्षेत्रेऽधुना तादृग्ज्ञानस्यासंभवात्। किं च इह काले श्रीवीरवाचां परमविश्रामभूतैस्तत्परंपरायां समुद्भूतैस्तदाज्ञयैव गीतार्थ...सर्वसिद्धांतलेखकारिभिर्महोपकारिभिः श्रीदेवर्द्धिगणिक्षमाश्रमणैः सर्वसाधुसम्मततया ये सिद्धांताः पुस्तकेष्वारो-

पितास्तान्नुत्थापयतां भवतां स्पष्टमेव जिनाज्ञाविराधकत्वमापातमिति। अन्यच्च आगमे प्रमाणीकृतानां निर्युक्तिचूर्णी-भाष्यवृत्तीनामप्युत्थापनाद्भवद्भिर्जिनाज्ञा विराधिता, तथा च भगवतीसूत्रे[(२५) शतके द्वितीयोद्देशे]–'सुत्तत्थो खलु पढमो, बीओ निज्जुत्तिमीसिओ भणिओ। तईओ निरवसेसो, एस विही होइ अणुओगो॥१॥' त्ति। यत्पुनस्तैरुक्तं–वयं सूत्रानुसारेणार्थप्ररूपणां कुर्मः, किं निर्युक्त्यादिभिः प्रयोजनमिति, तत्रोच्यते–अतीवायुक्तमेतत्, यतः सूत्रस्यातिगंभीराशयत्वेन निर्युक्त्यादिपरिज्ञानं विना उपदेशदातॄणां नयनिक्षेपद्रव्यगुणपर्यायकाललिंगवचननामधातुस्वरादेरपरिज्ञानात्प्रतिपदं मृषावादादिदोषाः संभवंति।

यदुक्तं प्रश्नव्याकरणसूत्रे द्वितीयसंवरद्वारे–केरिसयं पुणाइ सच्चं तु भासियव्वं जं तं दव्वेहिं पज्जवेहि य गुणेहिं कम्मेहिं बहुविहेहिं सिप्पेहिं आगमेहि य नामक्खायनिवातउवसग्गतद्धियसमाससंधिपदहेतुजोगिअणादिकिरियाविहाणधाउसरविभत्तिवण्णजुत्तं तिकालं दसविहं पि सच्चं जह भणियं तह य कम्मुणा होइ दुवालसविहा य होइ भासा वयणं पि अ होइ सोलसविहं एवमरिहंतमणुन्नायं समिक्खियं संजएणं कालंमि अ वत्तव्वं इत्यादि। ततश्च किं बहुनोक्तेन? वस्तुगत्या दुरभिमिथ्यात्वपिशाचग्रस्तत्वात्ते कुदृष्टिनः स्वगृहीतासत्पक्षपुष्ट्यर्थं बहुधा यथेच्छमुत्सूत्रप्ररूपणां कुर्वाणा लोके भावसाधूपमां च बिभ्राणा आत्मनः परांश्च महामंदबुद्धीन् जंतून् अपारसंसारपारावारे निमज्जयंति, ये किल संसारभीरवो भव्यजीवा भवेयुस्तैः स्वगुणानां कुशलमिच्छद्भिर्विवेकश्रद्धाढ्यक्रियापराणां परमाज्ञानिनां तेषां महानिह्नवानां सर्वथा परिचयो न कर्त्तव्यः सद्यः सम्भूतसम्यक्त्वरत्नमालिन्यापत्तेः। येषां तु मनसि शंका भवेत्तैः सिद्धांतोक्तानेकांतमार्गमनुसृत्य तेषां परीक्षणं कर्त्तव्यं, न पुनर्बाह्यक्रि-

या मात्रेऽनुरक्तैर्भाव्यं, बाह्यक्रियायास्तु इतोऽप्यधिकाया अपि संसारे पर्यटद्भिरभव्यैरप्यनंतशो विहितत्वादिति। किं च आगमेऽपि सज्ज्ञानापेक्षया क्रियाया गौणताऽभिहिताऽस्ति। तथा च व्याख्याप्रज्ञप्त्या अष्टमशतस्य दशमोद्देशकस्थं सूत्रं–मए चत्तारि पुरिसजाया पन्नत्ता, तत्थ णं जे से पढमे पुरिसजाते से णं पुरिसे सीलवं असुतवं उवरते अविण्णायधम्मे, एस णं गोयमा! मए पुरिसे देसाराहए पन्नत्ते १। तत्थ णं जे से दोचे पुरिसजाते से णं पुरिसे असीलवं सुतवं अणुवरते विण्णायधम्मे, एस णं गोयमा! मए पुरिसे देसविराहए पण्णत्ते २। तत्थ णं जे से तच्चे पुरिसजाते तेणं पुरिसे सीलवं सुतवं उवरते विण्णायधम्मे, एस णं गोयमा! मए पुरिसे सव्वाराहए पण्णत्ते ३। तत्थ णं जे से चउत्थे पुरिसजाए से णं पुरिसे असीलवं असुतवं अणुवरते अविण्णातधम्मे, एस णं गोयमा! मए पुरिसे सव्वविराहए पण्णत्ते ४ इति। ननु स्थानांगसूत्रे जमालिप्रभृतयः सप्तैव निह्नवाः प्रोक्ताः संति, तेषु चैषामनंतर्भूतत्वात्कथं निह्नवत्वमुपपद्यते? इति चेदुच्यते–'मग्गं नेयाइयं सुच्चा बहवे परिभस्सइ' इत्याद्युत्तराध्ययनवचनप्रामाण्याद्दिगंबरादिवदेतेषामपि निह्नवत्वं युक्तमेव। यत्तु स्थानांगसूत्रे एषां ग्रहणं न कृतं, तत्रैवं संभाव्यते–तस्मिन् सूत्रे हि लघुनिह्नवाः संगृहीताः संति, एते च दिगंबरा इव महानिह्नवा जाताः, अतस्तत्र सूत्रे एते च दिगंबराश्च उभयेऽपि न संगृहीता इति, तत्त्वं पुनः केवलिनो बहुश्रुता वा विदंति। इत्यलं प्रपंचेन, तदेवमुक्तं लेशतः स्थापनाजिनस्वरूपं २।

तथा ये जीवास्तीर्थंकरतया भविष्यंति ते द्रव्यजिना उच्यंते, यथा श्रेणिकादयः, ते च भविष्यदवस्थामाश्रित्य वंदनीयाः, श्रूयते च शास्त्रे श्रीभरतचक्रवर्तिना वंदितो मरीचिभवे श्रीवीरस्वामिजीव इति ३। तथा ये समस्तयथावस्थित-

जीवादिपदार्थसार्थप्रकाशिकेवलज्ञानमासाद्य सकललोकलोचनानंदानंदोत्सवकारिनिरुपमप्राकारत्रयोद्भासितसमवसरणमध्यभागव्यवस्थापितविचित्ररत्नखंडखचितसिंहासनेषु समासीनाः संतो विशिष्टाष्टमहाप्रातिहार्यादिपरमार्हत्यविभूतिं साक्षादनुभवंति, ते भावजिना उच्यंते, ते च सद्भूतमार्गदर्शनादिना सर्वजंतूनां परमोपकारकत्वात् सर्वदा वंदनपूजनस्तवनादियोग्याः ४। इत्युक्तं चतुर्भिर्निक्षेपैर्जिनस्वरूपं, इदमेव च निक्षेपचतुष्टयं जिनव्यतिरिक्तकेवलिसिद्धेष्वपि इत्थमेव यथायोगमुपयुज्य संयोज्यं, सर्वेषामपि पदार्थानां निक्षेपचतुष्टयाविनाभावित्वादिति ।

अथ केवलिनामाहारविषयो विशेषः पिंडनिर्युक्तिवचनेनोपदर्श्यते—

ओहो सुओ वउत्तो, सुइनाणी जइवि गिण्हइ असुद्धं ।
तं केवली वि भुंजइ, अपमाणसुअं भवे इयरा ॥ १२७ ॥

व्याख्या—ओहो इत्यत्र तृतीयार्थे प्रथमा, तत ओघेन सामान्येन श्रुते पिंडनिर्युक्त्यादिरूपे आगमे उपयुक्तः सन् तदनुसारेण कल्पा(ल्प्या)कल्पं (ल्प्यं) परिभावयन् श्रुतज्ञानी साधुर्यद्यपि कथमपि अशुद्धमाहारादि गृह्णाति तथापि तदशनादिकं केवलज्ञानी अपि भुंक्ते, इतरथा श्रुतज्ञानमप्रमाणं भवेत्। तथाहि–छद्मस्थः श्रुतज्ञानबलेन शुद्धं गवेषयितुमीष्टे, न तु प्रकारांतरेण, ततो यदि केवली श्रुतज्ञानिना आगमानुसारेण गवेषितमपि अशुद्धमिति विज्ञाय न भुंजीत तर्हि श्रुतानाश्वासः स्यादिति न कोऽपि श्रुतं प्रमाणत्वेन प्रतिपद्येत, श्रुतज्ञानस्य त्वप्रामाण्ये सर्वक्रियाविलोपप्रसंगः, श्रुतमंतरेण छद्मस्थानां

क्रियाकांडस्य परिज्ञानासंभवादिति । इदं हि शिष्यादिसमन्वितं केवलिनमाश्रित्य प्रोक्तं । यदि तु स्वयमेकाकी भवति तदा स्वज्ञानबलेन यथायोग्यं शुद्धमेव गृह्णातीति विवेकः । इह जिनानजिनांश्चाश्रित्यान्यदपि बहु वक्तव्यमस्ति, तत्तु नोच्यते, ग्रंथगहनताप्रसंगादिति । उक्तं लेशतो भवस्थकेवलिस्वरूपं ।

इदानीं सिद्धस्वरूपं प्रज्ञापनादिसूत्रोक्तगाथाभिः किंचिद्दर्श्यते—तत्र तावदुत्तानीकृतछत्रसंस्थानसंस्थितायाः सर्वात्मना श्वेतवर्णमय्याः समयक्षेत्रसमश्रेण्या पंचचत्वारिंशल्लक्षयोजनप्रमाणाया बहुमध्यदेशभागेऽष्टयोजनप्रमितायामविष्कंभबाहल्याया-स्तदनंतरं सर्वासु दिक्षु विदिक्षु च स्तोकया स्तोकया प्रदेशहान्या परिहीयमानायाः सर्वेषु चरमांतेषु मक्षिकापत्रतोऽप्यतितन्व्याः अंगुलासंख्येयभागबाहल्याया ईषत्प्राग्भारायाः पृथिव्या ऊर्ध्वं निःश्रेणिगत्या योजने लोकांतो भवति, तस्य योजनस्योपरितनं यच्चतुर्थं गव्यूतं तस्य सर्वोपरितने षष्ठे भागे सिद्धा भगवंतोऽनंतमनागतकालं स्वरूपेणावतिष्ठंते । तत्स्वरूपप्रतिपादिका गाथा यथा—

तत्थ वि अ ते अवेया, अवेयणा निम्ममा असंगा य । संसारविप्पमुक्का, पएसनिव्वत्तसंठाणा ॥

व्याख्या—तत्रापि च सिद्धक्षेत्रे गताः संतस्ते सिद्धा भगवंतोऽवेदाः पुरुषवेदादिरहिताः, अवेदनाः सातासातवेदनाऽभावात्, निर्ममा ममत्वरहिताः, असंगा बाह्याभ्यंतरसंसर्गवर्जिताः, कस्मादेवं? अत आह—संसाराद्विप्रमुक्ताः, पुनः कीदृशाः? प्रदेशैरात्मप्रदेशैर्निर्वृत्तं निष्पन्नं संस्थानं येषां ते प्रदेशनिर्वृत्तसंस्थानाः, अत्र प्रदेशशब्देनात्मप्रदेशा एव बोध्याः, न तु बाह्य-

पुद्गलाः, शरीरपंचकस्यापि सर्वात्मना त्यक्तत्वात् । अत्र प्रश्नः—

कहिं पडिहया सिद्धा, कहिं सिद्धा पइट्ठिआ । कहिं बोंदिं चइत्ताणं, कत्थ गंतूण सिज्झई ॥१२९॥

व्याख्या—कहिं इत्यत्र तृतीयार्थे सप्तमी, ततोऽयमर्थः—केन प्रतिहताः स्खलिताः सिद्धाः ? तथा कस्मिन् स्थाने सिद्धाः प्रतिष्ठिताः ? तथा कस्मिन् क्षेत्रे बोंदिं शरीरं त्यक्त्वा क्व गत्वा सिद्ध्यंति ? निष्ठितार्था भवंति ? ।

अलोए पडिहया सिद्धा, लोयग्गे य पइट्ठिया । इहं बोंदिं चइत्ताणं, तत्थ गंतूण सिज्झई ॥१३०॥

व्याख्या—अत्रापि सप्तमी तृतीयार्थे बोध्या, अलोकेन केवलाकाशरूपेण प्रतिहताः स्खलिताः सिद्धा अलोके धर्मास्तिकायाद्यभावात्तत्सामीप्यवृत्तिरेवेह स्खलनं, न तु संबंधे सति विघातो अप्रतिघातत्वाचेषामिति । तथा लोकस्य पंचास्तिकायात्मकस्याग्रे मूर्द्धनि प्रतिष्ठिता अपुनरागत्या व्यवस्थिताः । तथा इह मनुष्यलोके शरीरं त्यक्त्वा तत्र लोकाग्रे समयांतरप्रदेशांतरास्पर्शनेन गत्वा सिद्ध्यंति निष्ठितार्था भवंति । ननु सिद्धानां कर्मरहितत्वात्कथं गतिः संभवति ? इति चेन्नैष दोषः, पूर्वप्रयोगादिभिस्तस्याः संभवात् । यदुक्तं श्रीमद्भगवत्यंगे—कहं णं भंते ! अकम्मस्स गई पण्णायति ? गोयमा ! णिस्संगताए निरंगणताए गतिपरिणामेणं बंधणछेयणताए णिरिंधणताए पुव्वप्पयोगेणं अकम्मस्स गई पं० इत्यादि । अस्यार्थलेशस्त्वयं—निस्संगतया कर्ममलापगमेन, नीरागतया मोहापगमेन, गतिपरिणामेन गतिस्वभावतया अलाबुद्रव्यस्येव, कर्मबंधनच्छेदनेन एरंडफलस्येव, निरिंधनतया कर्मेधनविमोचनेन धूमस्येव, पूर्वप्रयोगेण सकर्मतायां गतिपरिणामत्वेन बाणस्येव

अकर्मणोऽपि गतिः प्रज्ञायते इति । विशेषतोऽलाब्वादिदृष्टांतार्थयोजना तु ग्रन्थत एवावगंतव्या । अथ तत्र गतानां यत्संस्थानमानं तद्दर्श्यते—

दीहं वा ह्स्सं वा, जं चरिमंभवे भवेज्ज संठाणं ।
त्तो तिभागहीणा, सिद्धाणोगाहणा भणिया ॥ १३१ ॥

व्याख्या—दीर्घं वा पंचशतधनुःप्रमाणं ह्रस्वं वा हस्तद्वयप्रमाणं, वाशब्दान्मध्यमं वा विचित्रं यच्चरमभवे संस्थानं भवेत् तस्मात्संस्थानात् त्रिभागहीना वदनोदरादिरंध्रपूरणेन तृतीयेन भागेन हीना सिद्धानामवगाहना स्थावस्थैव भणिता तीर्थंकरगणधरैरिति । इहत्यसंस्थानप्रमाणापेक्षया त्रिभागहीनं तत्र संस्थानमिति भावः । एतदेव स्पष्टतरं दर्श्यते—

जं संठाणं तु इहं, भवं चयंतस्स चरिमसमयंमि ।
आसी य पएसघणं, तं संठाणं तहिं तस्स ॥ १३२ ॥

यत्संस्थानं यावत्प्रमाणं संस्थानं इह मनुष्यभवे आसीत् तदेव संस्थानभवं शरीरं त्यजतश्चरमसमये सूक्ष्मक्रियाऽप्रतिपातिध्यानबलेन वदनोदरादिरंध्रपूरणात्त्रिभागहीनं प्रदेशघनमासीत्तदेव च प्रदेशघनं मूलप्रमाणापेक्षया त्रिभागहीनप्रमाणं संस्थानं तत्र लोकांते तस्य सिद्धस्य भवेत् नान्यदिति । सांप्रतमुत्कृष्टादिभेदाभिन्नावगाहना दर्श्यते—

तिण्णि सया तेत्तीसा, धणूं तिभागो य होइ नायव्वो ।

एसा खलु सिद्धाणं, उक्कोसोगाहणा भणिया ॥ १३३ ॥

व्याख्या—त्रीणि शतानि त्रयस्त्रिंशदधिकानि धनूंषि एकश्च धनुस्त्रिभागो भवति ज्ञातव्यः, एषा खलु सिद्धानामुत्कृष्टावगाहना भणिता । सा च पंचधनुःशतशरीराणामवसेया । ननु मरुदेवी नाभिकुलकरपत्नी, नाभेश्च पंचविंशत्यधिकानि पंच धनुःशतानि शरीरप्रमाणं, यदेव च तस्य शरीरमानं तदेव मरुदेवाया अपि 'संघयणं संठाणं उच्चत्तं चेव कुलगरेहि समं' इति वचनात्, मरुदेवा च भगवती सिद्धा, ततस्तस्याः शरीरमानस्य त्रिभागे पातिते सिद्धावस्थायां सार्द्धानि त्रीणि धनुःशतानि अवगाहना प्राप्नोतीति कथमुक्तप्रमाणा उत्कृष्टावगाहना घटते ? इति चेन्नैवं, मरुदेवाया नाभेः किंचिदूनप्रमाणत्वात्, स्त्रियो हि उत्तमसंस्थाना उत्तमसंस्थानेभ्यः पुरुषेभ्यः स्वस्वकालापेक्षया किंचिदूनप्रमाणा भवंति, ततो मरुदेवापि पंचधनुःशतप्रमाणा इति न कश्चिद्दोषः, अपि च मरुदेवा हस्तिस्कंधाधिरूढा संकुचितांगी सिद्धा, ततः शरीरसंकोचनभावान्नाधिकावगाहनासंभव इत्यविरोधः । आह च भाष्यकारः—

कह मरुदेवामाणं, नाभीतो जेण किंचिदूणा सा ।

तो किर पंचसयच्चिय, अहवा संकोचतो सिद्धा ॥ १३४ ॥

पुलादयो जहण्णेणं । अण्णे संवट्टियपत्त-हत्थसिद्धस्स हीणत्ति ॥ २ ॥

संप्रति मुक्तानुवादेनैव सिद्धानां संस्थानलक्षणं दर्श्यते—

ओगाहणाइ सिद्धा, भवतिभागेण होइ परिहीणा ।
संठाणमणित्थंत्थं, जरमरणविप्पमुक्काणं ॥ १३७ ॥

व्याख्या—सुगमा, नवरं अनित्थंस्थमिति इदं प्रकारमापन्नं इत्थं, इत्थं तिष्ठतीति इत्थंस्थं, न इत्थंस्थं अनित्थंस्थं, वदनादिशुषिरपरिपूरणेन पूर्वाकारान्यथात्वभावतोऽनियताकारमिति भावः । योऽपि च सिद्धादिगुणेषु 'सिद्धे न दीहे न हस्से' इत्यादिना दीर्घत्वादीनां प्रतिषेधः सोऽपि पूर्वाकारापेक्षया संस्थानस्यानित्थंस्थत्वात्प्रतिपत्तव्यो, न पुनः सर्वथासंस्थानाभाव इति ॥ नन्वेते सिद्धाः परस्परं देशभेदेन व्यवस्थिता उत नेति चेदुच्यते—

जत्थ य एगो सिद्धो, तत्थ अणंता भवक्खयविमुक्का ।
अण्णोण्णसमोगाढा, पुट्ठा सव्वे वि लोगंते ॥ १३८ ॥

व्याख्या—सुगमा । अथ सिद्धानां लक्षणं यथा—

असरीरा जीवघणा, उवउत्ता दंसणे य नाणे य ।
सागारमणागारं, लक्खणमेयं तु सिद्धाणं ॥ १३९ ॥

व्याख्या—अशरीराः शरीररहिताः, तथा जीवाश्च ते घनाश्च वदनादिरंध्रपूरणाज्जीवघनास्तथा केवलदर्शने केवलज्ञाने च उपयुक्ताः, यद्यपि सिद्धत्वप्रादुर्भावे केवलज्ञानोपयोगसंभवात् ज्ञानं प्रधानं तथापि सामान्यसिद्धलक्षणमेतदिति ज्ञापनार्थमादौ सामान्यालंबनं दर्शनमुक्तं, तथा च सामान्यविषयं दर्शनं विशेषविषयं च ज्ञानमिति। ततः साकारानाकारं सामान्यविशेषोपयोगरूपं सिद्धानां लक्षणमिति ॥

अथ केवलज्ञानदर्शनयोरविशेषविषयतोपदर्श्यते—

केवलनाणुवउत्ता, जाणंति सव्वभावगुणभावे ।
पासंति सव्वओ खलु, केवलदिट्ठीहिं णंताहिं ॥ १४० ॥

व्याख्या—सिद्धाः केवलज्ञानेनोपयुक्ताः संतः सर्वभावगुणभावान् सर्वपदार्थगुणपर्यायान् जानंति, तत्र सहवर्त्तिनो गुणाः, क्रमवर्त्तिनश्च पर्याया इति। तथानंताभिः केवलदृष्टिभिः सर्वत एव पश्यंति, केवलदर्शनानां चानंतता सिद्धानामनंतत्वात्, इहादौ ज्ञानग्रहणं प्रथमतया तदुपयोगस्थाः सिद्धंतीति ज्ञापनार्थं ॥ संप्रति निरुपमसुखभाजस्ते इति दर्श्यते—

नवि अत्थि माणुसाणं, तं सुक्खं न वि य सव्वदेवाणं ।
जं सिद्धाणं सुक्खं, अव्वाबाहं उवगयाणं ॥ १४१ ॥

व्याख्या—मानुषाणां चक्रवर्त्यादीनामपि नैवास्ति तत्सौख्यं, नैव पुनः सर्वदेवानामनुत्तरपर्यंतानामपि तत्सौख्यं, यत्सिद्धानां सौख्यमस्ति । कीदृशां ? अव्याबाधामुपगतानां विविधा आबाधा व्याबाधा, न व्याबाधा अव्याबाधा, तामुप सामीप्येन प्राप्तानामित्यर्थः ॥ अथ यथा नास्ति तथा भंग्योपदर्श्यते—

सुरगणसुहं समत्तं, सव्वद्धापिंडिअं अनंतगुणं ।
ण वि पावइ मुत्तिसुहं, णंताहिं वि वग्गवग्गेहिं ॥ १४२ ॥

व्याख्या—सुरगणसुखं देवसंघातसुखं समस्तं संपूर्णं अतीतानागतवर्त्तमानकालोद्भवमित्यर्थः, पुनः सर्वाद्धापिंडितं सर्वकालसमयगुणितं, तथाऽनंतगुणमिति, तदेवंप्रमाणं किलासत्कल्पनया एकैकाकाशप्रदेशे स्थाप्यते, इत्येवं सकलाकाशप्रदेशपूरणेन यद्यप्यनंतं भवति, तदनंतमप्यनंतैर्वर्गैर्वर्गितं तथाप्येवं प्रकर्षगतमपि तत्सुखं मुक्तिसुखं न प्राप्नोति, सिद्धिसुखतुल्यं न भवतीत्यर्थः ॥ सांप्रतं सिद्धिसुखस्य निरुपमता दर्श्यते—

जह नाम कोइ मेच्छो, नयरगुणे बहुविहे वियाणंतो ।
न सक्कइ परिकहिउं, उवमाए तहिं असंतीए ॥ १४३ ॥

—यथा नाम कश्चिन्म्लेच्छो नगरगुणान् गृहनिवासादीन् बहुविधान् अनेकप्रकारान् विजानन्नपि अरण्यगतः

सन् अन्यम्लेच्छानां पुरः परिकथयितुं न शक्नोति, कस्मादित्यत आह-उपमायां तत्रासत्यां तत्रोपमाया अभावादित्यर्थः । एष गाथाक्षरार्थः । भावार्थस्तु कथानकगम्यस्तच्चेदं—

एकस्मिन्महारण्ये बहवो म्लेच्छा वसंति, ते च वन्याः पशव इव सर्वदा तत्रैव स्थिताः कालं गमयंति । एकदा कश्चिद्राजाऽश्वेनापहृतः सन् तत्रारण्ये संप्राप्तः, तदा एकेन म्लेच्छेन दृष्टः, कोऽपि सत्पुरुषोऽयमिति विचिंत्य सत्कृतः स्ववसतिं नीतश्च । ततो राजापि तमुपकारिणं मत्वा स्वनगरमध्ये समानीय स्नपनविलेपनामूल्यवस्त्राभरणप्रवरमंदिरमिष्टान्नपानादिभिर्गाढं संतोष्य प्रत्यहं स्वपिंडमिव सयत्नं ररक्ष । ततो वर्षाकाले तस्य चिरनिवाससंस्थानं तदरण्यं स्मृतिपथमायातं, तदा स क्षणमपि तत्र स्थातुमनिच्छन् तानि वस्त्राभरणानि परित्यज्य स्वमूलवेषेण ततो निःसृत्यारण्ये जगाम, तत्रान्ये आरण्यका म्लेच्छाश्चिरादायातं तं दृष्ट्वा संभूय पृच्छंति-'भोस्त्वं कुत्रागाः ? ।' स प्राह-'एकस्मिन् महति नगरे गतोऽभूवं' पुनस्ते पृच्छंति-'कीदृशं तन्नगरं ? ।' तदाऽसौ नगरगुणान् विजानन्नपि तत्रोपमाया अभावात्तान् कथयितुं न शक्नोति । एष दृष्टांतः । एवं केवलज्ञान्यपि निजानंतज्ञानबलेन सिद्धिसुखं विजानन्नपि इह तदुपमाया अभावाद्भव्यानां पुरः कथयितुं न शक्नोतीत्यर्थोपनयः । अयमेव च गाथयोपदर्श्यते—

इह सिद्धाणं णाणसुखं, अणोवमं नत्थि तस्स ओवम्मं ।
किंच विसेसेणेत्तो, सारक्खणमिणं सुणह वोत्थं ॥ १४४ ॥

व्याख्या—मानुषाणां चक्रवर्त्यादीनामपि नैवास्ति तत्सौख्यं, नैव पुनः सर्वदेवानामनुत्तरपर्यंतानामपि तत्सौख्यं, यत्सिद्धानां सौख्यमस्ति। कीदृशां? अव्याबाधामुपगतानां विविधा आबाधा व्याबाधा, न व्याबाधा अव्याबाधा, तामुप सामीप्येन प्राप्तानामित्यर्थः॥ अथ यथा नास्ति तथा भंग्योपदर्श्यते—

सुरगणसुहं समत्तं, सव्वद्धापिंडिअं अनंतगुणं।

ण वि पावइ मुत्तिसुहं, णंताहिं वि वग्गवग्गेहिं॥ १४२॥

व्याख्या—सुरगणसुखं देवसंघातसुखं समस्तं संपूर्णं अतीतानागतवर्त्तमानकालोद्भवमित्यर्थः, पुनः सर्वाद्धापिंडितं सर्वकालसमयगुणितं, तथाऽनंतगुणमिति, तदेवंप्रमाणं किलासत्कल्पनया एकैकाकाशप्रदेशे स्थाप्यते, इत्येवं सकलाकाश-प्रदेशपूरणेन यद्यप्यनंतं भवति, तदनंतमप्यनंतैर्वर्गैर्वर्गितं तथाप्येवं प्रकर्षगतमपि तत्सुखं मुक्तिसुखं न प्राप्नोति, सिद्धिसुखतुल्यं न भवतीत्यर्थः॥ सांप्रतं सिद्धिसुखस्य निरुपमता दर्श्यते—

जह नाम कोइ मेच्छो, नयरगुणे बहुविहे वियाणंतो।

न सक्कइ परिकहिउं, उवमाए तहिं असंतीए॥ १४३॥

व्याख्या—यथा नाम कश्चिन्म्लेच्छो नगरगुणान् गृहनिवासादीन् बहुविधान् अनेकप्रकारान् विजानन्नपि अरण्यगतः

सन् अन्यम्लेच्छानां पुरः परिकथयितुं न शक्नोति, कस्मादित्यत आह-उपमायां तत्रासत्यां तत्रोपमाया अभावादित्यर्थः । एष गाथाक्षरार्थः । भावार्थस्तु कथानकगम्यस्तच्चेदं—

एकस्मिन्महारण्ये बहवो म्लेच्छा वसंति, ते च वन्याः पशव इव सर्वदा तत्रैव स्थिताः कालं गमयंति । एकदा कश्चिद्राजाऽश्वेनापहृतः सन् तत्रारण्ये संप्राप्तः, तदा एकेन म्लेच्छेन दृष्टः, कोऽपि सत्पुरुषोऽयमिति विचिंत्य सत्कृतः स्ववसतिं नीतश्च । ततो राजापि तमुपकारिणं मत्वा स्वनगरमध्ये समानीय स्नपनविलेपनामूल्यवस्त्राभरणप्रवरमंदिरमिष्टान्नपानादिभिर्गाढं संतोष्य प्रत्यहं स्वपिंडमिव सयत्नं ररक्ष । ततो वर्षाकाले तस्य चिरनिवाससंस्थानं तदरण्यं स्मृतिपथमायातं, तदा स क्षणमपि तत्र स्थातुमनिच्छन् तानि वस्त्राभरणानि परित्यज्य स्वमूलवेषेण ततो निःसृत्यारण्ये जगाम, तत्रान्ये आरण्यका म्लेच्छाश्चिरादायातं तं दृष्ट्वा संभूय पृच्छंति-'भोस्त्वं कुत्रागाः ? ।' स प्राह-'एकस्मिन् महति नगरे गतोऽभूवं' पुनस्ते पृच्छंति-'कीदृशं तन्नगरं ? ।' तदाऽसौ नगरगुणान् विजानन्नपि तत्रोपमाया अभावात्तान् कथयितुं न शक्नोति । एष दृष्टांतः । एवं केवलज्ञान्यपि निजानंतज्ञानबलेन सिद्धिसुखं विजानन्नपि इह तदुपमाया अभावाद्भव्यानां पुरः कथयितुं न शक्नोतीत्यर्थोपनयः । अयमेव च गाथयोपदर्श्यते—

इह सिद्धाणं णाणसुखं, अणोवमं नात्थि तस्स ओवम्मं ।
किंच विसेसेणेत्तो, सारक्खणमिणं सुणह वोत्थं ॥ १४४ ॥

व्याख्या—इत्येवं सिद्धानां सौख्यमनुपमं वर्त्तते, किमित्यत आह—यतो नास्ति तस्यौपम्यं, तथापि बालजनप्रतिपत्तये किंचिद्विशेषेण अस्य सादृश्यमिदं वक्ष्यमाणं शृणुत ॥

जह सव्वकामगुणियं, पुरिसो भोत्तूण भोयणं कोइ ।
तण्हाछुहाविमुक्को, अत्थिज्ज जहा अमियतत्तो ॥ १४५ ॥
इय सव्वकालतित्ता, अतुलं निव्वाणमुवगया सिद्धा ।
सासयमव्वाबाहं, चिट्ठंति सुही सुहं पत्ता ॥ १४६ ॥

व्याख्या—यथा कोऽपि पुरुषः सर्वकामगुणितं सकलसौंदर्यसंस्कृतं भोजनं भुक्त्वा क्षुत्तृड्विप्रमुक्तः सन् यथाऽमृततृप्तस्तथा तिष्ठति। इत्येवं निर्वाणं मोक्षमुपगताः सिद्धाः सर्वकालं साद्यपर्यवसितं कालं यावत्तृप्ताः सर्वथौत्सुक्यनिवृत्तिभावतः परमं संतोषमाश्रितास्तथाऽतुलमनुपमं शाश्वतमप्रतिपाति अव्याबाधं लेशतोऽपि बाधारहितं सुखं प्राप्ताः, अत एव सुखिनस्तिष्ठंति। एतस्यैवार्थस्य सविशेषभावना यथा—

सिद्ध त्ति य बुद्ध त्ति य, पारग त्ति य परंपरगय त्ति ।
उम्मुक्ककम्मकवया, अजरा अमरा असंगा य ॥ १४७ ॥

णिच्छिण्णसव्वदुक्खा, जाइजरामरणबंधणविमुक्का ।
अव्वाबाहं सोक्खं, अणुहोंति सासयं सिद्धा ॥ १४८ ॥

**व्याख्या**—सितं बद्धमष्टप्रकारं कर्म ध्मातं भस्मीकृतं यैस्ते सिद्धाः, ते च सामान्यतः कर्मादिसिद्धा अपि भवंति, यदुक्तं-कम्मे सिप्पे य विज्जाए, मंते जोगे य आगमे । अत्थजुत्तअभिप्पाए, तवे कम्मक्खए इय ॥ १ ॥ त्ति ततः कर्मादिसिद्धव्यपोहायाह-बुद्धा इति अज्ञाननिद्राप्रसुप्ते जगति अपरोपदेशेन जीवादिरूपं तत्त्वं बुद्धाः, एतेऽपि च संसारनिर्वाणोभयपरित्यागेन स्थितवंतः कैश्चिदिष्यंते, ततस्तन्निरासार्थमाह, पारगता इति, पारं पर्यंतं संसारस्य प्रयोजनसमूहस्य वा गताः पारगताः, इत्थंभूता अपि कैश्चिद्यदृच्छावादिभिरक्रमसिद्धत्वेनापि गीयंते ततस्तन्मतव्यपोहार्थमाह-परंपरागता इति, परंपरया ज्ञानदर्शनचारित्ररूपया चतुर्दशगुणस्थानभेदभिन्नया गताः, परंपरागताः, एते च कैश्चिज्जगतोऽनिर्मुक्तकर्माणोऽभ्युपगम्यंते, तीर्थंकरदर्शनादिहागच्छंति इति वचनतः पुनः संसारावतरणाभ्युपगमात्, अतस्तन्मतापाकरणार्थमाह-उन्मुक्तकर्मकवचा उत्प्राबल्येनापुनर्भवनरूपतया मुक्तं परित्यक्तं कर्मकवचं यैस्ते, अत एवाजराः शरीराभावतो जरसोऽभावात्, अमरा अशरीरत्वादेव प्राणत्यागासंभवात्, असंगा बाह्याभ्यंतरसंगरहितत्वात् । तथा निस्तीर्णं लंघितं सर्वं दुःखं यैस्ते निस्तीर्णसर्वदुःखाः, कुत इत्याह-जातिजरामरणबंधनविमुक्ताः-जातिर्जन्म जरा वयोहानिलक्षणा मरणं प्राणत्यागरूपं बंधनानि तन्निबंधनरूपाणि कर्माणि तैर्विशेषतो निःशेषापगमनेन मुक्ताः पृथग्भूताः, ततोऽव्याबाधं शाश्वतं सौख्यं सिद्धा अनुभवंतीति । अथ सिद्धानामेकत्रिंशद्गुणा दर्श्यंते—

व्याख्या—इत्येवं सिद्धानां सौख्यमनुपमं वर्त्तते, किमित्यत आह—यतो नास्ति तस्यौपम्यं, तथापि बालजनप्रतिपत्तये किंचिद्विशेषेण अस्य सादृश्यमिदं वक्ष्यमाणं शृणुत ॥

जह सव्वकामगुणियं, पुरिसो भोत्तूण भोयणं कोइ ।
तण्हाछुहाविमुक्को, अच्छिज्ज जहा अमियतत्तो ॥ १४५ ॥
इय सव्वकालतित्ता, अतुलं निव्वाणमुवगया सिद्धा ।
सासयमव्वाबाहं, चिट्ठंति सुही सुहं पत्ता ॥ १४६ ॥

व्याख्या—यथा कोऽपि पुरुषः सर्वकामगुणितं सकलसौंदर्यसंस्कृतं भोजनं भुक्त्वा क्षुत्तृड्विप्रमुक्तः सन् यथाऽमृततृप्तस्तथा तिष्ठति। इत्येवं निर्वाणं मोक्षमुपगताः सिद्धाः सर्वकालं साद्यपर्यवसितं कालं [illegible] परमं संतोषमाश्रितास्तथाऽतुलमनुपमं [illegible]

संठाण ५ वण्ण ५ रस ५ गंध २, फास ८ वेयं ३ गसंगभव ३ रहियं ।
इगतीसगुणसमिद्धं, सिद्धं बुद्धं जिणं नमिमो ॥ १४९ ॥

व्याख्या—वृत्त १ त्र्यस्र २ चतुरस्रा ३ यत ४ परिमंडल ५ भेदात्पंच संस्थानानि। कृष्ण १ नील २ पीत ३ रक्त ४ श्वेत ५ भेदात्पंच वर्णाः। तिक्त १ कटु २ कषाया ३ म्ल ४ मधुर ५ भेदात्पंच रसाः। सुरभिर्दुरभिश्चेति द्वौ गंधौ। गुरु १ लघु २ सुकुमाल ३ कर्कश ४ शीतो ५ ष्ण ६ स्निग्ध ७ रूक्ष ८ भेदादष्ट स्पर्शाः। स्त्री १ पुरुष २ क्लीब ३ भेदात्त्रयो वेदाः। अंगं शरीरं १, संगः परवस्तुसंसर्गः २, भवो जन्म ३, एभ्य एकत्रिंशदुपाधिभ्यो रहितं। अत एव एकत्रिंशद्गुणसमृद्धं सिद्धं बुद्धं जिनं वयं नताम इत्यर्थः। अथ सिद्धेषु येऽष्टकर्मक्षयोद्भूता अष्टौ गुणाः संति ते दर्श्यंते—

नाणं १ च दंसणं २ चेव, अवावाहं ३ तहेव सम्मत्तं ४ ।
अक्खयठिई ५ अरूवं ६, अगुरुलघू ७ वीरियं ८ हवई ॥ १५० ॥

व्याख्या—सुगमा, इदमत्र तात्पर्य—ज्ञानावरणकर्मणः क्षयादनंतज्ञानत्वं १, दर्शनावरणक्षयादनंतदर्शनत्वं २, वेदनीयकर्मापगमादव्याबाधत्वं, अनेन च गुणेन अनंतानां सिद्धानां परिमितक्षेत्रेऽन्योऽन्यावगाढतयाऽवस्थितानामपि परस्परं व्याबाधाया अभावः ३, तथा मोहनीयकर्मापगमात्क्षायिकसम्यक्त्वं ४, आयुःकर्मक्षयादक्षयस्थितित्वं ५, नामकर्मक्षयाद-

रूपित्वं ६, गोत्रकर्मक्षयादगुरुलघुत्वं, उच्चैर्गोत्रोदये हि लोके गौरवं जायते, नीचैर्गोत्रोदये तु लाघवं, सिद्धेषु च तदुभयस्याप्यभावादगुरुलघुत्वमेव । अत्र कश्चित्प्रश्नयेत्-सतां हि सिद्धाः पूज्या एव, अतो गुरुत्वं, नास्तिकानां तु अपूज्या इति लघुत्वं, ततोऽत्र कथं अगुरुलघुत्वमुच्यते ? इति, तत्रोत्तरं-यथा उच्चैर्गोत्रवत्पुरुषागमनेऽभ्युत्थानासनप्रदानादिपूजा समाचर्यते, नीचैर्गोत्रवदागमने च दूरतः स्थापनं विधीयते, तथात्र सिद्धावस्थायां व्यवहारो नास्ति, अतोऽगुरुलघुत्वं युक्तमेव ७। तथांतरायकर्मक्षयादनंतवीर्यत्वं, अत एव लोकालोकवर्त्यनंतपदार्थानां युगपज्ज्ञानेन ग्रहणं तेषां संभवतीति ८ । यत्तु सिद्धानामनंतसुखत्वं गीयते तद्वेदनीयकर्मापगमान्मोहनीयकर्मापगमाद्वा जायमानत्वादव्याबाधस्वरूपं सम्यक्त्वस्वरूपमेव वा बोद्धव्यमित्युक्ताः सिद्धगुणाः । तदेवमभिहितं सकलमंगलमयं परमात्मतास्वरूपं ॥

इत्थं स्वरूपं परमात्मरूपं, निधाय चित्ते निरवद्यवृत्तेः । सद्ध्यानरंगात्कृतशुद्धिसंगा, भजंतु सिद्धिं सुधियः समृद्धिं ॥ १ ॥
भगवत्समयोक्तीना-मनुसारेणैष वर्णितोऽस्ति मया । परमात्मत्वविचारः, शुद्धः स्वपरबोधकृते ॥ २ ॥

॥ इति श्रीजिनभक्तिसूरींद्रचरणारविंदसमाराधकैः श्रीजिनलाभसूरिभिः संगृहीते आत्मप्रबोधग्रंथे
परमात्मतावर्णनो नाम चतुर्थः प्रकाशः समाप्तः ॥



संठाण ५ वण्ण ५ रस ५ गंध २, फास ८ वेयं ३ गसंगभव ३ रहियं ।
इगतीसगुणसमिद्धं, सिद्धं बुद्धं जिणं नमिमो ॥ १४९ ॥

व्याख्या—वृत्त १ त्र्यस्र २ चतुरस्रा ३ यत ४ परिमंडल ५ भेदात्पंच संस्थानानि । कृष्ण १ नील २ पीत ३ रक्त ४ श्वेत ५ भेदात्पंच वर्णाः । तिक्त १ कटु २ कषाया ३ म्ल ४ मधुर ५ भेदात्पंच रसाः । सुरभिर्दुरभिश्चेति द्वौ गंधौ । गुरु १ लघु २ सुकुमाल ३ कर्कश ४ शीतो ५ ष्ण ६ स्निग्ध ७ रूक्ष ८ भेदादष्ट स्पर्शाः । स्त्री १ पुरुष २ क्लीव ३ भेदात्रयो वेदाः । अंगं शरीरं १, संगः परवस्तुसंसर्गः २, भवो जन्म ३, एभ्य एकत्रिंशदुपाधिभ्यो रहितं । अत एव एकत्रिंशद्गुणसमृद्धं सिद्धं बुद्धं जिनं वयं ननाम इत्यर्थः । अथ सिद्धेषु येऽष्टकर्मक्षयोद्भूता अष्टौ गुणाः संति ते दर्श्यंते—

नाणं १ च दंसणं २ चेव, अव्वावाहं ३ तहेव सम्मत्तं ४ ।
अक्खयठिई ५ अरूवं ६, अगुरुलघू ७ वीरियं ८ हवई ॥ १५० ॥

व्याख्या—सुगमा, इदमत्र तात्पर्यं—ज्ञानावरणकर्मणः क्षयादनंतज्ञानत्वं १, दर्शनावरणक्षयादनंतदर्शनत्वं २, वेदनीयकर्मापगमादव्याबाधत्वं, अनेन च गुणेन अनंतानां सिद्धानां परिमितक्षेत्रेऽन्योऽन्यावगाढतयाऽवस्थितानामपि परस्परं व्याबाधाया अभावः ३, तथा मोहनीयकर्मापगमात्क्षायिकसम्यक्त्वं ४, आयुःकर्मक्षयादक्षयस्थितित्वं ५, नामकर्मक्षयाद-

रूपित्वं ६, गोत्रकर्मक्षयादगुरुलघुत्वं, उच्चैर्गोत्रोदये हि लोके गौरवं जायते, नीचैर्गोत्रोदये तु लाघवं, सिद्धेषु च तदुभयस्याप्यभावादगुरुलघुत्वमेव । अत्र कश्चित्प्रश्नयेत्-सतां हि सिद्धाः पूज्या एव, अतो गुरुत्वं, नास्तिकानां तु अपूज्या इति लघुत्वं, ततोऽत्र कथं अगुरुलघुत्वमुच्यते ? इति, तत्रोत्तरं-यथा उच्चैर्गोत्रवत्पुरुषगमनेऽभ्युत्थानासनप्रदानादिपूजा समाचर्यते, नीचैर्गोत्रवदागमने च दूरतः स्थापनं विधीयते, तथात्र सिद्धावस्थायां व्यवहारो नास्ति, अतोऽगुरुलघुत्वं युक्तमेव ७। तथांतरायकर्मक्षयादनंतवीर्यत्वं, अत एव लोकालोकवर्त्यनंतपदार्थानां युगपज्ज्ञानेन ग्रहणं तेषां संभवतीति ८ । यत्तु सिद्धानामनंतसुखत्वं गीयते तद्वेदनीयकर्मापगमान्मोहनीयकर्मापगमाद्वा जायमानत्वादव्याबाधस्वरूपं सम्यक्त्वस्वरूपमेव वा बोद्धव्यमित्युक्ताः सिद्धगुणाः । तदेवमभिहितं सकलमंगलमयं परमात्मतास्वरूपं ॥

इत्थं स्वरूपं परमात्मरूपं, निधाय चित्ते निरवद्यवृत्तेः । सद्ध्यानरंगात्कृतशुद्धिसंगा, भजंतु सिद्धिं सुधियः समृद्धिं ॥ १ ॥
भगवत्समयोक्तीना-मनुसारेणैष वर्णितोऽस्ति मया । परमात्मत्वविचारः, शुद्धः स्वपरबोधकृते ॥ २ ॥

॥ इति श्रीजिनभक्तिसूरींद्रचरणारविंदसमाराधकैः श्रीजिनलाभसूरिभिः संगृहीते आत्मप्रबोधग्रंथे परमात्मतावर्णनो नाम चतुर्थः प्रकाशः समाप्तः ॥



# प्रशस्तिः ॥

नरेंद्रदेवेंद्रसुखानि सर्वा—ण्यपि प्रकामं सुलभानि लोके ।
परं चिदानंदपदैकहेतुः, सुदुर्लभस्तात्त्विक आत्मबोधः ॥ १ ॥
ततो निरस्याखिलदुष्टकर्म—व्रजं सुधीभिः सततं स्वधर्मः ।
समग्रसांसारिकदुःखरोध—स्समर्जनीयः शुचिरात्मबोधः ॥ २ ॥

इहात्मबोधकजिनवाग्माहात्म्यं यथा—

न ते नरा दुर्गतिमाप्नुवंति, न मूकतां नैव जडस्वभावं ।
न चांधतां बुद्धिविहीनतां नो, ये धारयंतीह जिनेंद्रवाणीं ॥ ३ ॥
ये जिनवचने रक्ताः, श्रीजिनवचनं श्रयंति भावेन ।
अमला गतसंक्लेशा, भवंति ते स्वल्पसंसाराः ॥ ४ ॥

इति संपन्नः समग्रोऽप्यात्मप्रबोधग्रंथः ।

यदुक्तमादौ स्वपरोपकृत्यै, सम्यक्त्वधर्मादिचतुःप्रकाशः । विभाव्यतेऽसौ शुचिरात्मबोधः, समर्थितं तद्भगवत्प्रसादात्

॥ १ ॥ प्रमादबाहुल्यवशादबुद्ध्या, यत्किंचिदाप्तोक्तिविरुद्धमत्र । प्रोक्तं भवेत्तज्जनितं समस्तं, मिथ्यास्तु मे दुःकृतमात्मशुद्ध्या ॥ २ ॥ श्रीमद्वीरजिनेन्द्रतीर्थतिलकः सद्भूतसंपन्निधिः, संजज्ञे सुगुरुः सुधर्मगणभृत्तस्यान्वये सर्वतः । पुण्ये चांद्रकुलेऽभवत्सुनिहिते पक्षे सदाचारवान् , सेव्यः शोभनधीमतां सुमतिमानुद्योतनः सूरिराट् ॥ ३ ॥ आसीत्तत्पदपंकजैकमधुकृत् श्रीवर्द्धमानाभिधः, सूरिस्तस्य जिनेश्वराख्यगणभृज्जातो विनेयोत्तमः । यः प्रापत् शिवसिद्धिपंक्तिशरदि (१०८०) श्रीपत्तने वादिनो, जित्वा सद्बिरुदं कृती खरतरेत्याख्यं नृपादेर्मुखात् ॥ ४ ॥ तच्छिष्यो जिनचंद्रसूरिगणभृज्जज्ञे गुणांभोनिधिः, संविग्नोऽभयदेवसूरिमुनिपस्तस्यानुजोऽभूत्ततः । येनोत्तुंगनवांगवृत्तिरचनां कृत्वाऽर्हतः शासने, साहाय्यं विदधे महत् श्रुतपरिज्ञानार्थिनां धीमतां ॥ ५ ॥ तत्पट्टे जिनवल्लभो गणधरः सन्मार्गसेवापरः, संजातस्तदनु प्रभूतमहिमा सद्भव्यबोधप्रदः । अंबादत्तयुगप्रधानपदभृन्मिथ्यात्वविध्वंसकृन्नेता श्रीजिनदत्तसूरिरभवद्वृंदारकाभ्यर्चितः ॥ ६ ॥ तदनु श्रीजिनचंद्रः, सूरिवरोऽभूत्स्वधर्मनिस्तंद्रः । सन्मणिमंडितभालः, प्रणताखिलशिष्टभूपालः ॥ ७ ॥ तद्वंशे गुणनिधयः, सम्यग्विधयो मुनीश्वराः शुचयः । श्रीजिनकुशलमुनींद्र-श्रीजिनभद्रादयोऽभूवन् ॥ ८ ॥ जज्ञे मुनींद्रस्तदनुक्रमेण, श्रीजैनचंद्रो मुनिमार्गसेवी । प्रबोधितो येन दयापरेण, अकब्बराख्यः पतिसाहमुख्यः ॥ ९ ॥ तदन्वभूत् श्रीजिनसिंहसूरिः, स्वपाटवाह्लादितसर्वसूरिः । ततः स्वधीनिर्जितदेवसूरिः, स्फुरत्प्रतापो जिनराजसूरिः ॥ १० ॥ तच्छिष्यो जिनरत्नसूरिसुगुरुः श्रीजैनचंद्रस्ततो, गच्छेशो गणभृद्वरो गुणगणांभोधिर्जगद्विश्रुतः । तत्पट्टोदयशैलमूर्ध्नि सुतरां भास्वत्प्रतापोद्धुरः, पूज्यः श्रीजिनसौख्यसूरिरभवत्सत्कीर्तिविद्यावरः ॥ ११ ॥ तत्पादांबुजसेविनो युगवराः सत्यप्रतिज्ञाधराः, श्रीमंतो जिनभक्तिसूरिगुरवोऽभूवन् गणाधीश्वराः । यैरुद्दामगुणैः

स्वधर्मनिपुणैर्निःशेषतेजस्विनां, तस्थे मौलिपदे प्रकामसुभगैः पुष्पैरिव प्रत्यहं ॥ १२ ॥ तेषां विनेयो निरवद्यवृत्तिः, प्रमोदतः श्रीजिनलाभसूरिः । इमं महाग्रंथपयोधिमध्या-त्समग्रहीद्रत्नमिवात्मबोधं ॥ १३ ॥ हुताशमध्यावसुचंद्र (१८३३) वत्सरे, समुज्वले कार्त्तिकपंचमीदिने । मनोरमे श्रीमनराख्यबिंदरे-ऽयमात्मबंधः परिपूर्णतामयं ॥ १४ ॥ यत्किंचिदुत्सूत्रमपप्रयोगं, निरर्थकं चात्र मया निबद्धं । प्रसद्य तच्छोध्यमलं सुधीभिः, परोपकारो हि सतां स्वधर्मः ॥ १५ ॥ इहादौ श्रांत्यादिनेति शेषः ॥ यावन्महीमंडलमध्यदेशे, विराजते शैलपतिः सुमेरुः । तावन्मुनींद्रैरभिवाच्यमानो, जीयादसौ ग्रंथवरात्मबोधः ॥१६॥ प्रथमादर्शेऽलेखि, क्षमादिकल्याणसाधुना श्रीमान् । संशोधितोऽपि सोऽयं, ग्रंथः सद्बोधभक्तिभृता ॥ १७ ॥

॥ इति श्रीमदात्मप्रबोधग्रंथः संपूर्णः ॥